# दशरूपक-तत्त्वदर्शनम्

( उत्तरप्रदेश-शासनेन पुरस्कृतम् )

रामजी उपाध्यायः एम. ए., डी. फिल्., डी. लिट्.



प्रकाशकः

भारतीय-संस्कृति-संस्थानम्

महामनापुरी, वाराणसी-५ ( B. H. U. )

तृतीय-संस्करणम् ३२०।
विक्रमसंवत्सरे २०४३

विक्रेता

१ भारतीय-संस्कृति-संस्थानम्
महामनापुरी, वाराणसी-५

२ चौखम्भा विद्याभवन
चौक, वाराणसी

३. मोतीलाल बनारसीदास
चौक, वाराणसी

४. चौखम्भा विश्वभारती
चौक, वाराणसी

५ मेहरचन्द लक्ष्मनदास
दरियागंज, नई दिल्ली

६. ग्रन्थम्
रामबाग, कानपुर



छात्र-संस्करणम् रूप्यकाणि १५/-

पुस्तकालय संस्करणम् रूप्यकाणि २५/-

मुद्रक
चन्द्रज्योति प्रेस,
लालपुर, वाराणसी

# तृतीयसंस्करणस्य भूमिका

संस्करणेऽस्मिन् पूर्वतो व्यतिरेकेण नाटकीय-समीक्षाव्यवहारोपगमस्य प्रवृत्तयो द्विधा पल्लविताः सन्ति—

(१) पूर्वाचार्याणां मतानां परिशोधनम् ।

(२) भरतादिभिरस्पृष्टानामभिनवनाट्यशास्त्रीयप्रवृत्तीनां सानुसन्धानं समाहरणं च ।

परिशोधनं यथा—पताका प्रकरीभेद. पृ० १०, अर्थप्रकृति- पृ० १३, कार्यफल-भेदाः १६, मिश्रवस्तु पृ० २३, प्रासङ्गिकभवः २७ सन्धि ३२, सन्ध्यङ्गसन्ध्यन्तरभेदाः ३९, वृत्तान्तोन्नयविधा ४५, प्रवेशक-विष्कम्भकयोरवस्थानम् ५६, चूलिका-नेपथ्योक्ति-भेदाः ६१, ६६, उत्तमादीनां लक्षणम् ९१, पीठमर्दः ९९, नान्दी १५७ ।

अभिनवप्रवृत्तयो यथा—व्यभिचारिवृत्तम्, विवरणकृद् वृत्तम् पृ० ९, अङ्कान्त-रालेऽपि प्रवेशक ५७, आकाशे ६८, एकोक्ति. ( *Soliloquy* ), एकोक्ति-स्वगत (Aside) भेदाः ७६, प्रतिक्रियोक्ति ७८, दूरस्थाभाषणम् ७९, कार्यनायक फलनायकाः ८८, अप्राणिनायकः ९३, अनायक-भूमिका ९५, प्रच्छन्नकामिता ११७, प्रधानवृत्तेः प्रभावः १४६, वृत्ते प्रयुक्ताः १४९, प्रस्तावनालेखक स्थापक. १५७, अन्तिमेऽङ्के पूर्ववृत्तान्तो सारसंग्रह नायकानां सम्पातश्च १६७, १६९, अङ्कपूत्यर्थयोजनाः १७०, कार्यस्थल्या वैचित्र्यम् १७२, कार्यकालस्य सकेत १७४ ।

भरतानन्तरं संस्कृतनाटकरचनाया अनवच्छिन्नं सातत्यं दृश्यते । तेषु तेषु नाटकेषु भरतस्य दशरूपलक्षण-बाह्यानि नूतनतत्त्वान्याविर्भूतानि । तानि अन्विष्य यथास्थान-मुपस्थाप्य च दशरूपकलक्षणं सवर्धितमत्र । भरतस्य दशरूपलक्षणस्यांशतः पूरकोऽयं ग्रन्थ । अपरञ्च रूपकानुशीलनस्याभ्यन्तराङ्गिकपद्धतिर्विकसिता वर्तते । तुलनात्मकदृष्ट्या प्राच्य-पाश्चात्त्ययो समीक्षासरण्योः परस्परादानप्रदानमुखेन तयो प्रचय काम्यः । स चात्र प्रकल्पित ।

बहूनां दशरूपलक्षणकारिकाणामभिप्राया अभिनवगुप्तादीनां प्राचीनटीकाकाराणामपि स्पष्टा नासन्निति ग्रन्थेऽत्र तत्र तत्र प्रबोधितम् । एतादृशानामस्पष्टार्थानामंशानां तात्पर्यस्य निर्धारणं लक्ष्यभूतानां नाटकसंहितानामनुसन्धानेनात्र चिकीर्षितम् ।

प्रस्तुतेन शास्त्रार्थेन रूपकरहस्योद्भेदपरायणानामध्येतॄणां परितोषो भविष्यतीति विश्वसिति—

महामनापुरी

उपाध्यायो रामजी वाराणसी–५ ( B. H. U. )

महाशिवरात्रि २०४२

# प्रथमसंस्करणस्य भूमिका

पाणिनेः पूर्वं विरचितं नाटकीयं साहित्य शास्त्रं च सर्वथा विलुप्तमेव । तत्सम्बन्धि-सन्दर्भाणां नामान्यपि सम्प्रत्यनुसन्धानविषयतां गतानि । पाणिनिस्तावन्नटसूत्रमिति नाट्यशास्त्रीयं विधानं प्रथमं सजानीते । नटसूत्रमिदं नामशेषमेवाधुना ।

खीष्टाब्दस्य प्रारम्भिके युगे भरतो नाट्यशास्त्रमित्याकरग्रन्थं रचयामास । स्वकीये युगे यानि रूपकाणि प्राप्याण्यासन्, यच्च नाट्यशास्त्रीयं विज्ञानं समभवत् तत्सर्वमाश्रित्योपजीव्य च तेनालौकिकप्रातिभचक्षुषा बुद्धिलाघवेन चानन्यतमोऽयं ग्रन्थः प्रणीतः । अनया रचनया वस्तुतो भारतस्य प्राचीनतमा काव्यकलाप्रौढिः सोत्कर्षं महिमान्विता सती विश्वविजयिनी बभूव ।

भरतस्य नाट्यशास्त्रं सहस्राब्दं यावत् परवर्तिनाट्यशास्त्राचार्याणां कवीनां चानन्य प्रकाशस्तम्भ इव व्यराजत । पश्चाद् बालानां सुखबोधाय ख्रीष्टस्य दशमे शताब्दे नाट्यशास्त्रस्य दशरूप-विषयककारिकाः संक्षिप्य धनञ्जयो दशरूपकमिति लघुग्रन्थं प्रणिनाय । दशरूपकमिदं परवर्तिनाट्यशास्त्राचार्यैर्बहुमतमुपजीवितमेव । अधुना प्रायशः सर्वेषु विश्वविद्यालयेषु नाट्यशास्त्र-विषयस्याध्ययनायेदं प्रथमतो निर्धार्यते । एष ग्रन्थो नैतावत्सम्मानमर्हतीत्यस्माकं मतम्, यतो हि नामात्र कतिपयस्थलेषु भारतीयं नाट्यशास्त्रमकारणमेव व्युत्क्रम्य, अन्यत्र चासदपि नवीनतत्त्वं संयोज्य धनञ्जयेन वितथं व्यभिचरितम् । अस्य पुस्तकस्य तृतीयसंस्करणस्य पृष्ठानुक्रमेण तादृशानि कतिपय-निदर्शनानि अधोनिर्दिष्टानि—

(क) धनञ्जयः प्रकरीवृत्तं स्वार्थाय परार्थाय च मन्यते । भरतानुसारेण प्रकरीवृत्तं परार्थायैव भवति । पृष्ठम् १०, ११

(ख) धनञ्जयो बिन्दुं प्रतिमुख-सन्धावेवावधारयति । वस्तुतो बिन्दुस्तु वृत्तान्तराणामनुसन्धानायाद्यन्तं सर्वेषु सन्धिषु प्रवर्त्यते, यथा भरतेन निर्दिष्टम् । पृष्ठम् १४, पताका-प्रकर्योरपि गर्भविमर्शसन्ध्योरवधारणं नासत् । पृष्ठम् १५

(ग) कार्यं तु धनञ्जयानुसारेण फलमेव । भरतानुसारेण कार्यं तु समारम्भो (Action) भवति । पृष्ठानि १५-१७

(घ) मिश्रं नाम कथावस्तु-प्रकारोऽभिनव एव धनञ्जयेन कल्पितः । नैतत् प्रमाणितम् । पृष्ठम् २३

(ङ) अर्थप्रकृतीनां सन्धीनां च यथासंख्यं धनञ्जयो निर्दिशति । नैतत् समर्थनीयम् । पृष्ठम् ३४

(च) अङ्के केवलं दृश्यं वस्तु भवति, अर्थोपक्षेपके च केवलं सूच्यं भवतीति न सर्वथा साधु । पृष्ठम् ४५–५०, १६२, १६३

(छ) 'अङ्कावतारोऽर्थोपक्षेपक' इति धनञ्जयमतमसमञ्जसम् । पृष्ठम् ६०

(ज) धनञ्जयेन प्रतिपादितं नायकस्य चातुर्विध्यमपर्याप्तम् । पृष्ठम् ८१

(झ) धनञ्जयानुसारेण प्रकरणे उत्पाद्यमेव वृत्तमित्यपर्याप्तम् । त्रिविधं वस्तु तत्र भवति । पृष्ठम् ९२, १९२

(ञ) धनञ्जयानुसारेणेहामृगे मिश्रं वस्तु भवति । अभारतीयमिदं मतं न साधु, मिश्रवस्तुनोऽमान्यत्वात् । पृष्ठम् २०६

(ट) धनञ्जयः शान्त-रसं न मनुते । तस्य मतेन शान्तोऽनभिनेयः । नैतदुपपन्नम् । पृष्ठम् १७४-१७७ ।

(ठ) धनञ्जयानुसारेण 'काव्यार्थभावनास्वादो नर्तकस्य न वार्यते ।' नैतत् सत्यम् । पृष्ठम् १७९

एते विषया अन्ये सजातीयाश्च पुस्तकेऽस्मिन् प्रकरणमनुसृत्य विवेचनपुरस्सरं समुपस्थापिताः ।

धनञ्जयस्य कारिका अतिसंक्षिप्ताः । अत एव बहुषु स्थलेषु स्पष्टा न सन्ति । कीथ-महाभागेन सत्यमेव प्रोक्तम्—

The text (of Daśarūpa) is often unintelligible save in the light of the Nāṭyaśāstra itself etc.

दशरूपकस्यैव त्रुटिर्यथास्मात् भारतीयनाट्यशास्त्रस्याभिनवभारत्यादीनामनुसन्धानेनापाकृतास्माभिः ।

कतिपयान्युपयोगीनि नाट्यतत्त्वानि धनञ्जयेनानवधानेन दशरूपके परित्यक्तानि । तानि यथास्थानमस्माभिर्भारतीय नाट्यशास्त्रमनुसृत्यात्र संगृहीतानि ।

भारतीये नाट्यशास्त्रेऽपि यत्र कुत्रचिदसामञ्जस्यं प्रतिभाति तदपि समीक्षितम् ।

'अपूर्वोऽयमुपक्रमोऽस्मिन् युगे नाट्यशास्त्रालोचनदिशायां नवीनां सरणिं विदधातु' ।

# विषयानुक्रमणिका


१. नाट्य-विमर्श:
नाट्यम् १, रूपकम् २, नृत्तम् ४, नृत्यम् ६

२. इतिवृत्तयोजना, अर्थप्रकृतयश्च — ८
आधिकारिक वृत्तम्, प्रासङ्गिक वृत्तम् ८, व्यभिचारिवृत्तम् ९, विवरणच्छद-वृत्तम् ६, पताका-प्रकरी-वृत्तम् १०–१२, अर्थप्रकृतयः १३, बीजम् १३, बिन्दु १४, कार्यम् १५।

३. पताका स्थानकम् — १८

४. कथावस्तु-प्रकारः — २१
प्रख्यातम् २१, औत्पत्तिकम् २१, उत्पाद्य-चमत्कार २२, मिश्रवस्तु-वैषम्यम् २३, प्रतिसंस्कार्यम् २५।

५. कार्यावस्था: — २६
आरम्भ २६, प्रयत्न. २६, प्राप्तिसम्भव २७, नियताप्तिः ३०, फलागमः ३१।

६. सन्धि सन्ध्यङ्गानि च — ३२
सन्ध्यवस्था-यथाक्रमम् ३४, अनुसन्धि ३५, सन्ध्यङ्गयोजना-विशेषः ३६, सन्ध्यङ्गप्रयोजनानि ३७।

७. सन्ध्यन्तराणि — ३९

८ प्रकरण-वक्रता — ४२
अध्यवसायोत्कर्षः ४२, उपकार्योपकर्तृत्व-परिस्पन्द. ४२, अङ्कवक्रता ४२, वस्त्वन्तर-वक्रता, गर्भनाटक-वक्रता, प्रकरण-विनिवेशनम् ४३, अभिनवरसो-द्यानप्रकरणम्, फलान्तरान्तर्निप्रकरण-वक्रता, रहस्यनिगूहनम्, प्रतिसंस्कार-जन्यवक्रता ४३।

९. वृत्तान्तोपनयविधा. — ४५
दृश्यम्, अदृश्यम्, नाट्यनिर्देशोचितं दृश्यम् ४६, श्रव्यम् ४७, कल्प्यम् ४९, सूच्यम् ५०।

१०. अर्थोपक्षेपकाः सूचनोपायाश्च — ५२
प्रवेशक ५२, अर्थोपक्षेपकाणामवस्थानम् ५६, अङ्कास्यम् ५९, अङ्कावतार चूलिका ६०, नेतारः ६१, नेपथ्योक्ति ६६, आकाशवाणी, आकाशे ६८, विशेषण-योजना ६९, स्वगतम् ७०, जनान्तिकम्, पताकास्थानकम्, मञ्चः ७१।

११. आख्यविधानम् नाट्यधर्माश्च — ७२
प्रकाशम् ७२, स्वगतम् ७३, एकोक्ति. ७४, प्रतिक्रियोक्ति. ७८, आकाश-भाषितम् ७९, दूरस्थाभाषणम् ७९।

१२ जनान्तिकापवारितक-स्वगतानि ८०

त्रिपताककर ८०, अपवारितकम् ८१, जनान्तिकम् ८२।

१३ नायकविमर्श ८७

प्रधाननायकः ८८ कार्यनायक ८८ धीरोदात्तादय ८६ योनिदृष्ट्या नायक ९१, अप्राणि-नायका ९२ तिर्यक्प्रकृति ९३, वनस्पतय ९५, लता ९५, प्रतीकपात्राणि ९५ अनायक-भूमिका ९५, नायकभेदा ९६।

१४ अङ्गनायका ९८

उपनायक अनुनायक, पीठमर्द ९८, विदूषक ९९, विटः १०४ शकार १०६ कञ्चुकी १०८, चेट १११ दूत देवदूत, प्रणिधि, गुप्तचर ११२, बाह्यसहाया ११३, प्रतिनायक, नायकगुणाः ११४।

१५ नायिकाविमर्श ११६

अष्टविधा नायिका ११८, यौवनभेद १२३, अन्यस्त्री, साधारणस्त्री (वेश्या), योषिदलङ्कारा १२५, प्रच्छन्नकाम्या नायिका १२७ विप्रलब्धा नायिका, गणिका १२८ स्तापिका प्रच्छन्न प्रव्राजिका १२९, चेटी १३० दूती १३३ सखी-सहचरी १३४, प्रतिहारी १३६ परिजन १३७ यवनी, नायकपात्रयोर्भेद १३८।

१६ वृत्ति १३९

भारती १४१, सात्वती १४२ आरभटी, कैशिकी १४३, वृत्तीनां भेदा वृत्तयो नायकगुणाश्च १४४ वृत्तेरनुबन्धा १४५ प्रधानवृत्त प्रभाव १४६ पञ्चमी वृत्ति १४७, वृत्तिविधानम् १४८, वृत्त प्रसङ्गा १४९।

१७ प्रवृत्ति १५०

१८ पूर्वरङ्ग, प्रस्तावना, नान्दी च १५४

पूर्वरङ्गीया प्रस्तावना १५५ आमुखीया प्रस्तावना १५६ नान्दी १५७।

१९ अङ्क १६३

पात्रसंख्या १६६, अङ्का उचितानम्, रसयोजना १६७ कार्यसातत्यम् १६८, पूर्ववृत्तानां सारसंग्रह १६८ अङ्कादौ नायकस्य मनोवृत्ति १६९, अन्तिमेऽङ्क नायकानां सम्पात १७०, अङ्कप्रत्ययोजना १७१, कार्यस्थल्या आयामो-वैचित्र्य च १७३ वृत्तस्य कार्यकालस्य संकेत १७५, रूपकेषु वर्ज्यानि दृश्यानि १७७।

२० रूपकलक्षणम् १८२

नाटकम् १८२, प्रकरणम् १८७, नाटिका १९२, प्रकरणिका भाण १९२, प्रहसनम् १९६ डिम १९८, व्यायोग समवकार १९९, वीथी २०१, उत्सृष्टिकाङ्क २०४, ईहामृग २०५, अन्यविशेषा २०६।

२१ रसविमर्श

शृङ्गार २११, वीररस २१३, रौद्र २१४, करुण २१५ अद्भुतः २१५ बीभत्स २१७ भयानकः हास्यः १२७, शान्त २१८, अनुभावा- सञ्चारि भावा २१६।

# नाट्य-विमर्शः

त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते ।
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥

अभिनयैर्युक्तो लोकस्वभावो नाट्यमिति भरतः परिभाषते—

लोकस्य चरितं नाट्यम् । ना० शा० ३६.११

योऽयं स्वभावो लोकस्य नानावस्थान्तरात्मकः ।
सोऽङ्गाद्यभिनयैर्युक्तो नाट्यमित्यभिधीयते ॥

ना० शा० १९.१४४

इदमेवाभिनय-तत्त्वं नाट्यं विशेषयति । अभिनयेन युक्तं वस्तु लौकिक-पदार्थ-व्यतिरिक्तं भवति । यथोक्तमभिनवगुप्तेन—नाट्यं नाम लौकिकपदार्थ-व्यतिरिक्तं वृत्तान्तास्वादनरूप-संवेद्य वस्तु रसस्वभावमिति ।[1] अत एव नटगताभिनयप्रभावसाक्षात्कारायमाणैकघनमनोलसनिश्चलाध्यवसेयः समस्तनाटकाद्यन्यतमकाव्यविशेषाच्च द्योतनीयोऽर्थः ।

## नाट्यम्

नाट्ये तु लोकस्वभावः प्रत्यक्षीक्रियते । तत्र लोकस्वभावे नायकादीनां वैयक्तिकं पौराणिकं वा चरित्रं नाममात्रमेवाङ्गीक्रियते । रामादीन् नायकान् समाश्रित्य यत्किञ्चिल्लोके सम्भावनीयं, तत् सर्वं प्रातिभचक्षुषा दृष्टमिव निबध्नाति कविः । इयमभिनवा कविसृष्टिर्लोकस्वभावात्मिका रामादीनां समारोपेण तथ्यमिव प्रतिभाति । काव्येषु रामादय उपलक्षणं लोकस्य ।

दशरूपके धनञ्जयो नाट्यं परिभाषते—अवस्थानुकृतिर्नाट्यम्' इति । भरतानुसारेण तु—

अवस्था चैव विज्ञेया सुखदुःखार्थसम्भवा ॥ ३२.३४९

धनञ्जयानुसारेण रुदितगीत-हासस्मितादयोऽवस्थाः सन्ति ।[2] अभिनवगुप्तानुसारेण रतिशोकाद्या अवस्था भवन्ति ।[3] रामचन्द्रगुणचन्द्रानुसारेण नेतुरवस्था प्रधानवृत्तविषये कायवाङ्मनसां व्यापारः ।[4]

---

१. ना० शा० ११ अधिकृत्य भारती ।

२ दशरूपके ४.३० ।

३. ना० शा० २१.२ अधिकृत्य भारती ।

४ नाट्यदर्पणे १.३५ ।

नाटकादिषु प्रख्यातवृत्त-सम्बन्धि-चरितस्यानुकृतिः सम्भवेत्, किन्तूत्पाद्य-वस्तुना भाणप्रहसनादीनां नायकस्य चरितमुत्पाद्यत्वादनुकृतिं न सहते, कल्पित-स्यानुकरणाभावात्। प्रत्यक्षीकरणस्य यो हेतुर्नटस्याभिनयः स एवानुकृते-स्तात्पर्यार्थः। रूपकेषु नायकादीनां यच्चरितं रच्यते, तदेव पुनः रङ्गपीठे नटैरभिनयेन प्रत्यक्षीक्रियते। इयं प्रक्रिया नाट्यप्रकरणेऽनुकृतिर्भवति।[1]

नाटकादिषु कविर्यत् संक्षेपेण निबध्नाति, नाट्ये नटस्तद् बहुलीकरोति प्रास-ङ्गिकाङ्गहारादिभिः। नाट्यं तु अभिनयविशिष्टं भवति। नाटकादीनि रूपकाणि समाश्रित्य नाट्यं प्रवर्तते। नाट्यं तु प्रयोगप्रधानम्।

## रूपकम्

यदाश्रित्य रूप्यतेऽभिनीयते तद् रूपं रूपकं वा स्यात्। 'अभिनयैर्यस्य (काव्यस्य) वाणी विन्यस्तरूपा भवति, तद् रूपम्' इति भवभूतेरधोवचनेन निष्कृष्यते—

तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः।
शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम्॥

उत्तररामचरिते ७·२०

अभिनवगुप्तानुसारेण रूपं रूपकं वा काव्यविशेषः। स विशदयति—रूप्यते प्रत्यक्षीक्रियते योऽर्थस्तद्वाचकत्वात् काव्यानि रूपाणि। अर्थादभिज्ञान-शाकुन्तलादीनि काव्यानि रूपकाणि सन्ति, येषां प्रत्यक्षीकरणमभिनयद्वारेण नटैर्विधीयते। अपरेऽपि नाट्यशास्त्रविदोऽभिनवगुप्तस्यैतन्मतं समर्थयन्ति। तथा हि—

रामचन्द्रगुणचन्द्रौ—

'रूप्यन्तेऽभिनीयन्ते' इति रूपाणि नाटकादीनि[2]।

---

१ नाट्येऽनुकरणं भरतस्याभिप्रेतम्। स परिभाषते—
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्। १·११२
किन्तु भरत एव सूचयति—
परचेष्टानुकरणाद् हासः समुपजायते॥ ७·१०
अत एवाभिनवगुप्तेन व्याख्यातम्—इदं प्रत्यक्षमनुकीर्तनमनुव्यवसायविशेषो नाट्य-स्यापरः पर्यायः। नानुकार इति भ्रमितव्यम्। अनेन भाण्डेन राजपुत्रस्यान्यस्य वानुकृतमित्यन्यादिबुद्धेरभावात्।…… येनानुव्यवसाय-विशेषविषयीकार्यं नाट्यम्। ना० शा० १·१०७ अधिकृत्य भारती।

२ नाट्यदर्पणे १·१।

ढुण्ढिराजः —

रूप्यतेऽभिनयैर्यत्र यस्तु तद् रूपकम्[1]।

सागरनन्दी

अभिनेयं काव्यं रूपकम्।[2]

धनञ्जयस्तु रूपकं नाट्यादभिन्नं मन्यते। तद्यथा—

अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते। रूपकं तत् समारोपात्। १.७

नैतन्मतं नाट्यस्य रूपकस्य च पूर्वोक्तां परिभाषां संवदति। अन्यच्च—रूपकं तु नाटकादि कविकर्म, काव्यत्वात्। नाट्यं पुनः नटकर्म।[3] अतएव नैतयोर्द्वयोः पर्याय पुरस्करणीय।

नाट्यप्रबन्धस्तावद् रूपकं स्यात्, किन्तु नाट्यं नास्ति रूपकम्। तद्यथा महिमभट्टेनोद्धृतम् प्रयोग एव नाट्यमिति।[4]

रूपं रूपकञ्च समानमेव। नाटकमपि परतः रूपकस्य पर्याय एवाभिमतम्।[5]

रूपकभेदाः

भरतो रूपकस्य दश भेदान् निर्दिशति—

नाटकं सप्रकरणमङ्को व्यायोग एव च।
भाणः समवकारश्च वीथी प्रहसनं डिमः॥
ईहामृगश्च विज्ञेयो दशमो नाट्यलक्षणे॥ १८.२, ३

इमानि रूपकाणि अभिनेयार्थेषु प्रमुखता भजन्ते। अतः परमपि कानिचिदभिनेयानि सन्त्येव। प्रथमन्दे तेषां निदर्शनं नाटकलक्षणरत्नकोशे, भावप्रकाशने,

---

१. मुद्राराक्षसस्य टीकायां नान्दीप्रकरणे।

२. नाटकलक्षणरत्नकोशे २ अधिकृत्य विवृतेः।

३. नाट्यं नटवृत्तमिति ना० शा० १.१ अधिकृत्य भारती। नटस्तु नर्तकाद् भिन्न एव। नटः प्रयोक्ता सन् प्रयोज्यस्य रूपं धारयति। नैवं धारयति, मैवं करोति नर्तकः। सागरनन्दी समर्थयति—नाटकं नाटकस्य उत्थानमिति।

४ अनुभावविभावानां वर्णना काव्यमुच्यते।
तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जकम्।
व्यक्तिविवेके पृ० २० प्रथमाध्याये।

५. रूप्+णवुल्=रूपकम्। रूप्+अच्=रूपम्। उभे पर्याये। नटोऽत्र नटतीति नाटकम्। नट+धुञ्।

साहित्यदर्पणे च कृतम्।[1] एतानि च नृत्तानि नृत्यानि, उपरूपकाणि वा शास्त्रकारैर्बहुविधं वर्णितानि।

## नृत्तम्

क्षितौ रत्नच्छाया फलनमुदके वीचिललितम्
शिखिन्यर्चि प्रेङ्खा सहजगतिवैचित्र्यमनिले।
तडित्क्रीडा व्योम्नि प्रकटसुभग पञ्चसु पर
प्रविष्टो भूतेषु प्रभवति हि नृत्तस्य महिमा॥

यथा नाट्यं नटस्य कर्म तथा नृत्तं नर्तकस्य कर्म। विशुद्धदृष्ट्या नर्तनं नृत्तं नाम गात्रविक्षेप एव।[2] गात्रविक्षेपस्य बहवो विशेषा प्रयोजनमनुसृत्या ङ्गहार', रेचक करण पिण्डीबन्धाश्च भवन्ति।[3] अपरमेवाभिनय विशिष्टं नृत्तम्।[4]

---

१ नाटकलक्षण-रत्नकोशे—नाटिका, त्रोटकम् गोष्ठी, सल्लाप, शिल्पक काव्य, हल्लीसक श्रीगदित भाणिका भाणी दुर्मल्लिका प्रेक्षणक सट्टक रासक नाट्यरासक उल्लाप्यकञ्च।
भावप्रकाशने—गोष्ठी सल्लाप शिल्पक डोम्बी श्रीगदित भाण भाणिका प्रस्थान, काव्य प्रक्षणक नाट्यरासक रासकम् उल्लोप्यकं हल्लीस दुर्मल्लिका मल्लिका कल्पवल्ली, पारिजातक सट्टक नाटिका च।
साहित्यदर्पणे—नाटिका त्रोटकम्, गोष्ठी सट्टकम् नाट्यरासकम् प्रस्थानकम्, उल्लाप्यम् काव्यम्, प्रेङ्खणकम् रासकम्, सलापकम् श्रीगदितम् शिल्पकम्, विलासिका दुर्मल्लिका प्रकरणिका हल्लीस भाणिका च।
अष्टादश प्राहुरुपरूपकाणि मनीषिण।
विना विशेष सर्वेषां लक्ष्म नाटकवन्मतम्॥ साहित्यदर्पणे ६ ६

२ अङ्गहार विनिष्पन्न नृत्त तु करणाश्रयम्। ना० शा० ८ १६
गात्राणामङ्गोपाङ्गाना विलासेन क्षेप न तु केनचित् कदम्भानेन।
ना० शा० १४४ अधिकृत्य भारती

३ भरतस्य नाट्यशास्त्रे १०८ करणानि ३२ अङ्गहारा चत्वारो रेचकाः, पञ्चदश पिण्डीबन्धाश्च चतुर्थेऽध्याये वर्णिता.। नृत्तोपयोगस्तत्र कथं भवतीति अभिनवगुप्तो दिङ्मात्रं निदिशन्ति—या काचिद् वस्त्वेत्युच्यते तस्या पश्चान्नृत्तेन परितोषण कार्यम्। तन्मध्ये च तदर्थमायुग्मवाहनकर्मभावाद्यनुकारी अङ्गप्रयोगो विधेय। ना० शा० ४ २५८ अधिकृत्य भारती।
करणैरङ्गहारैश्च निष्पन्नं नृत्तमुच्यते।—सगीतचन्द्र ३८४

४ विदेशेऽपि नृत्तमभिनय विशिष्टमभवत्। मिलेट महोदय The Art of the Drama नामके ग्रन्थे विशदयति—In Greece dance was not a gay movement of the feet but it was an expression of ideas by means of human body just as music was an

भरत कथयति मौलिकनृत्तस्य विशेषम् -

अत्रोच्यते न खल्वर्थं कञ्चिन्नृत्तमपेक्षते।
किन्तु शोभां प्रजनयेदिति नृत्तं प्रवर्तितम् ॥ ४.२६४

अङ्गप्रयोग-सौष्ठवमत्र शोभा।

पश्चान्नृत्तेन गीतकार्थं भरतो योजयति—

यत्र सन्निहिते कान्ते ऋतुकालादिदर्शनम्।
गीतकार्याभिसम्बद्धं नृत्तं तत्रापि चेष्यते ॥ ४.३१८

अन्यच्च

गीतप्रयोगमाश्रित्य नृत्तमेतत् प्रवर्त्यताम्। ४.२६८
पूर्वेणैव विधानेन प्रविशेच्चापि नर्तकी।
गीतकार्थं त्वभिनयेद् द्वितीयासारितस्य तु ॥ ४.२८३
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत्। ४.२८४

नर्तकी डोम्बिकादि-सम्बद्धं गीतमगायत्, पश्चादानुयुगिकमङ्गहारादिकं प्रादर्शयच्च। स तु शृङ्गारप्रकाशस्य प्रान्यिक इव प्रतिभाति।[1]

गीतप्रबन्धेन नृत्तप्रबन्धेन वा नृत्तस्य सामञ्जस्य सम्यक् प्राक्कलितमभिनवगुप्तेन। तेन निर्दिष्टा नृत्तोचिता गीतप्रबन्धा अष्टविधाः सन्ति—डोम्बिका, भाण., प्रस्थानं, शिद्गकः, भाणिका, रामाक्रीड, हल्लीसक, रासकमिति।[2] एतानि नृत्तप्रबन्धाः।

उपर्युक्तविवेचनान्तरमभिनवगुप्त परिगणयति —

एवमिदं च नृत्तं सप्तभिः प्रकारैर्भणित एव प्रभृतम्। तथा हि शुद्धमेव नृत्तं रेचकाङ्गहारात्मकम्। ततो गीतकार्याभिनयोन्मुखम्। ततोऽपि गानक्रियामात्रानुसारि, वाद्यतालानुसारि च। प्रेंखणोरःकम्पपार्श्वनमनोन्नमनचरणसरणस्फुरितकम्पितभ्रूतारा-परिस्पन्दकटिच्छेदाङ्गवलनमात्ररूपम्।[3]

---

expression of ideas in sound and sculpture an expression of ideas in stone Aristotle also says—Dancing is imitation of actions, characters and passions by means of posture and rhythmical movements pp. 29, 30.

१. आख्यानकवंशं तल्लभते यदभिनयन् पठन् गायन्।
प्रान्मिक एक कथयति गोविन्दवदवहिते सदसि ॥

२-३. ना० शा० ४.२६८ अधिकृत्य।

सङ्गीतकमिति उभयाभिसारिकाया प्रियङ्गुसेनाया अधोवचनेन प्रमाण्यते—राजसभायां पुरन्दरविजयं नाम सङ्गीतकमनुष्ठेयमिति। अपरं सगीतकं मदनाराधनं तत्रेव चर्चितम्।

डोम्बिकादीनि नृत्तानि नाट्यमेवेति वादिनां पक्षोऽभिनवगुप्तोऽधोलिखितेन प्रमाणेन शातयति—

१ नाट्यस्य प्रयोगो नायकादीनां रूपं धृत्वा नटैः पात्रीभूय च कल्प्यते, किन्तु नृत्तं नर्तकैः प्रयुज्यते। नर्तकानां स्वरूपाच्छादनं न भवति।

२. नाट्ये तु प्रीतिर्व्युत्पत्तिश्च सामाजिकानामभिप्रेतं किन्तु नृत्ते नर्तकया गानेन, वाद्येनाङ्गहारादिना च मनोरञ्जनमेव प्रेक्षकस्याभीप्टम्।

३. नाट्ये रसस्य परा निष्पत्तिर्जायते। नृत्ते तु गीतवाद्याङ्गहारादीनां सौष्ठवं प्रचुरायते। नृत्तेऽपि क्वचिद् रसस्य निष्पत्तिः सम्भवतीति प्रतिपादयत्यभिनवगुप्तः।[1]

४. नाट्ये वाच्यव्यङ्ग्यार्थाभिनयो भवति, नृत्ते पुनर्गात्रविक्षेपेण वाच्यार्थ एव प्रतिपाद्यते।[2]

५ नाट्ये आहार्याभिनयस्य प्राधान्यं विलसति, नृत्ते तस्याभावोऽस्ति। अभिनवगुप्तानुसारेण समस्ताभिनय-प्रयोगचित्रस्य भित्तिस्थानीयमाहार्यम्।[3]

नृत्यम्

धनञ्जयानुसारेण 'नृत्यं भावाश्रयं' भवति। तत्तु गीतात्मकं नृत्तमेव। भरतकोशे नृत्तनृत्येऽधिकृत्य समर्थितम्—

यद्यप्येतौ समानार्थौ प्रत्ययौ क्तक्यपौ स्मृतौ।
नृत्ते नृत्यैकदेशत्वात् नृत्तशब्दोऽपि वर्तते॥ पृ. ३४०

अपरं च धनञ्जयस्य नृत्तमभिनवगुप्तस्य शुद्धमेव नृत्तं रेचकाङ्गहारात्मकम्।[4] परवर्तियुगेऽभिनयोन्मुखं नृत्तं नृत्यं वा सर्वमुपरूपकेषु परिगृहीतमिति नाटकलक्षण-रत्नकोश भावप्रकाशन साहित्यदर्पणादिषु तथा लक्षणोदाहरणैर्व्यक्तमेव।

---

१. ना० शा० ४ ३०६ अधिकृत्य।

२ ना० शा० ४ २६३-२६८ अधिकृत्याभिनवगुप्तेन विषयोऽयं विस्तरशः स्पष्टीकृतः।

३ ना० शा० २११ अधिकृत्य।

४ नृत्तं ताललयाश्रयम्। दशरूपके १.६

एतान्युपरूपकाणि न सन्ति भावाश्रितानि यथा धनञ्जयो मन्यते, अपि तु तेषु रसनिष्पत्ति सम्यग्जायत इति निश्चप्रच लक्षणोदाहरणे प्रतीयते।

रसाश्रित नाट्यं भावाश्रित नृत्यमिति भेदाभिप्रायो न साधु निर्दिष्टो धनञ्जयेन। किं न प्रोक्त भरतेन,

न भावहीनोऽस्ति रसो न भावो रसवर्जित।
परस्परकृता सिद्धिस्तयोरभिनये भवेत्॥ ६ ८

कालिदासो नृत्ये रस समर्थयति। तस्य मालविकाग्निमित्रे शर्मिष्ठया विरचितायाश्चतुष्पद्या छलिकनृत्येन प्रयोगो यथारसमभवदिति तेन वर्णितम्।[1]

भावप्रकाशने शारदातनयो भरतमतमिद समर्थयति। तथा हि—

वृक्षत्व-शिंशपात्वादेर्यथा तादात्म्यमुच्यते।
तथा भवेत् काव्यबन्धे तादात्म्य रसभावयो॥ १०. १५४

अभिनवगुप्तस्य युगेऽपि नृत्त नाट्याद भिन्नमिति प्रायोवाद साधु प्रचरति स्म।[2]



१ मा० २ ६

२ ना० शा० ४ २६७ अधिकृत्य भारती—'नाट्य च कस्मान्न नृतम्' 'कस्माद् हेतोरितन्नृत्त न नाट्यम्' इति प्रश्नास्तत्र व्याकृता।

## इतिवृत्तयोजना, अर्थप्रकृतयश्च

रूपकाणि दशविधानि सन्ति। तेषां भेदक-वैशिष्ट्यं वस्तु नेतारं रसं चापेक्ष्य कल्प्यते। प्रथमं तावद् वस्तु विविच्यते।

भरतानुसारेण वस्तु, कार्यम्, इतिवृत्तं च नाट्यशरीरमेव। शारदातनयो विशदयति—

चरितं नायकादीनामितिवृत्तमिति स्मृतं। भावप्रकाशने ७ १३२

विशिष्टाभिप्रायेण वस्तु—

अनुक्रमेण कथिता वस्तु वाक्यार्थमालिका इति वामनाचार्यः काव्यानुशासनस्य संस्कार-परिच्छेदे।

अर्थात् कथापरिधानेन समलंकृतमितिवृत्तं कथावस्तु वस्तु वा भवति। तद् द्विविधं भवति—आधिकारिकम्, प्रासङ्गिकञ्च। यद् वृत्तमाश्रित्य फलं प्राप्यते तदाधिकारिकम्।[1] तदेव धनञ्जयेन दशरूपकेऽपि प्रपञ्चितम्। तद्यथा—

अधिकारः फलस्वाम्यमधिकारी च तत्प्रभुः।
तन्निर्वर्त्यमभिव्यापि वृत्तं स्यादाधिकारिकम्॥ १.१२

प्रासङ्गिकं वृत्तं तु भरतानुसारेण नाट्यकथायामाधिकारिकमुपकुर्वाणमानुष-

---

१ (क) प्रकरणेऽस्मिन् फलं तु प्रधानफलमेव। रूपके नायकानामनेकफलानि स्युर्नाम। तेषु 'कविर्यत्फलमुत्कर्षेण विवक्षति तत्प्रधानफलम्। ना० शा० १८ ५ अधिकृत्य भारती।

(ख) इतिवृत्तं तु नाट्यस्य शरीरं परिकीर्तितम्। ना० शा० १९.१

इतिवृत्तं द्विधा चैव बुधस्तु परिकल्पयेत्।
आधिकारिकमेकं स्यात् प्रासंगिकमथापरम्॥ ना० शा० १९ २

यत्कार्यं हि फलप्राप्त्या सामर्थ्यात् परिकल्प्यते।
तदाधिकारिकं ज्ञेयमन्यत् प्रासंगिकं विदुः॥ ना० शा० १९.३

किमिदं कार्यमिति विवृण्वन्नभिनवगुप्तः प्राह—प्रधानत्वेन सम्पाद्ये फले यो ज्ञानेच्छा-प्रयत्नक्रियालक्षण आरम्भः, तत्कार्यम्। ना० शा० १९ ३ अधिकृत्य भारती।

भरतेन परतो विशदीकृतम्—

कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम्॥ १९.४

ङ्गिकं च भवति ।[1] प्रासङ्गिकं वृत्तं द्विविधं भवति—पताका प्रकरी च ।[2] पताकास्थानकमपीतिवृत्तमिति सन्धार्य शारदातनयस्तु भावप्रकाशने त्रिविधं प्रासङ्गिकं वृत्त मन्यते । एतन्मतं प्रागेव प्रतिपादितमभिनवगुप्तेन[3] ।

**व्यभिचारि वृत्तम्**

अधिकारिकं वस्तु पताका प्रकरी चेति त्रयं व्यतिरिच्य व्यभिचारि वृत्तमन्यदेव । तत्र न स्वार्थो दृश्यते परार्थो वा । तत्र प्रधाननायक एव नायको भवति । यथोत्तरचरिते रामेण हतः शम्बूको द्वितीयेऽङ्के । व्यभिचारिवृत्तसम्पादनेन नायको गच्छति पञ्चवटीं या नायकयोः प्रमुखकार्यस्थली बभूव । नान्यथैव सम्भवेत् ।[4]

**विवरणकृद् वृत्तम्**

अन्यदेव विवरणकृद् वृत्तम्, यतो भूतकालिकरहस्यमयघटनाख्यानेन कथाप्रवाहे सौष्ठवं प्रदाय रमणीयतापाद्यते । यथाभिज्ञाने शकुन्तलोत्पत्तिवृत्तम् ।

आनन्दवर्धनाचार्यानुसारेण स्वायत्तसिद्धेर्नायकस्य वृत्ते पताका प्रकरी च

---

१. तस्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् । भट्टतोतानुसारेण 'प्रसज्यते प्रधानफलनिष्पत्तये' इति प्रसङ्गः । तत आगतम् । नाट्यदर्पणे—परस्मैयमत्तादागत प्रासङ्गिकम् । १.१०

२. 'पताका प्रकरी च शोभाधायके' इति महाभारतानुसारेण तयोर्वैशिष्ट्यमाकलनीयम् । तथा हि—

विवेश खाण्डवप्रस्थं पताकाध्वजशोभितम् । आदि प० २१३ ३१

सिक्तसम्मृष्टपन्थानं पुष्पप्रकरशोभितम् ॥ आदि प० २१३.३२

आभ्यां प्रसङ्गाभ्यां पताकावृत्तस्यैश्वर्योच्छ्रययोजना प्रकरीवृत्तस्य च सुखदानुभूतिप्रकरणं व्यज्येते ।

ध्वन्यालोकलोचनानुसारेण प्रकीर्णत्वात् प्रकरी, प्रसिद्धत्वात् पताका च भवतः । तृतीयोद्योते पृष्ठम् ३७१

अन्यत्र—प्रकर्षेण स्वार्थानपेक्षया करोतीति प्रकरीति मतमभिनवगुप्तस्य । ना० शा० १९.२५ अभिनवभारती ।

३ भावप्रकाशने—

प्रासङ्गिकाभिधं वस्तु नाटके भवति त्रिधा ।

पताका-प्रकरीयुक्तपताकास्थानकक्रमात् ॥ सप्तमाधिकारात्

अभिनवगुप्तः —

पताकास्थानकमितिवृत्तमेवोच्यते । ना० शा० १९.३० अभिनवभारती ।

४ नाट्यशास्त्रीयानुसन्धानम् पृ० ८४ ।

न विद्यते। केवलं सचिवायत्तसिद्धेर्नायकस्य, प्रकरी पताका-व्यपदेश्यतयोभय-प्रकारसम्बन्धी व्यापारविशेषः प्रकरीपताकाशब्दाभ्यामुक्त ।[१]

उभयविधं प्रासङ्गिक वृत्त (पताका प्रकरी च) परार्थेन सह स्वार्थस्य साधक-मिति धनञ्जयः प्रतिपादयति।[२] धनञ्जयस्येद मतमभिनवभारतीं भारतीयं नाट्यशास्त्र च नानुवर्तत इत्यस्माकं प्रतिपाद्यम्।

भरतानुसारेण तु प्रासङ्गिकवृत्तेषु केवलं पताका-कोटिकं परार्थसाधकं स्वार्थ-साधकं च भवति, न पुन प्रकर्यास्तथात्वं विद्यते। प्रकरी तु केवलं परार्थायैव भवति। तद्यथा—

यद्वृत्त तु परार्थं स्यात् प्रधानस्योपकारकम्।
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता॥

ना० शा० १९ २४

फलं प्रकल्प्यते यस्या. परार्थायैव केवलम्।
अनुबन्धविहीनत्वात् प्रकरीति विनिर्दिशेत्॥

ना० शा० १९ २५

अनानुबन्धेनैव स्वार्थं सम्भवतीति स्पष्टमेव। अनुबन्धस्तु अभिसन्धिरित्य-भिनवगुप्तेनान्यत्रापि प्रतिपादितम्।[३]

एते कारिके विवृण्वन्नभिनवगुप्त आह यद् वृत्त तु परार्थं स्यादिति। यस्य सम्बन्धि वृत्त सविदनुसन्धान परस्य प्रयोजनसम्पत्तये भवदपि स्वप्रयोजन सम्पा-दयति। अत एवाह प्रधानवच्च कल्प्येतेति। सचेतनानुसन्धाना पताका सिद्धि-प्रधानस्योपकारिणी। एव सुग्रीव-विभीषण प्रभृतिरपि रामादिनोपक्रियमाणे रामादेरात्मनश्चोपकाराय प्रभवमाणे प्रसिद्धि-प्राशस्त्ये सम्पादयतीति।[४] फल प्रकल्प्यते यस्या इति यतश्च तत परार्थमेव केवल सर्वमनुतिष्ठति सा प्रकरी। ......प्रकर्षेण स्वार्थानपेक्षया करोतीति। 'प्रकरी भवति कुन्दमालायां वाल्मीकि-वृत्तान्ते' इति नाट्यदर्पणे रामचन्द्रेण सम्यक् प्रतिपादितम्। रामचन्द्रानुसारेण नाटकेषु क्वचित् पताका, अन्यत्र प्रकरी, कार्यं वा प्रामुख्य भजते। कुन्दमालाया

१ ध्वन्यालोकलोचन पृष्ठम् ३६५

२. प्रासंगिक परार्थस्य स्वार्थो यस्य प्रसंगत। दश० १ १३

३ अङ्क यद्वर्णनीय वस्तु, तत्तावद् द्विधा प्रधान तदुपयोगि च। तदुपयोग्यपि किञ्चिद्वैवशादुपयोग याति, किंचिदभिसन्धिबलात्।
ना० ओ० सी० अभिनवभारती द्वितीये भागे पृष्ठ ४१८

४ भरत. पताकाया. पर्याय. पण इति वचनेन तदेव समर्पयति—
कृत्वा पण पताका व्यवहार. स भवितव्यस्तु। ना० शा० २७ ७२

वाल्मीकिवृत्त प्रकरी मुख्यैव विलसति। अभिज्ञानशाकुन्तलस्य पञ्चमाङ्कान्ते ज्योतिः शकुन्तला नयतीति प्रकरी।

अपरं च प्रकरी तु भरतानुसारेणानुबन्धविहीना भवति। अस्मिन् प्रकरणेऽनुबन्धस्य कोऽभिप्राय इत्यभिनवगुप्तः परोक्षरीत्या पताकासम्बन्धिकारिकां विवृण्वन् प्राह—'यस्य सम्बन्धिवृत्त सविदनुसन्धान परस्य प्रयोजनसम्पत्तये भवदपि स्वप्रयोजनं सम्पादयतीति'। अत्र सविदेवानुबन्धो नाम—मदर्थं त्वमेतत्कुरु, त्वदर्थमहमेतत्करिष्यामीति।[१] प्रकरीचरितेऽनुबन्धो न भवति। यथा उत्तररामचरिते वाल्मीकेर्वेणीसंहारे च वासुदेवस्य चरिते। अथ च पताकाचरितेऽनुबन्धोऽवश्यम्भावी। यथा रामायणे रामसुग्रीवयोः रामविभीषणयोर्वा।

प्रकरी नाम यदनुबन्धविहीना वर्तते, तर्हि पताका वस्तुतः सानुबन्धेत्यवगम्यते। अत एव धनञ्जयो दशरूपके निरूपयति—

'सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक्' इति।

अनया कारिकया स्पष्टं भवति यद् धनञ्जयमतेनानुबन्धस्तु विस्तार एव। इममर्थमुरीकृत्य धनिकः कारिका स्पष्टयति—

दूरं यदनुवर्तते प्रासङ्गिकं सा पताका। सुग्रीवादिवृत्तान्तवत्। यदल्पं सा प्रकरी।[२] नैतत्साधु।

धनिक-धनञ्जययो पताकाभेदक मत भारतीय नाट्यशास्त्र वाभिनवभारतीं वा न स्पृशतीति प्रतिभाति। धनञ्जयस्य प्रकरी-विवेचनं चिन्त्यमेव।[३]

अपरे नाट्यशास्त्राचार्याः सागरनन्दी, महाराजो भोजः, शारदातनय., रामचन्द्र गुणचन्द्रौ, विश्वनाथ, सिंहभूपालश्चेतद्विषयके संशयाब्धौ उन्मज्जननिमज्जन प्रवणा' सन्ति। यावदवधिकं पताकानायकस्य स्वार्थाय वृत्तं प्रचरति तावदवधिकं पताकावृत्तं भवति। ततः पश्चात् पूर्वं चाधिकारिकं वृत्त प्रसरति। पताकानायक प्रधाननायकस्य सहायीभूय कथान्त यावत् प्रवर्तते।

---

१ संविद् क्रिया प्रतिज्ञायामाचारे ज्ञानसागरे।
सम्भाषणे क्रियाकारे सकेते नाम्नि तोषिणि ॥ इति मेदिनी ७७ ४२
अत्र क्रियाकार Agreement अर्थ M Williams : Sanskrit-English Dictionary.

२. प्रकरी त्वनल्पापि भवति। तद्यथा कुन्दमालायामुत्तररामचरिते च वाल्मीकिवृत्तम्।

३ दशरूपकस्य टीकाकारो बहुरूपमिश्रोऽनुबन्धेऽनुग्राहकता निदर्शयन्नभिनवगुप्तस्य व्याख्यामेवोरीकरोति। स कथयति निरनुबन्धक तदनुग्राहकमात्रं यदितिवृत्तं सा प्रकरीति।

पताकावृत्तस्योदाहरणं प्रतिमानाटके सुग्रीवचरितं प्रकर्याश्च कुलपत्यके जटायुचरितं स्त ।

पताका-प्रकर्योर्भेद. सारतोऽग्रेविधो ग्रहणीय —

| पताका | प्रकरी |
|---|---|
| १. पताकावृत्त प्रधाननायक-पताकानायकयोरनुबन्धेन ( पणेन, संविदा वा ) प्रवर्तते | १. प्रकरीवृत्त प्रधाननायकस्य तद्विषयकज्ञानं विनापि प्रवर्तते — दैववशादुपयोगं याति । |
| २. प्रधाननायक-पताकानायका उभौ परस्परमुपकुर्वाणौ क्रमशो लाभान्वितौ भवत । | २. केवलं प्रधाननायकस्य लाभाय प्रकरीनायको यतते । तत्र प्रकरीनायकस्य स्वार्थो नास्ति ।[1] |
| ३. यथाप्रयोगं पताकानायकस्य फलप्राप्तये प्रधाननायक प्रथमं चेष्टते । | ३ प्रकरी नायकस्याभ्यर्थित फलमेव न भवति । |
| ४. पताकानायक सकामश्चेष्टते | ४ प्रकरीनायक एकाकी एवाज्ञात निष्कामं चेष्टते । |
| ५. पताकानायक स्वफलप्राप्त्यनन्तरं कथान्तं यावत् प्रधाननायकस्य सहायीभूतस्य विजयपताकोपलब्धय उपक्रमते ।[1] अनेन विधिना पताकानायकस्त्व साध्यते । | ५ प्रकरी नायक प्रधाननायकस्य सहायता कृत्वा विनिवर्तते । कथान्तं यावत्तस्योपस्थितिर्नास्ति आवश्यकी । |

रूपकादिषु प्रासङ्गिकवृत्तस्य महिमा वैदेशिकनाट्याचार्यैरपि स्वीकृत ।[3]

पताका प्रकरी चार्थप्रकृती परिगणिते । अर्थप्रकृतय पञ्च भवन्तीति भरतेन धनञ्जयेन च निर्दिष्टम् ।

अर्थ काव्यार्थस्तस्य प्रकृतिर्योनिरिति अर्थप्रकृति । काव्यार्थस्तावद् बागङ्गसत्त्वोपेतो भवति ।

१ प्रकर्षेण स्वार्थानपेक्षया करोतीति प्रकरी ना० शा० १९ २५ अधिकृत्य भाष्ये ।

२. अभिमारके १.९ अनुसारत ।

३ *No drama can be praiseworthy, which has not two actions, that is two plots, though one is principal and the other accessory*, European Theories of Drama p. 64.

## अर्थप्रकृतयः

भरतानुसारेण पञ्चार्थप्रकृतय इतिवृत्तसम्बद्धाः सन्ति—बीज, बिन्दुः पताका, प्रकरी कार्यञ्च। किमिदमर्थप्रकृतिर्नाम ? अस्मिन् विषये बहुविकल्पाः सन्ति। भरतेन धनञ्जयेन चार्थप्रकृतिर्न परिभाषिता। अभिनवगुप्तेन भारत्यामर्थप्रकृतिः परिभाषिता—'यत्रार्थे फलं तस्य प्रकृतय उपाया फलहेतव.' इति। अभिनवगुप्तोऽर्थप्रकृतेरन्यसम्मता परिभाषा निदिशति—अर्थस्य समस्तरूपकवाच्यस्य प्रकृतय, प्रकरणानि अवयवार्थखण्डा इत्यर्थप्रकृतय.। अन्येषामेतन्मतं बहुभिर्नाट्याचार्यै स्वीकृतम्। तद्यथा

(क) अर्थप्रकृतय. पञ्च कथादेहस्य हेतव।[1]

(ख) नाटकीयवस्तुन. पञ्च प्रकृतय स्वभावा भवन्ति। नैताद् परित्यज्य नाटकार्या· सम्भवन्ति।[2]

(ग) पार्श्वविच्यात् कथायास्तु प्रकृतिं पञ्चधा स्मृता। नाटकचन्द्रिका

वस्तुतोऽर्थः प्रकर्षेण क्रियते यया सा अर्थप्रकृति.। प्रकृतिस्तु विस्तारेण प्रथनम्। यदि नाम विस्तारेण प्रथनं न भवति, तर्हि अर्थोक्षेपको भवति। उपक्षेपस्तु संक्षेपेण कथनम्। यथा प्रवेशक-विष्कम्भकादिषु भवति।

### बीजम्

बीजं तु सूत्रात्मकं वाक्यं भवति, यस्मान्नाट्यकथावृक्षस्य मूल-स्कन्ध-शाखा-फलादीनि समुद्भवन्ति। तद्यथाभिज्ञानशाकुन्तले नायकयोः प्रणयो नायकस्य पुत्रप्राप्तिश्चेतिद्वयं कथ्यम्। तस्यारम्भोऽघोलिखितबीजाद् भवति—

वैखानस—पुत्रमेव गुणोपेतं चक्रवर्तिनमाप्नुहि।

तस्य बीजस्य पञ्च दशा भवन्ति—उत्पत्तिः, उद्‌घाटनमुद्भेदो गर्भ निर्भेद. फलसमानयनञ्च। फलसमानयन तु बीजसंहार एव।[3]

भरतेन बीजं परिभाषितम्—

स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति।
फलावसानं यच्चैव बीजं तत्परिकीर्तितम्॥ १९.२२

'तत् (बीज) क्वचिदुपाय-मात्रं, क्वचित् फलमात्र, क्वचिद् द्वयमिति भारत्या-

---

१. शृङ्गारप्रकाशे द्वितीये भागे पृ० ४८२, भावप्रकाशने, पृ० २०४

२. नाटकलक्षणरत्नकोशे पृष्ठं १४

३. ना० शा० १८.१४ अभिनृत्य भारती।

मभिनवगुप्तेन प्रदर्शितम्। तदनुसारेण बीजफलयोरविनाभावसम्बन्धो भवति।[1] अन्यत्र बीजमुपायमात्र भवेत्।[2]

अभिनवगुप्तानुसारेण सर्वेषामङ्गाना योऽर्थो बीजलक्षण।' इत्यादि

दशरूपके बीजस्य सक्षिप्तलक्षण भारतीय नाट्यशास्त्रमनुसरति।

यथा हि स्वल्पोद्दिष्टस्तु तद् हेतुर्बीज विस्तार्यनेकधा। १.१७

बिन्दुस्तु अवान्तरबीजम्। यदा नाट्यकथाया कार्यमेक समाप्यते, तदा परवर्तिकार्यांशस्य सङ्केतो बिन्दुना भवति। एतदेव भरतेन स्पष्टीकृतम्—

प्रयोजनाना विच्छेदे यदविच्छेद-कारणम्।
यावत्समाप्तिर्बन्धस्य स बिन्दु परिकीर्तित ॥ १९.१३

बीजस्य बिन्दोश्च विस्तार परिधिरभिनवगुप्तेन प्रदर्शित। तदनुसारेण बीज च मुखसन्धेरेव प्रवर्तयितमानमुन्मेषयति, बिन्दुस्तदनन्तरमिति विशेषोऽनयो। द्वे अपि तु समस्तेतिवृत्तव्यापके।[3]

बीजाधानात्पूर्वमपि नाट्यकथाया भूमिका-भागो प्रायशो वर्तते। तद् हि यथा कृषिकर्मणि बीजवपनात् पूर्वं बीजस्याङ्कुरणाय वर्धनाय च भूमिर्निर्मीयते, तथैव बीजन्यासाय कथाभूमिका क्वचित् सन्ध्यन्तररूपेण स्यात्। तद्यथाभिज्ञाने प्रस्तावनानन्तर नायकस्य मृगयोपक्रम।

बिन्दु

अवान्तरकथाबीजमेव बिन्दुर्भवति। प्रत्येकावस्थाया अङ्कस्य चान्तिमेऽशे बिन्दुना भवितव्यम्, यतो हि नामाङ्कान्तेऽवान्तरकार्यसमापने कथा विच्छिद्यते। तर्हि परवर्तिकार्यस्य कथानुसन्धान बिन्दुद्वारेण भवति। अभिनवगुप्तानुसारेण प्रत्यङ्कान्त बिन्दुर्भवति। स तु अनुसन्धानाभिधायिवाक्यम्।[4]

अभिनवगुप्तानुसारेण बीजेन सर्वव्यापारा, बिन्दुनानुसन्धानं, कार्येण निर्वाहि—सन्दर्शन प्रार्थना व्यवसायरूपास्तिस्रोऽर्थसम्पाद्ये कर्तुं प्रकृतय'। अन्यच्च बीजात् प्रभृति प्रयोजनाना विच्छेदे यदविच्छेदकारण। यावत् समाप्ति-बन्ध स तु बिन्दुः इति बिन्दुरूपार्थप्रकृतिर्निर्वहणपर्यन्त व्याप्नोति।[5]

---

१ फलमपि च भविष्यदुपायाविनाभावाद् बीजमित्युच्यते। ना० शा० १९.२२ अधिकृत्य भारती।

२ तच्च (बीज) क्वचिदुपायमात्र क्वचिद् द्वयम्। ना० शा० १९.२२ अधिकृत्य भारती।

३ ना० शा० १९.२३ अधिकृत्य भारती। ४. ना० शा० १८.३३ अधिकृत्य भारती

५ ध्वन्यालोकलोचने पृ० ३७०, ४१८

बिन्दौ यत्सूत्ररूपेण निगद्यते, तदेव प्रवेशके विष्कम्भके वा सविस्तरं प्रपञ्च्यते' इति विशदयन् भरतः प्राह —

अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरण-नाटकविषये प्रवेशकः संविधातव्यः ॥ १८.३३

तद्यथा मालतीमाधवस्य चतुर्थाङ्कान्ते बिन्दुरथोविधः —

माधवः —( विचिन्त्य ) न खलु महामांसविक्रयादन्यमुपायं पश्यामि ।

एतं बिन्दुमाश्रित्य चतुर्थपञ्चमाङ्कयोर्मध्ये शुद्धविष्कम्भके माधवस्य महामांसपणनं प्रवर्तते ।

अपर च—इतिवृत्तस्य बिन्दुसूत्रस्यूतस्य यदा प्रारम्भावस्था पूर्णत्वमेति तदाङ्कच्छेदो बिन्दुद्वारानुसन्धीयमानद्वितीयाङ्काभिधेयरूपो विधेय. ।[1]

एतन्मतं संक्षेपेण धनञ्जयो दशरूपके प्राह —

अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् । १.१७

धनञ्जयस्तु नाट्यकथायामाद्यन्तव्यापिनं बिन्दुं यत्नावस्थायामेव निवेशयतीति अभारतीयं मतं चिन्त्यमेव । कथाशरीरे सर्वासामवस्थानामन्ते बिन्दुना भवितव्यमेव ।

बिन्दुनाम स्वाभिप्रायद्योतक इति महाभारतस्योक्त्या प्रमाण्यते—

यथाप्सु पतितः शक्र तैलबिन्दुर्विसर्पति । अनु० ६१.८१

एतदेवानुसृत्याभिनवगुप्तेन व्याकृतम्—

तैलबिन्दुवत् सर्वव्यापकत्वादपि बिन्दुः ।

बिन्दुं परिभाषमाणः सिंहभूपालो रसार्णवसुधाकरे निदर्शयति—

जलबिन्दुर्यथा सिञ्चंस्तरुमूलं फलाय हि ।
तथैवायं मुहुः क्षिप्तो बिन्दुरित्यभिधीयते ॥

कार्यम्

नाटके वस्तुत आद्योपान्तं कार्यात्मकं वर्णनं बाहुल्येन भवति । तत्र कार्यं द्विविधं भवति—अवान्तरकार्यं महाकार्यं च । प्रत्येकस्य सन्धिषु एकैकं कार्यं प्रचरति । अन्तिमे सन्धौ महाकार्यं भवति, पूर्ववर्तिषु सन्धिषु महाकार्यस्योपकारीणि अवान्तरकार्याणि भवन्ति । यथाभिज्ञानशाकुन्तले नायकयोः पुनः समागमनं निर्वहणसन्धौ महाकार्यमस्ति । एतदर्थं तत्र मुखसन्धौ नायकयो. परस्पर-

1. ना० शा० १८.१३ अधिकृत्य भारती ।
पूर्वोत्तरयोरङ्कयोरसम्बद्धार्थत्वं माभूदिति पूर्वाङ्कस्यान्ते बिन्दुर्निबन्धनीय' ।

दर्शनाभिलाषो, प्रतिमुखसन्धौ सङ्गमनोपक्रम., गर्भसन्धौ गान्धर्वोद्वाह., विमर्शसन्धौ नायिकाप्रत्याख्यानं अङ्गुलीयकदर्शनेन नायिकाचिन्तनमित्येतानि सन्ति अवान्तरकार्याणि। अर्थप्रकृतौ यत् कार्यं गृह्यते तत्तु महाकार्यमेव मुख्यफलकारकम्। अवान्तरकार्याणि अवान्तरफलकारकाणि भवन्ति।[1]

भरतानुसारेण कार्यस्याधोलिखिता परिभाषा युज्येत—

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते।
तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम्॥ १९ २६

एतां कारिकां विवृण्वन्नभिनवगुप्त प्राह—

'प्राज्ञै. प्रधाननायक पताकानायक-प्रकरीनायकैश्चेतनरूपै. यद्वस्तु फलरूपं प्रयुज्यते सम्पाद्यते, सम्पाद्यत्वेनानुसन्धीयते, तत्फलप्रयोजनो य. सम्पूर्णतादायी पूर्वपरिगृहीतस्य प्रधानस्य बीजाख्योपायस्य फलम् आरभते इत्यारम्भशब्दवाच्यो द्रव्य-क्रिया गुण प्रभृति. सर्वोऽयं (यस्य) सहकारी (तत्) कार्यमित्युच्यते। चेतनै कार्यते फलमिति व्युत्पत्त्या। सम्यगिति प्रभुमन्त्रोत्साहशक्तित्रयसम्पन्नैरित्यर्थः। तेन जनपद कोश-दुर्गादिक व्यापार-वैचित्र्यसामाद्युपाय-वर्गं इत्येतत् सर्वं कार्येऽन्तर्भवति।[2]

अन्यच्च— यत्कार्यं हि फलप्राप्त्या सामर्थ्यात् परिकल्प्यते।
तदाधिकारिकं ज्ञेयमन्यत् प्रासङ्गिकं विदुः॥ १९.३

इति विवृण्वन्नभिनवगुप्त समर्थयति—

'प्रधानत्वेन सम्पाद्ये फले यो ज्ञानेच्छाप्रयत्नक्रिया लक्षण आरम्भ तत्कार्यम्'।

अन्यत्रापि—

यदर्थं काव्यस्यारम्भ. सिद्धे यस्मिन् समापनम्।
आनुषंगिक - सम्पन्न तत्कार्यमिति कथ्यते॥
नाटक ल० र० कोशे १.२७

फल त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च।
फलं यदितिवृत्तस्य स त्रिवर्ग इतीरित॥
साध्यत्वादेव कार्यस्य सर्वान्ते तत्प्रयोजयेत्। भा प्र. पृ. २०५
अपेक्षितं तु यत्साध्यमारम्भो यन्निबन्धनः॥

---

१. साहित्यदर्पणेऽवान्तरकार्यविषये नियमितम्—'युक्तो न बहुभि. कार्यैः॥ ६ १३
२ गा. ओ. सी. अभिनवभारती तृतीयभागे १६ पृष्ठे।

समापनं तु यत्सिद्ध्यै तत्कार्यमिति सम्मतम् । सा. द. ६.६
कार्यस्य कारणं प्राज्ञैस्तद्बीजमिति कथ्यते ॥
यस्तुनस्तु मतं तस्य धर्मकामार्थलक्षणम् ।
फलं कार्यमिदं शुद्धं मिश्रं वा कल्पयेत् सुधीः ॥ रसार्णव० ३.१८

परवर्तिनाट्याचार्येषु केवलं रामचन्द्रो नाट्यदर्पणे नाट्यशास्त्रमभिनवभारतीं चानुसृत्यार्थप्रकृतिं कार्यं च विवृतवान् । सोऽर्थप्रकृतिस्थाने उपाय इति पदं प्रयुक्तवान् । अनन्तरं स उपायान् व्याचष्टे—

बीजं पताका प्रकरी बिन्दुः कार्यं यथारुचि ।
फलस्य हेतवः पञ्च चेतनाचेतनात्मकाः ॥१.२८

स कार्यं विवृणोति – साध्ये बीजसहकारि कार्यम् इति । प्रधाननायकपताकानायक-प्रकरीनायकं प्रधानफलत्वेनाभिप्रेते बीजस्य प्रारम्भावस्थोत्क्षिप्तस्य प्रधानोपायस्य सहकारी सम्पूर्णतादायी सैन्यकोश-दुर्गसामाद्युपायलक्षणो द्रव्य-गुण-क्रिया-प्रभृति सर्वोऽर्थ कार्यम् ।

कार्यं तु फलमिति भ्रान्तेः कुतस्त्यं मातिगूढम् । प्रथमं तावत् तत्सम्बन्धि-नाट्यशास्त्रीयकारिकायाः पाठभेद एव भ्रान्तेः कारणम् । अभिनवगुप्तेनाद्योल्लिखिता कारिका कार्यलक्षणं प्रतिपादयितुं मुख्यतः प्रथिता—

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।
तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम् ॥ ११.२६

अस्याः कारिकायाः पाठभेदेनात्रोल्लिखितं रूपं मूलाद्भिनत्ति—

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।
यदर्थश्च समारम्भः तत्कार्यमिति कीर्तितम् ॥[1]



१. मूलाद् भिन्नोऽयं पाठो नाट्यशास्त्रस्य कार्यविषयकमन्यत्र प्रतिपादितं मतं नानुबध्नाति । अस्मिन् प्रसङ्गे द्रष्टव्याधोल्लिखिता कारिका ।
आसां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यास एकभावेन फलहेतुः प्रकीर्तितः ॥

# पताका-स्थानकम्

सूचनोपायमेवाहुः पताकास्थानकं बुधाः ।भावप्र० ७ १४०

पताकावृत्तं प्रधाननायकस्य फलप्राप्तौ आनुकूल्यं साधयति। तत्र च पताकानायकस्य बहुतरेतिवृत्ते व्यापकता भवति। पताकास्थानकेऽपि तादृशं किञ्चिद् वृत्तं भवति येन प्रधाननायकस्य फलप्राप्तौ आनुकूल्यं जायते, किन्तु तत्र तु परिमितेऽसिवृत्ते व्यापकत्वमस्ति। पताकानामक कश्चित् पुरुषविशेष प्रधाननायकस्य साहाय्यमाचरति ।[1] पताकास्थानकस्य नास्ति कश्चिदपरो नायक । पताका प्रासंगिककथा भवति, पताकास्थानकं तु प्रासङ्गिकं वृत्तमात्रमेव ।

चतुर्विधं पताकास्थानकं भवतीति भारतीय मतम्। तेषां सर्वेषां सामान्यं लक्षणमभिनवगुप्तो भरतमनुसृत्य व्याचष्टे—अर्थं प्रयोजनमुपायश्च कर्मकरण-व्युत्पत्त्या । अन्यस्मिन्नुपाये प्रयोजने वा चिन्तिते अन्य उपायान्तरप्रयोजनान्तर-लक्षण प्रकर्षेण युज्यते सम्बध्यते यत्रेति तत्पताकास्थानकम्। पताकास्थानकं तु मुख्यमर्थं विचित्रयति ।[2]

प्रथमपताकास्थानक द्विविधं भवति—प्रयोजनानुसारि, उपायानुसारि च। प्रयोजनानुसारिपताकास्थानके कस्यचित्सविधानस्यारम्भे यत्प्रयोजनमुन्नीयते, तस्माद्भिन्नमेव प्रयोजन परिणामे प्रणीयते। फलत सहसैवानाकलिता फलोन्मुखता तस्मात् प्रवर्तते ।[3] अस्योदाहरणमभिनवगुप्तो निदिशति —यथा रत्नावल्या सागरिकाया पाशावलम्बन-प्रवृत्ताया वासवदत्तेयमिति मन्यमानो यदा राजा पाश मोचयति तदा तदुक्त्या सागरिका प्रत्यभिज्ञाय— हा कथ मे प्रिया सागरिका ? अलमलमतिमात्रमित्यादि ।' इदं प्रयोजनस्योदाहरणम्। उपायानुसारि-पताकास्थानके पुन प्राक्कलितोपायस्य विघटनानन्तर सहसोपायान्तरप्राप्तिर्नाम्नाऽन्ये

१ तेन सहकारित्वसामान्यात् तत्समार्थाचरणलक्षणात् [पताकास्थानकस्य] पताकासादृश्यमिति यावत् । ना० शा० १८.३० अधिकृत्य ।

२ यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्य प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानक तु तत् ॥
एतद्विवृण्वन्नभिनवगुप्तो व्याख्याति—तेन पताकास्थानकमितिवृत्तमेवोच्यते ।
तल्लिङ्ग =मुख्यार्थे वैचित्र्यमुत्पादयन् ; लिङ्गयति विचित्रयति ।
आगन्तुकेन भावेन=आगन्तुकभावस्य सिद्धयर्थम् ।

३ सहसैवार्थसम्पत्तिर्गुणवत्युपकारत । ।
पताकास्थानकमिद प्रथम परिकीर्तितम् ॥ ना० शा० १९ ३१

वर्तते। तत्र जीमूतवाहनस्य शङ्खचूडप्राणरक्षणपटस्य कञ्चुकिना वासोयुगलार्पणम्।

द्वितीये पताकास्थानकेऽतिशयोक्त्यलङ्कारमवलम्ब्य संश्लिष्टं यत्कथ्यते, तद्वचनमात्रमपि मूलप्रयोजने सहकारित्वेन प्रवर्तयति।[1] तस्योदाहरणं रामाभ्युदये तृतीयाऽङ्के विद्यते सीतां प्रति सुग्रीवस्य सन्देशोक्तिः —

बहुनात्र किमुक्तेन पारेऽपि जलधेः स्थिताम्।
अचिरादेव देवि त्वामाहरिष्यति राघवः॥

अत्र भाविकार्यस्य सूचना वर्ततेऽतिशयोक्त्या

तृतीये पताकास्थानके किञ्चिद् भाविवृत्तं सूच्यं भवति न तु स्पष्टरूपेण, किन्तु अस्फुटरूपेण। तत्र कस्यचित्पात्रस्य वचसि अपूर्वपात्रस्य वक्तव्येन श्लिष्टीकरणमावश्यकं स्यात्।[2] यथा मुद्राराक्षसे।

चाणक्यः — 'अपि नाम राक्षसो दुरात्मा गृह्येत।'

(प्रविश्य) सिद्धार्थकः — 'अज्ज गण्हिदो।'

इत्येतत् प्रत्युत्तरं सन्देहाशयेन प्रयुक्तमौचित्यादिविशेषनिश्चयं करोति।[3] अत्र भावी अभीष्टार्थः सूचितः

अत्र चाणक्यस्य वचनं लीनम् अस्फुटरूपं वर्तते, सिद्धार्थकस्य च सविनयम् नीतिनैपुण्येनोपहितमस्ति।

चतुर्थे पताकास्थानके द्व्यर्थको वचनविन्यासो वर्तते। तत्र प्रासंगिको प्रथमोऽर्थो भवति। श्लेषेण द्वितीयोऽर्थो भाविकर्तव्यविधानं प्रकटयति।[4] यथाभिज्ञाने तृतीयाङ्कान्ते

१. यत्र सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम्।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम्॥ ना० शा० १९.३२

२. अर्थोपक्षेपणं यत्र लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते॥ ना० शा० १९.३३
सविनयम् = वि+नय, विशेषेण नीतिनैपुण्येन।
लीनम् = अस्फुटरूपम्।

३. अहिणवमहुलोलुवो भवं तह परिचुम्बिअ चूअमञ्जरिं।
कमलवसइमेत्तणिव्वुदो महुअर विम्हरिओ सि णं कहं। अभिज्ञानशाकुन्तले ५.१
इति तृतीयपताकास्थानकस्योदाहरणम्।

४ द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
उपन्याससुयुक्तश्च तच्चतुर्थमुदाहृतम्॥
इदमन्योक्ति-समाश्रितम्भाविनमर्थं सूचयति।

'चक्रवाकवधुके आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।'
अत्र शकुन्तला चक्रवाकवधूः । गौतमी रजनी इत्यनेन श्लिष्टार्थः'।
तत्रैवान्योक्तिद्वारेण पताकास्थानकं राजतेऽन्योविधम्—

शकुन्तला—'लतावलय ! सन्तापहारक ! आमन्त्रये त्वां भूयोऽपि परिभोगाय । अत्र शकुन्तला पुनः समागमाय दुष्यन्तं सूचयति । अनेन भाविकार्यं सूचितम् ।

दशरूपके तु द्विविधमेव पताकास्थानक सम्मतम् ।[२] तत्र भारतीयं प्रथम-पताकास्थानकत्रयं न गृहीतम् । दशरूपके धनञ्जयोऽन्योक्तिद्वारेण सूच्य-विधानमावश्यकं मनुते । नैतदावश्यकं भारतीयेषु पताकास्थानकेषु । दशरूपकस्य द्विविध पताकास्थानकं भरतस्य चतुर्थे एव पताकास्थानकेऽन्तर्भवति । पताकास्थानक-प्रपञ्चे दशरूपकस्य भारतीय-नाट्यशास्त्रातिक्रमस्त्रुटिरेव ।

सिद्धेश्वर-भट्टोपाध्यायः पताकास्थानकस्य विनियोग सुष्ठु निदर्शयति । तद्यथा कथावस्तुनो विकासक्रमे कविर्बहुषु स्थानेषु कार्यसरणौ नवं नवं परिवर्तं विधत्ते । सोऽनाशंसितं किंचिन्निवेश्य तेन वर्तिष्यमाणकथांशान् संकेतयति । एतानि सविधानानि पताकास्थानकानि भवन्ति ।[३]

अभिनवगुप्तानुसारेण—गूढार्थ-गूढलेख-प्रहेलिकादि पताकास्थानकादिषु प्रयोज्यम् ।[४]

---

१ ना० शा० १९.३४ अधिकृत्य भारती । चतुर्थपताकास्थानकमधिकृत्य दशरूपकावलोके धनिकेन 'उद्दामोत्कलिका' मित्यादि तुल्यविशेषणात्मक-पताकास्थानकस्योदाहरणं प्रकटितम् । तत्तु चिन्त्यम् । अभिनवगुप्तानुसारेण तत्तु नोदाहरणम् । द्वयर्थता प्रतिपत्तावपि हि नात्रार्थेन सहकारिता कुत्रचिदाचरिता । तस्मादेतद् वीथ्यङ्गस्य व्याहारस्यैवोदाहरणम् ।    ना० शा० १९.३४ अधिकृत्य अभिनवभारती

२ प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचकम् ।
पताकास्थानक तुल्यसंविधानविशेषणम् ॥ दशरूपके १.१४
विशेषणानां साम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः ।

३. In the gradual development of a plot the playwright introduces at places new turns to the course of action and gives hint to the future event by bringing in something not expected at the present moment These spots are पताकास्थानक ।
*Nataka-laksanaratnakośa* p 137

४ ना० शा० १९.९४ अधिकृत्य भारती

# कथावस्तु-प्रकारः

दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥

ध्वन्यालोके ४.४

अत एव काव्येषु कस्यापीतिवृत्तस्य कथावस्तुद्वारेण पुन. पुनर्ग्रहणं न दोषाय ।

कथाद्वारेण नायकचरितस्य (इतिवृत्तस्य) कलात्मको रमणीयतमश्च विन्यासः सम्भवति । नायकचरितमधिकृत्य कविना यत् कथ्यते, तत् कथावस्तु भवति । तच्चरितं कविकृतेन कथावस्तुरूपपरिधानेन समलंकृत्य नाटकादिषु सहृदयानां रञ्जनाय प्रस्तूयते' इत्यनेन कथावस्तुन इतिवृत्ताद् भेदः स्पष्टः । तथापि इतिवृत्त समाश्रित्य कथावस्तु प्रवर्तते, इतिवृत्तं च कथावस्तुनि प्रधानं तत्त्वम् । अतएव इतिवृत्तं कथावस्तु च पर्यायत्वेन गृहीते ।

भारतीये नाट्यशास्त्रे चतुर्विधं कथावस्तु वर्णितम्—प्रख्यातम्, औत्पत्तिकम्, अनार्षम्, आहार्यञ्चेति । एतेषु प्रख्यातमनार्षमाहार्यञ्च पूर्वपरिचितमितिवृत्तमुपजीवन्ति । औत्पत्तिकं पुनः कविना स्वाच्छन्द्येन कल्पितं भवति ।

भरतादिभिर्नाट्याचार्यैः प्रख्यातवस्तु इतिहासादेर्गृहीतमिति स्पष्टीकृतम् । तत्र नाटके वस्तु प्रख्यात भवति, प्रकरणे चानार्षमाहार्यमौत्पत्तिकं च वस्तु वर्तते ।[1] एतदधिकृत्याभिनवगुप्तेन 'प्रख्यातम्—प्रख्याते भारतादौ यद्वस्तु तद्विषयोऽस्य ।[2] इतिहासादौ पुराणान्यपि अभिनवगुप्तेन स्वीकृतानि ।[3]

भरतानुसारेण प्रकरणे—

यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव ।
औत्पत्तिकं प्रकुरुते ॥ ना० शा० १८.४५

औत्पत्तिकं तु सर्वथा समुत्प्रेक्ष्यं वस्तु भवत्येव । अनार्षमिति पुराणादि-

---

१. ना० शा० १८.१०, ४५, ४६

२ प्रख्याते भारतादौ । तेनेतिहासादिप्रमाणवस्तु-विषयकं नाटकम् ।
ना० शा० १८.१० अधिकृत्य भारती

३. ना० शा० १८ १२ अधिकृत्य भारती

व्यतिरिक्तबृहत्कथाद्युपनिबद्धं मूलचरितादि। आहार्यमितिवृत्तं पूर्वकविकाव्या-द्वाहरणीय समुद्रदत्तचेष्टितादि।[1] एतत्सर्वमप्रख्यातम्।[2]

वैदिकसाहित्य उपनिबद्धं कथानकं प्रख्यातमस्ति न वेति विचारणायाम-भिनवगुप्तस्याधोलिखितं निर्देशनं प्रमाणम् —

'अनार्षमिति पुराणादिव्यतिरिक्तबृहत्कथाद्युपनिबद्धम्' इत्यनेन सर्वमार्ष-साहित्यं प्रख्यातमिति सम्भाव्यते।

दशरूपके धनञ्जयस्तु आहार्यमनार्षं च कथावस्तु न स्वीकुरुते। तदनुसारेण तु वस्तु त्रेधा भवति—प्रख्यातम् उत्पाद्यम् मिश्रञ्चेति। प्रख्यातमुत्पाद्यं च भारतीय सुसम्मतञ्च, किन्तु मिश्रं नाम वस्तु भरतो न निर्दिशति। वस्तुतो मिश्रवस्तुनः कल्पना अभारतीया।

उत्पाद्य-चमत्कारः

सर्वैर्नाट्याचार्यैः सम्मतमेव यन्नाटके वस्तु प्रख्यातं भवति। इदं नाटकीयं प्रख्यातवस्तूत्पाद्येन वस्तुना युक्तं विधेयमिति मातृगुप्तेन समर्थितम्। तद्यथा—

पूर्ववृत्ताश्रयमपि किञ्चिदुत्पाद्यवस्तु च।
विधेयं नाटकमिति मातृगुप्तेन भाषितम्॥

भावप्रकाशने ८९१

अत्र पूर्ववृत्तं नृपातमुपजीव्यं वा महाभारतादिषु दृश्यते। उत्पाद्यवस्तु-योजना सदैव प्रतिसंस्कृतं भवति। इदं प्रतिसंस्कृतं वस्तु नाटकेषु विलसति।[3]

एतदेवाभिनवगुप्तेन नाट्यधर्मीतत्त्वं विशदयताधोविधं व्याख्यातम्—अति-वाक्यक्रियोपेतमिति—इतिहासादिवाक्यमतिक्रम्य या उचितरञ्जकेतिवृत्तकल्प-नात्मिका क्रिया। यथा राजशेखरेण रामनिर्वासनाय दशरथवेषराक्षसविरचित-स्वकल्पना, तयोपेतम्।[4]

अनेन निःसन्दिग्धमिदं प्रमाणितं यत् प्रख्यातेन सहोत्पाद्यवस्तु नाटके विलसति, तथापि तन्नाटकीयं वस्तु प्रख्यातत्वं न विजहाति। एतदेव भरतादीनाम-

---

१ ना० शा० १८.४५, ४६ अधिकृत्य भारती

२ बृहत्कथादौ श्रूयन्ते स्वयं वा केनचिदूह्यन्त इत्यप्रख्यातम्।
ना० शा० १८.६३ अधिकृत्य भारती

३. तस्यैवंविधस्य नाटकस्येतिवृत्तं भवति उपात्तं प्रतिसंस्कृतं च। उपात्तं पुराणसिद्धं रामादिवृत्तान्तं। प्रतिसंस्कृतं यदुपात्तं केवलं कविना 'किंचिदुत्पाद्यं वस्त्विति' मुनिवचनात् प्रपञ्चितम्। नाटकलक्षणरत्नकोशे पृष्ठ ७

४ ना० शा० १३.७२ अधिकृत्य भारती।

मितम् । उत्पाद्यांशेन पूर्वकथावस्तुनः केवलं प्रतिसंस्कारः स्यादिति कुन्तकमतमुल्लेखनीयम् । तद्यथा—

उत्पाद्यलवलावण्यादन्या लसति वक्रता ॥ ४.३

'तदयमत्र परमार्थः —विख्यातविविचित्ररुचिरकथाकरण्डकायमाने महाभारतादौ रससमुद्रमुद्रितायामपि कथायां कस्यचिदुत्तराग्रविच्छित्तिकारणविकल्पकाभावात्, सविशेषरसभावजनकाश्चर्यजननकार्यजातानि अविकल्पस्वनिजप्रतिभासमुन्मीलितसमुचितनिरुपमाननिमित्तानि निबन्धनीयानि। सदतिशयवक्रताप्रकारेण प्रकरणेन व्यवहरन् कविः सकलकविरसिकपरितोषणमावहति ।'[1]

अस्मिन् प्रसङ्गे कुन्तकोऽभिज्ञानशाकुन्तले दुर्वाससः शापवृत्तस्यौचित्यमुदाहरति, समीक्षते च—

अविद्यमाने पुनरेतस्मिन्नुत्पाद्यलवलावण्यललाम्नि प्रकरणे निष्कारणविस्मरणवैरस्यमितिहासांशस्येव रूपकस्यापि विरूपकतापत्तिनिमित्ततामवगाहते ।

मिश्रवस्तुवैधर्म्यम्

ध्वन्यालोकलोचने मिश्रवस्तुकल्पनाभिनवगुप्तेन साध्वपास्ता । तद्यथा—

"रघुवंशेऽजादीनां राज्ञां विवाहादि-वर्णनम् नेतिहासेषु निरूपितम् । हरिविजये कान्तानुनयनाङ्गत्वेन पारिजातहरणादिनिरूपितमितिहासेष्वदृष्टमपि । तथार्जुनचरितेऽर्जुनस्य पातालविजयादिवर्णितमितिहासाप्रसिद्धम् ।"[2] यदि नाम रघुवंशहरिविजयार्जुनचरितादीनामितिवृत्तमुत्पाद्यांशयोजनेनापि महाकाव्यत्वात् प्रख्यातमेव, तर्हि मिश्रवस्तुनः क्वावसरः ।

अत एव मिश्रं वस्त्विति धनञ्जयस्यासत्कल्पना ।

धनञ्जयानुसारेण प्रख्यातस्य उत्पाद्यस्य च सङ्करात् मिश्रं वस्तु भवति ।[3] दशरूपके ईहामृगे मिश्रं वस्तु निर्दिष्टम् । तद्यथा,

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिमत् । दश० ३.७२

---

१. एतदेव यौरोपीयैर्विद्वद्भिरप्यनुमोदितम् । तथा हि—

To the poet the highest value lies in his own invention and out of fondness for this, he at his own convenience, changes the actual incident European Theories of Drama P. 316

उभे च उपात्त=fable प्रतिसंस्कृत च dramatic version of it—P. 73

२ ध्वन्यालोकलोचने पृष्ठ ६७, ३६८

३ प्रख्यातोत्पाद्यमिश्रत्वभेदात् त्रेधापि तत् त्रिधा ।
प्रख्यातमितिहासादेरुत्पाद्यं कविकल्पितम् ।
मिश्रं च सङ्करात् ताभ्यां दिव्यमर्त्यादिभेदतः ॥ दशरूपकम् १.१५

भारतीये नाट्यशास्त्र ईहामृगे मिश्रं वस्तु न निर्दिष्टम्। तदनुसारेण तु कस्मिंश्चिदपि रूपके मिश्रं वस्तु न भवति।

मिश्रवस्तु प्रकल्पनेऽपरोऽयं विसंवादो विचारणीयो यन्नाटके प्रख्यातं वस्तु भवतीति भरतस्य धनञ्जयस्य च सम्मतम्। किन्तु प्रायशः सर्वेषां नाटकानां कथावस्तुनि क्वचित्क्वचिदुत्पाद्यकथांशः सम्यग्विलसति। तद्यथा अभिज्ञान-शाकुन्तले पञ्चमषष्ठाङ्कयोः कथा कविकल्पितास्तीति निर्विवादम्। अस्मिन्नुत्पाद्ये कथांशे सत्यपि अस्य नाटकस्य कथावस्तु प्रख्यातमेव मन्यते। प्रख्यातोत्पाद्य-मिश्रणेन कथाया मिश्रता न कल्पनीया। यदि नाम मिश्रं वस्तु स्वीक्रियेत, तर्हि सर्वेषां नाटकानां कथावस्तु मिश्रं भवेदिति महती विप्रतिपत्तिः॥

भोजस्तु पञ्चविधं वस्तु मनुते। तद्यथा—इतिहासाश्रयम्, कथाश्रयम्, उत्पाद्यम्, अनुत्पाद्यम्, प्रतिसंस्कार्यं च। एतेषु इतिहासाश्रयं, कथाश्रयं, उत्पाद्यञ्च भरतस्य क्रमशः प्रख्यातम्, अनार्षम्, औत्पत्तिकञ्च सन्ति। अनुत्पाद्यं भूत-कालिक-वर्तमानराजानां चरितमेव। प्रतिसंस्कार्यं तु परिष्कृतमैतिहासिकमिति-वृत्तमस्ति।[1] प्रतिसंस्कार्यं भरतस्य प्रख्यातवृत्ताद् भिन्नं नास्ति, यतो हि नाम प्रख्यातं वृत्तं नाट्ययोजनायामवश्यमेव प्रतिसंक्रियत एव।

**आभ्यन्तर-विमर्शः**

सिद्धिदृष्ट्येतिवृत्तं त्रिविधं भवति—स्वायत्तसिद्धि, सचिवायत्तसिद्धि दैवा-यत्तसिद्धि च। फलप्राप्तये स्वस्य, सचिवस्य, देवस्य वा सर्वाधिको महिमा वर्तते इति विमर्शनार्थं वस्तुविभागः कल्पनीयः।[2] स्वायत्तसिद्धिस्तत्राभिज्ञानशाकुन्तले, सचिवायत्तसिद्धि मुद्राराक्षसे, स्वप्नवासवदत्ते च दैवायत्तसिद्धि पुनरुत्तरराम-

---

१. इतिहासाश्रयं, कथाश्रयमुत्पाद्यतिवृत्तमनुत्पाद्येतिवृत्तं प्रतिसंस्कार्येतिवृत्तमिति पञ्च प्रबन्धशरीराणि। अनुत्पाद्येतिवृत्तमित्यनेन यथायथमवर्तमानातीतमहाराजादि-वृत्तवर्णनम्। यथा हर्षवर्धनराज्यवर्धनादीनां च वर्णनं हर्षचरिते। इत्यादि शृङ्गार प्रकाशे द्वादशप्रकाशे पृष्ठम् ४-१

२. दैवसाध्यमपि च समुद्रदत्ताभिमन-प्राप्त्यादिकं पुण्योपार्जनं प्रयत्नबहुमानसिद्धये दैवसाहाय्यस्य पुरुषकारस्य फलवत्तितां तद्व्युत्पत्तिलाभाय प्रदर्श्यत इति। ना० शा० १९.९ अधिकृत्य भारती। 'अभिज्ञानेऽपि षष्ठाङ्के—
सानुमती—अथवा श्रुतं मया शकुन्तला समाश्वासयन्त्या महेन्द्रजनन्या मुखाद् यज्ञ-भागोत्सुका देवा एव तथानुष्ठास्यन्ति, यथाचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति'। अनेन दैवसाध्यं स्पष्टं भवति।

चरिते पुष्पदूषितके च विलसन्ति। तत्र स्वयसिद्धे विस एवार्थप्रकृतय।—बीज, बिन्दुः, कार्यं च विलसन्ति।[1]

नाटकादिषु प्राचीनमेव चरितं कथावस्तु-विधानाय ग्रहणीयम्। इतिवृत्त-शब्दस्य निर्वचनादयमर्थः सिद्धः। तथोक्तं भरतेन -

नटनृत्तौ धात्वर्थोऽयं भूतं नादयति लोकवृत्तान्तम्।
रसभावसत्त्वयुक्तं यस्मात्तस्मान्नटो भवति॥ ३५.२७

अभिनवगुप्तः स्पष्टयति—न च वर्तमानचरितानुकारो युक्त'।[2]

आधिकारिकं वृत्तं साक्षात् फलोन्मुखं प्रवर्तते, प्रासङ्गिकं वृत्तं च तस्योपकरणाय प्रवर्तते। एतयोर्द्वयोर्नायकाः सन्ति। स्वार्थपरार्थश्च तेषां व्यापारा विलसन्ति। तेषां घटनाक्रमो वर्तमान इव रङ्गे प्रस्तूयते।

प्रवेशकादिष्वर्थोपक्षेपकेषु सूच्यवृत्तानि आधिकारिकवृत्तस्याङ्गीभूय समायान्ति। न तेषु नायकादीनां प्रत्यक्षाचरणं दृश्यते। तत्र मध्यमाधमैः पात्रैः संवादद्वारेण परेषां व्यापाराः प्रायशो भूतकालिकाः प्रस्तूयन्ते।

पूर्वोक्तेभ्यो वृत्तेभ्यो भिन्नमपि वृत्तं नाटकादिषु सम्भवति। तस्य प्रयोजनं तु नायक-परिचय' स्थितिपरिचयश्च स्याताम्। तेन नायकव्यापाररोधोऽपवाह्यते। तथा हि—अभिज्ञानशाकुन्तलस्य प्रथमाङ्के—

अनसूया—सुणादु अज्जो। अत्थि कावि कोसिओ इत्यारभ्य,

राजा—परस्ताज्ज्ञायत एवेति यावत्। अनेन वृत्तेन शकुन्तलापरिचय प्रकाश्यते। अन्यच्च शकुन्तला परिग्रहणीया न वेति संशयरूपो दुष्यन्तस्य-प्रणय-व्यापारावरोधोऽपवाह्यते।

स्वप्नवासवदत्तस्य प्रथमाङ्के स्थिति-परिचयात्मकं वृत्तं ब्रह्मचारिमुखेन श्रूयते। तथा हि—

ब्रह्मचारी - अत्र खल्वतिदारुणं व्यसनं संवृत्तम्।

इत्यारभ्य ततोऽहमपि निर्गतोऽस्मि इति यावत्। अनेन वृत्तेनोदयनोऽपरिणेयः परिग्रहस्त्वादित्यवरोधो विगलति। एतादृशं वृत्तं भूतकालिकं प्रवर्तते। तस्य परोक्ष उपयोगः कथाविकासक्रमे वर्तते।

भोजस्य प्रतिसंस्कार्यं तु कुन्तकस्यौचित्यरयक्त सदध्यन्यथासम्पाद्यं सहृदयहृदयाह्लादनाय।[3] यथोदात्तराघवे मारीचवधप्रकरणे रामो न गच्छति, यतो हि नाम लघुभ्रातैव मृगयादि कार्यं सम्पादयतु इत्यौचित्यरक्षणाय।

---

१. ध्वन्यालोकलोचने आनन्दवर्धनो द्विविधां सिद्धिमस्मिन् प्रकरणे मन्यते—स्वायत्तसिद्धिः, सचिवायत्तसिद्धिश्च।

२ ना० शा० १.५८ अधिकृत्य भारती। गेटे मतमिदं समर्थयति।
European Theories of Drama P. 336.

३. वक्रोक्तिजीविते पृ० २५२

## कार्यावस्थाः

रूपकेषु आधिकारिककार्यस्येतिवृत्तस्य वा पञ्चावस्था भरतेन प्रमाणिता —

इतिवृत्तं समाख्यातं प्रत्यगेवाधिकारिकम् ।
तदारम्भादि कर्तव्यं फलान्तं च यथा भवेत् ॥१९.१६
संसाध्ये फलयोगे तु व्यापारः कारकस्य यः ।
तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥ १९.७
सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।
एतास्त्वनुक्रमेणैव पञ्चावस्था भवन्ति हि ॥ १९.१४

आरम्भः, यत्न प्राप्तिसम्भव, नियताप्तिः, फलागमश्चेति पञ्चावस्था सन्ति । एतासां कृते क्वचित् मानसिको व्यापार, क्वचिच्छाब्दिको व्यापार, क्वचिदुभयविधो व्यापारोऽपेक्ष्यते ।

### आरम्भः

आरम्भावस्थायामौत्सुक्यमात्रं मानसिकव्यापारोऽस्ति—

औत्सुक्यमात्रबन्धस्तु यत् बीजस्य निबध्यते ।
महतः फलयोगस्य स फलारम्भ इष्यते ॥

ना० शा० १९.९

यथाभिज्ञानशाकुन्तले नायको दुष्यन्त शकुन्तला समीहते । औत्सुक्यं न केवलं प्रधाननायकस्य, अपि तु अमात्यस्य, नायिकाया, प्रतिनायकस्य, दैवस्य वा स्यादिति अभिनवगुप्तेन विशदीकृतम् ।[1] एतेषां कस्यचिदेकस्यौत्सुक्य हृदयनिरुद्धं भवति, इतरेषां च शारीरिकव्यापाराः फलेतरदिशि सन्त्येव । यथा अभिज्ञानशाकुन्तले सखीना वृक्षसेचनादि कार्याणि सन्ति ।

द रूपके धनञ्जयेनारम्भस्य लक्षण विहितम्—

औत्सुक्यमात्रमारम्भ फललाभाय भूयसे ।१.२०

एतत्तु भारतीयं लक्षणमनुवर्तते ।

### प्रयत्नः

द्वितीयावस्था प्रयत्नो वा यत्नो वा भरतानुसारेण प्रवृत्तिद्वयं व्यनक्ति —
(१) फलं प्रति व्यापारः ।

---

१ सा च नायकस्यामात्यस्य नायिकाया प्रतिनायकस्य दैवस्य वा ।... ...
दैवसाहाय्यस्य पुरुषकारस्य फलनिष्पत्तिः इत्यादि १९.९ अधिकृत्य भारती ।

तथा च (२) परमौत्सुक्यगमनम् ।[1] तत्तु विलास-विधूत-शमेषु प्रतिमुख-संध्यङ्गेषु व्यज्यत एव ।

औत्सुक्यस्य परमाजिस्यं प्रयत्नावस्थायां भवतीति धनञ्जयेन दशरूपके न प्रकटितम् । तदनुसारेण तु व्यापारमात्रमेव प्रयत्नः

प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः । इति

अत्रौत्सुक्यस्यानुल्लेखो धनञ्जयस्य त्रुटिरेव । वस्तुतः प्रयत्नावस्थायामौत्सुक्येन भवितव्यम् । तद्यथाभिज्ञान-शाकुन्तले तृतीयाङ्के प्रयत्नावस्थायाम्—

।ततः प्रविशति कामयमानावस्थो राजा।

राजा—जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥ ३.२

( मदनबाधां निरूपयन् ) भगवन् कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः । कुतः—

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ ३.३

(सखेदं परिक्रम्य) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः खिन्नमात्मानं विनोदयामि । अभिनवगुप्तानुसारेणौत्सुक्यं नाम—उपायविषयस्मरणेच्छा-सन्तानस्वभाव. ।[2]

## प्राप्तिसम्भवः

प्राप्तिसम्भवे नायकयोर्नातिदीर्घकालिकं मिलनं पश्चाद् वियोगश्च मालतीमाधवेऽघोविवं दर्शितः—

सुहृदिव प्रकटय्य सुखप्रदां प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः प्रविशिनष्टि विधिर्मनसो रुजम् ॥४.७

तृतीयावस्था प्राप्तिसम्भवोऽस्ति । भरतानुसारेण तु—

ईषत्प्राप्तिर्यदा काचित् फलस्य परिकल्प्यते ।
भावमात्रेण तं प्राहुर्विधिज्ञाः प्राप्तिसम्भवम् ॥

अत्र प्राप्तिरीषदुताहो परिकल्पनैवेति प्रश्नः समुदेति ।

---

१. अपश्यतः फलप्राप्तिं व्यापारो यः फलं प्रति ।
परं चौत्सुक्यगमनं स प्रयत्नः प्रकीर्तितः ॥ ना० शा० १९.१०

२. ना० शा० १९.१० अधिकृत्य भारती ।

प्राप्तिसम्भवावस्थया गर्भसन्धेः सामञ्जस्यं वर्तते। अस्मिन् गर्भसन्धौ भरतेन नायिकायाः प्राप्तिरप्राप्तिश्च समुद्दिष्टे। तथा हि—

उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितम्॥ १९.४१

तदनुसारिप्राप्तिसम्भवावस्थायां प्रथमं नायिकाप्राप्तिर्भवत्येवेति भरतस्य प्रतिपाद्यं स्पष्टं प्रतिभाति। पश्चादप्राप्तिर्भवति। मातृगुप्ताचार्येण गर्भे सिद्धि-दर्शनं निर्दिष्टम्।[1] इदं सिद्धिदर्शनं प्राप्त्याशाया ईषत्प्राप्तिं व्यनक्ति, यत्र नायिका अस्थायिरूपेण प्राप्यते।

भोजो विमर्शसन्धौ विप्रलम्भकृतं विमर्शं वर्णयति। तद्यथा

विप्रलम्भकृतो वापि विमर्श इति संज्ञितः।[2]

अत्र विप्रलम्भो नायकयोरचिरकालिकसमागमस्य पश्चादेव सम्भावनीयः। भोजस्तत्रैव क्रियाफलेन सम्यग्योगं निर्वहणसन्धौ प्रतिपादयति।

पूर्वोक्तेन भरतस्य प्राप्तिसम्भवावस्थायां नायिकाप्राप्तिविषयकोऽभिप्रायः स्पष्ट एव। किन्तु भरतस्य कारिकाया व्याख्यामभिनवगुप्तोऽन्यथा विधत्ते। स नायिकाप्राप्ति-परिकल्पनेयदिति मन्यते। तस्य मते नाटकेषु गर्भावस्था-प्रकरणे नायिकाप्राप्ति-विषये नानुरुणद्धि इति सोदाहरणं प्रतिपाद्यते।

नाटकेषु कवयो नायकयोरेकान्तिकसमागमात् प्रागेव तयोरस्थायिनं समागमं योजयन्ति। तथाहि स्वप्नवासवदत्ते—

शय्यायामवसुप्तं मां बोधयित्वा सखे गता।
स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम्॥ ५.८
चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम्॥ ५.१०

अविमारके तृतीयेऽङ्के नायकोऽविमारको नायिकया कुरङ्ग्या सहाशान-वर्षमेकं न्युष्य पश्चात् पृथग्बभूव।

प्रतिज्ञायौगन्धरायणे तृतीयेऽङ्के शिष्यारूपेण प्राप्ता वासवदत्ता गान्धर्व-विवाहेन परिणीता।

कुन्दमालायां चतुर्थेऽङ्के सीता मोहं गतं रामं परिष्वजते। पश्चाद् रामो रोमाञ्चितो भवति।

मृच्छकटिके—पञ्चमाङ्के नायकयोरीषत्प्राप्तिर्भवति।

वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु।
अस्मद्विधदुर्लभया यदहं प्रियया परिष्वक्तः॥ ५.४८

---

१. शृङ्गारप्रकाशे पृ० ४८५

२. नाटकलक्षणरत्नकोशे पृष्ठ ५६।

अभिज्ञानशाकुन्तले नायको गान्धर्वेण विधिना शकुन्तलामुपयेमे। विक्रमोर्वशीये नायकयोर्मिलनसुखमीषत्काल तृतीयेऽङ्के परिणमति।

मालविकाग्निमित्रे नायको नायिकां मालविकां मिलित्वा संश्लेषमुपजनयति। मालविका त नाट्येन परिहरति। तदा राजा कथयति—'रमणीयः खलु नवाङ्गनानां मदनविषयावतार.। तथाहीयम्—

हस्तं कम्पयती रुणद्धि रसनाव्यापारलोलाङ्गुलि
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात्।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे॥ ४.१५

प्राचीनरूपकेषूपयुक्तास्थायिसमागमप्रसङ्गा ईषत्प्राप्तेरुदाहरणानि सन्ति। ईषत्प्राप्तेरनन्तर या वियोगावस्थान्तरोभवति सा रसमयसन्दर्भस्य सर्वोत्कृष्टं वैचित्र्यमावहतीति पर प्रयोजनमीषत्प्राप्ते'।

सान्तरायो लाभ पुनर्विच्छेदः पुन प्राप्ति. पुनर्विच्छेद पुनश्चैतस्यैवान्वेषणं वारवारं सोऽनिर्धारितैकान्तफलप्राप्त्याशात्मको गर्भसन्धिरित्यनेनेषत्प्राप्ति-रुक्तीयते।[1]

फलयोगे तु समग्र क्रियाफलं भवति,[2] किन्तु प्राप्तिसम्भवेऽसमग्रक्रियाफल-मुपपद्यते। ईषत्प्राप्तिर्नाम फलप्राप्तेरसमग्रता, तदेव हि प्राप्तिसम्भवस्य प्रधानं लक्षणमिति प्रतिपाद्यं प्रतिभाति भरतस्य। तदनुसारेण प्रणयात्मकानि रूपकाणि प्राप्तिसम्भवं यथा तथा सन्धौ घटयन्ति।

उपर्युक्त विश्लेषणं तु भरतमनुसरति। प्राप्तिसम्भवात्मके सन्धौ प्राप्ति-रप्राप्तिरेव वेति नाट्यशास्त्रीय कारिकायां विशदयन्नभिनवगुप्तः सम्यगाह—

अप्राप्तिरन्वेषणमित्येवंभूताभिरवस्थाभि पुन पुनर्भवन्तीभिर्युक्तो गर्भसन्धिः प्राप्तिसंभवाख्ययावस्थया युक्तत्वेन फलस्य गर्भीभावात्। तथाहि रत्नावल्यां द्वितीयाङ्के—

---

१ दशरूपके १.३६ अधिकृत्यावलोक।

२ अभिप्रेत समग्र च प्रतिरूपं क्रियाफलम्।
इतिवृत्ते भवेदस्मिन् फलयोगो प्रकीर्तित॥ ना० शा० ११ १३।
धनञ्जयोऽप्येनदेव समर्थयति—
समग्रफलसम्पत्ति फलयोगो यथोदित॥ द० रू० १.२२।

सुसंगता—अदक्षिणा इदानीं त्वया एव भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि—इत्यादौ प्राप्तिः ।[1]

दशरूपके प्राप्तेरसमग्रता धनञ्जयेन न निर्दिष्टा प्राप्तिसम्भवपरिभाषाप्रसंगे इति त्रुटिः ।[2] रसार्णवसुधाकरेऽपि प्राप्त्याशाप्रसंगे ईषत्प्राप्तिः न निर्दिष्टा ।

ईषत्प्राप्तौ नवसंगमे नर्मस्फिञ्जवृत्तिः प्रवर्तते । ईषत्प्राप्तिः प्रायः प्रणयात्मकेषु नाटकेषु नायकयोरस्थायिसमागमरूपेण विलसति । तत्पश्चात् कविसमीहितं विप्रलम्भशृङ्गारस्यौचित्यं वर्तत एव । एतदनुसारेण भारतीया प्राप्तिसंभवविषयिणी कारिका व्याख्येया । विप्रलम्भाद्यभावे तु का तत्र विचित्रता रञ्जनाया ।[3]

तदयमत्र निष्कर्षो यत् प्राप्तिसंभवपदे संभवशब्द उत्पत्तिपरः कुमारसंभव-पद इव । स चासौ संभवः प्रकृते क्षणमात्रात्मा न तु दीर्घकालिकः स्थायी वा यथा समग्रफलप्राप्तिरूपे फलागमे । अन्यत्रापि भरतेन प्राप्तेः परिभाषा पूर्वोक्ता-नुसारिणा लक्षिता ।[4]

## नियताप्तिः

प्राप्तिसम्भवे नायकयोर्मिलनं गोपनीयं विधानं प्रवर्तते । तदेव नियताप्तौ गोपनीयतां विजहाति फलागमे च सुप्रकाशितं भवति ।

नियतफलप्राप्तिनामिकायामवस्थायां फलप्राप्तिर्न भवति, किन्तु सा दृश्यत इति भरतः परिभाषते—

नियतां तु फलप्राप्तिं यदा भावेन पश्यति ।
नियतां तां फलप्राप्तिं सगुणां परिचक्षते ॥ १९.१२

फलप्राप्तौ याः काश्चिदपायकृता बाधास्ताः सर्वा अस्यामवस्थायां पूर्वोपा-त्तेनोपायेन (भावेन) दूरीक्रियन्ते । अत एव फलप्राप्तिर्निर्बाधं हस्तगता इव लक्ष्यी-

---

१ ना० शा० २१.४१ अधिकृत्य भारती ।
अपायः पाश्चात्यनाटकेषु Complication इव भवति । तत्र प्रतिनायकस्य, पित्रोर्वा प्रतिरोधेन प्रणयपथे विरोधो जायते । Bentley Millett . The Art of the Drama page 191

२. उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः ॥ द० रू० १.२१ ।

३ ना० शा० १९.१० अधिकृत्य भारती ।

४. ना० शा० १९.२ ।

क्रियते। प्राप्तौ सन्देहलेशोऽपि न स्यात्। यथाभिज्ञाने दुष्यन्तस्याङ्गुलीयकप्राप्ति तया नायिकासमुद्धरणं च।

पूर्वोक्ता भारतीया परिभाषामनुसरन् धनञ्जयो दशरूपके प्राह –

अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता ॥ १.२१

वीररसोचितनाटकेषु नियताप्तेः काचिदन्यैव परिभाषाघोषिषमुद्घृता—'अरातेरपचयपरम्परा नियता च' फलप्राप्तिरिति अत्रमकुट्ट.। यथा जानकीराघवे षष्ठाङ्के लक्ष्मण –

दूरप्रोन्नतकुम्भकर्णविटपी छिन्नस्त्वया शक्रजित्
स्थाणुः स्माङ्कमितो निकुञ्जगहनः कुम्भः स चोन्मीलितः।
पौलस्त्यैकजरद्द्रुमस्थितमनीकानामदुर्गोऽस्ति ते
ध्वस्तेयं व्यसनाटवी किमधुनाप्यार्यो यदुत्ताम्यति ॥

## फलागमः

इतिवृत्तस्य पञ्चमावस्था फलोत्पत्ति, फलयोग., फलागमो वा नाम। एतस्यां यथानामाभीष्टा फलप्राप्तिर्भवति।[१] यथा रावणवधमनु रामस्य सीताप्राप्ति'। अभिनवगुप्तानुसारेण तु यस्मिन्नितिवृत्ते कर्त्रवस्थात्मनि नायकस्याभिप्रेतं तादृशम्, अपि च नानुचितम्, अपि तु प्रतिरूपमुचितं सम्भवात् पूर्णक्रियाफलमिति अनन्तरफलम्, न च विधिफलमिव स्वर्गादिकालान्तरापेक्षि सम्पर्यते, सावस्था नायकस्य फलयोग. फलोत्पत्तिर्नाम।

तत्र सचिवामात्यादेरपि यावस्था. सा वस्तुतो नायकगामिन्येव भवतीति नाटकेषु नावश्यं सर्वा नायकस्य साक्षादेवोपनिबध्यनीया अपितु सचिवादिगतत्वेनापि। फलयोगस्तु साक्षादेव तद् (नायक) गत[२]।

इमा' पञ्चावस्था एव फलहेतु विन्यस्यन्ति इति भरतेन स्पष्टीकृतम्—

आसां स्वभावभिन्नानां परस्परसमागमात्।
विन्यास एकभावेन फलहेतुः प्रकीर्तितः ॥ १९.१४

एतासां फलहेतुत्वे सति धनिकेन निर्दिष्टमर्थप्रकृतीनां फलहेतुत्वमपास्तम्।[३] अभिनवगुप्तेनापि अर्थप्रकृति. फलहेतव इति व्याकृतम्। न तत् साधु।[४]

---

१. अभिप्रेतं समग्र च प्रतिरूप क्रियाफलम्।
इतिवृत्ते भवेद्यस्मिन् फलयोग प्रकीर्तित ॥ ना० शा० १९.१३

२. ना० शा० १९.१३ अधिकृत्य भारती।

३. अर्थप्रकृतय प्रयोजनसिद्धिहेतव.।

४. ना० शा० १९.२० अधिकृत्य भारती।

## सन्धिः सन्ध्यङ्गानि च

कार्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छन्
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च।
कुर्वन् बुद्ध्या विमर्शं प्रसृतमपि पुनः संहरन् कार्यजातम्॥

मुद्राराक्षसे ४.२

इत्यनेन सन्धीनां स्वरूपं प्रयोजनं च कविदृष्ट्या वर्णितम्।

सन्धिस्तावन्नाट्यसौष्ठवमुन्नयति। अवस्था-विधानं तु कार्यव्यापारस्य विकासमौचित्यपूर्णं कल्पयति।

अवस्थानां क्रममनुसृत्य पञ्च सन्धयो विन्यस्यन्ते[1]। यथा महाभारते पर्वसु, रामायणे काण्डेषु, महाकाव्यानि च सर्गेषु विभज्यन्ते, तथैव रूपकाणि सन्धिषु विभज्यन्ते। सन्धिशब्दस्य व्याकरणिकव्याख्याभिनवगुप्तेनोपस्थापिता। तद्यथा, तेनार्थावयवाः सन्धीयमानाः परस्परमङ्गैश्च सन्धय इति समाख्या निरुक्ता।[2] द्वयोर्वस्तुनोः सम्बन्धे सति तयोर्मिलनस्थलं सन्धिर्वस्तुतः स्यात्, किन्तु भारते सम्बद्धाः खण्डा अपि सन्धय इति व्यपदिश्यते। पर्वशब्दस्यापि तादृश प्रयोगो

---

१. सन्धयो ह्यवस्था-परतन्त्राः। प्रारम्भाभिधान-दशाविशेषोपयोगि कथाखण्डम् मुखसन्धिरित्युक्तम्। ना० शा० १९ १०५ अधिकृत्य भारती।
महावाक्यार्थरूपस्य रूपकार्थस्य पञ्चांशा अवस्थाभेदेन कल्प्यन्ते। आरम्भावस्थोपयोगी यावानर्थराशिः स मुखसन्धिः। तस्यार्थराशेरवान्तरभागा उपक्षेपादीनि सन्ध्यङ्गानि। ना० शा० १९ ३९ अधिकृत्य भारती। अवस्थापञ्चकानुयायिना सन्धिपञ्चकेन भाव्यम्। ना० शा० १९ १७ अधिकृत्य भारती।

२ ना० शा० १९ ३७ अधिकृत्य भारती। अर्थभागराशिः सन्धिरिति मतमभिनवगुप्तस्य ना० शा० १९ ५० अधिकृत्य भारत्या प्रकटितम्।
एतदेव भोजराजेन सरस्वतीकण्ठाभरणे विशदीकृतमयोविषयम्—
सन्धिः प्रबन्धशरीरस्य पञ्चाङ्गानि। सन्धेरङ्गानि पुनरुपक्षेपादीनि सन्ध्यङ्गानि चतुष्षष्टि। पृष्ठ ५३७

मिलनस्थलं सम्बद्ध-कथावयवञ्च व्यनक्ति । सन्धिस्तु कथावयव इत्यभिनवगुप्तस्य स्पष्टं मतम् ।[1] सन्धीयन्तेऽङ्गानि यस्मिन्निति सन्धि ।

तर्हि एतद् व्युत्पन्नं यत् कस्या अपि अवस्थाया नाट्योचित कथारूप सन्धिः स्यात् । सन्धिनाम्ना स एव कलात्मको विन्यासोऽभिप्रेतो येन रूपकेषु घटनाना तासां संविधानानां च रञ्जक. प्रक्रमो वर्ण्यते ।

एतदनुसृत्य नव सन्ति ।

मुखसन्धौ—प्रार्थना, हेतुचिन्तनम्, बीजं च,

प्रतिमुखसन्धौ—लाभ (नायिकाया प्राप्ति) प्रसर (प्रसङ्गविस्तारः), बीज-साधनसम्बन्ध',

गर्भसन्धौ—सम्भोग', उद्भेद' (वियोगारम्भ, पुन संयोगविधानं च), मित्रसम्पत्,

विमर्शसन्धौ—नाश (नायिका-वियोगः), किञ्चिच्छ्रेय, पुनर्बीजेन सम्पत्ति',

निर्वहणसन्धौ—अभीष्टस्य प्राप्ति', सिद्धि, प्रारब्धस्य समापनं च

सागरनन्दिना प्रत्येकश. सन्धीना पूर्वोक्त आशय. सप्रपञ्चं वर्णितः ।

तद्यथा—

प्रार्थना विषयोत्सुक्यमारम्भो हेतुचिन्तनम् ।
बीजं साध्योपगमनं मुखसन्धाविति त्रयम् ॥
लाभः साधन-सम्प्राप्तिः प्रसरः प्रसृता क्रिया ।
बीजसाधन-सम्बन्धः इति प्रतिमुखे त्रयम् ॥
सम्भोगो योग्यता तत्र उद्भेदः सिद्धि-दर्शनम् ।
मित्रसम्पत् पताकेति त्रयं गर्भे प्रकीर्तितम् ॥
नाशः कारणवैधुर्यं किञ्चिच्छ्रेयः सविघ्नता ।
पुनर्बीजेन सम्प्राप्तिर्विमर्शे त्रितयं भवेत् ॥
अभिप्रेतार्थसम्प्राप्तिः सिद्धिः साध्यस्य सिद्धता ।
प्रारब्धस्य च निर्वाहो भवेन्निर्वहणे त्रयम् ॥

---

१ ना० शा० १९.१०५ अधिकृत्य भारत्या प्रारम्भाधानदशाविशेषोपयोगिकथाखण्डक मुखसन्धे. । ना० शा० १९.४२ अधिकृत्य विमर्श-सन्धि स्पष्टयताभिनवगुप्तेनापि मत विशदीकृतम् । यथा हि—विमर्शाधिकारणत्वाद् विमर्शरूपे कथावयवे स विमर्शो नामेति । ध्वन्यालोकलोचने पञ्च सन्धय इतिवृत्तखण्डा. । पृ० ३३० ।

The word Sandhi in Sanskrit dramaturgy denotes both linking up of the parts and also the parts themselves, Saddheshwar Chattopadhyaya, Natakalakṣaṇaratnakośa p. 50

२

दशरूपके तु धनञ्जय सन्धि परिलक्षयते—

अवान्तरार्थसम्बन्धः सन्धिरेकान्वये सति । १.२३

अनया परिभाषया सन्धे सामग्र्यं न प्रतीयते न च सन्ध्यङ्गेषु फलानुवर्तिनीमा घटनाना कलात्मकविन्यासो व्यज्यते। अन्यच्च धनञ्जय सन्धिमिलनस्थलमेवेति व्याकरोति । सन्धिस्तु कथावयव इति तस्य परिभाषा न बोधयति ।[1]

अन्यच्च विसवादो धनञ्जयस्याधोलिखितकारिकाया प्रत्यक्षमेव -

अर्थप्रकृतयः पञ्च पञ्चावस्था-समन्विताः ।

यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च सन्धयः ॥ १.२२,२३

पञ्चावस्थाना पञ्चसन्धिभि सह यथासख्य युज्यते एव किन्तु सन्धीनामर्थप्रकृतिभि सह यथासख्यमसम्भाव्यं, यतो हि नाम न सर्वेषु नाटकेषु पताकाप्रकर्यो स्थिनिरावश्यकी । परञ्च बिन्दुर्नाम सर्वेषामङ्कानामन्तभागे स्यादेवेति भारतीयो नियम । अत एव प्रतिमुखसन्धावेव बिन्दो, गर्भसन्धौ पताकाया, विमर्शसन्धौ प्रकर्याश्च अवश्यम्भाविता असदाग्रह एव ।

धनञ्जयेनापि दशरूपक एवाधोलिखितकारिकाया यथासंख्यस्य वैकल्पिकत्वं पताकाया वैकल्पिकत्वेन प्रमाणितम्—

गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषण मुहुः ।

द्वादशाङ्गः पताका स्यान्न वा स्यात् प्राप्तिसम्भवः ॥ १.३६

भरतेन पूर्वोक्तं यथासख्य न चर्चितम् । धनञ्जयस्य तदनुसन्धानमसदभारतीयञ्चास्ति ।

इतिवृत्तारम्भकावस्थासु प्रतिष्ठितासु सन्धीना विनियोगस्य कावश्यकतेति प्रश्न समाधानमर्हति । वस्तुतोऽवस्था कार्यस्य विकास प्रतिपादयन्ति, तदनुसारेण च ताभिर्नायकस्य चारित्रिकोत्कर्षो व्यज्यते । सन्धिभि कवे, कथाविन्यासस्य कलात्मक-सौष्ठव व्यज्यते । इदमेव प्रयोजनवैशिष्ट्यमवस्थाया सन्धेश्च पार्थक्य समादधाति । अभिनवगुप्तानुसारतस्तु महावाक्यार्थरूपस्य रूपकार्थस्य पञ्चाशा अवस्थाभेदेन सन्धिषु कल्प्यन्ते ।

नाटकस्येतिवृत्तमवस्थाविधानेन स्फुटो क्रियते । इमे पचकार्यावस्था क्रमश पञ्चसु सन्धिषु निधीयन्ते । तत्रेतिवृत्तवैतत्य सन्धिभि सन्ध्यङ्गैश्च सम्भवतीति अग्रे वक्ष्याम ।

---

१ अन्यत्र ३ २६ कारिकाया धनञ्जय, 'सन्धिवृत्तखण्ड एव' इति स्पष्टयति । शृङ्गारप्रकाशे भोजस्यैव मतम्—अर्थतदुपाये कथाशरीरभागाना मुखादय, पञ्च व्यपदेशा भवन्ति ।

सन्धय आधिकारिकवृत्तमेव विभजन्ति। प्रासंगिकवृत्तं पुनः अनुसन्धिभिर्विभज्यते।

नाट्यस्य रागात्मकप्रीतिप्रधानत्वात् सन्ध्यङ्गेषु वृत्तांशेभ्योऽपि विशेषतरो महिमा तत्सम्बन्धिवाग्वैचित्र्यस्यैव विलसति।

नाटकीयघटनाचक्रस्य प्रवर्तकानां लोकानां दैवस्य वा कार्यं तदर्थमपेक्षिता नीतिर्योग्यता सम्भूतिश्च सन्ध्यंगैर्वाग्विदग्ध्यपूर्वकं प्रस्तूयन्ते।

पञ्चसन्धीनामङ्गेषु विभाजनं नाट्यशास्त्राचार्यैः समुपकल्पितम्। भरतानुसारेण —

सन्धीनां यानि वृत्तानि प्रदेशेष्वनुपूर्वशः।
स्वसम्पद्गुणयुक्तानि तान्यङ्गान्युपधारयेत्॥ १९.५०

अभिनवगुप्तानुसारतः मुखे द्वादश प्रतिमुखे गर्भे च त्रयोदश, अवमर्शे द्वादश, निर्वहणे चतुर्दशेति मिलित्वा सन्ध्यङ्गानि चतुष्षष्टिः सन्ति। 'सन्ध्यगानि तु फलानुवर्तीनि स्युरिति तेषामेकं प्रधानं लक्षणम्। इमानि च स्थायिविभावानुभावव्यभिचारिरूपेण द्रष्टव्यानीति नाट्यदर्पणे रामचन्द्रो निर्दिशति।

नाटकेऽनस्या एव फलोन्मुखा व्यापाराः प्रबन्धशरीरं रचयन्ति। ते आङ्गिका वाचिका मानसिकाश्च भवन्ति। एतेषां व्यापाराणां वर्णना रसमपेक्ष्य विभावादिकमनुभावसम्पत्तिसमृद्धं प्रस्तुवन्ति सन्ध्यङ्गानीति संज्ञितास्ते।

अनुसन्धिः

आधिकारिककथा-प्रदेशे सन्धयस्तेषामङ्गानि च विलसन्ति। पताकाकथाप्रदेशेऽपि सन्धयस्तत्रेतिवृत्तविस्तराय प्रयुज्यन्ते। पताकावृत्तस्य सन्धयोऽनुसन्धय इति कथ्यन्ते।

## सन्ध्यङ्गानि

सन्ध्यङ्गैर्नायकवृत्तीनां नाट्योचितविधानसज्जाभिवर्णनं प्रस्तूयते। तथा हि नायकयोः परस्परप्रथमदर्शनानन्तरं दश स्मरदशा जायन्ते। अस्यामयोगावस्थायामभिलाषचिन्तादयः[1] यथायोग वर्ण्यन्ते। अयोगावस्थायाः कृते बीजन्यासादि त्रितय सज्जेति कल्प्यते। स्मरदशा इतिवृत्तविकासस्य घटनात्मिका शाखा प्रशाखा समाश्रित्य चित्र्यन्ते। कविरेव इतिवृत्तं समाश्रित्य सन्ध्यङ्गानि कल्पयति।

१. अभिलाषो यथाभिज्ञाने 'इदं किल व्याजमनोहरं वपुः'। १.१७
सरसिजमनुविद्धम्। १.१८
यथा वा शकुन्तला—तपोवनविकारस्य गमनीयास्मि संवृत्ता।
चिन्ता यथा वैखानसं किमनया व्रतमाप्रदानात् १.२४

यथा नाटकीयकथायाः अवयवा खण्डा वा सन्धयो भवन्ति, तथैव सन्धिषु प्रत्येकशः प्रारम्भ-यत्नाद्यवस्था अधिकृत्य या कथा विलसति तस्य अङ्गानि खण्डा वा सन्ध्यङ्गानीत्यभिधीयन्ते। अवस्थानां प्रदेशेषु प्रत्येकशो बहूनि कल्पितानि संविधानानि रसभावातिशयार्थं कविः सन्निवेशयति। तान्येव वाग्वैदग्ध्यपूर्वकं वर्णयन् स नाटकस्य कथावस्तु नाट्योचितं प्रकुरुते। तेषां संविधानानां कविकृतानि वर्णनानि सन्ध्यङ्गानि भवन्ति। अभिज्ञानस्य प्रथमाङ्के दुष्यन्तस्य मृगया, वैखानसैः तस्य निषेधः, तेषां नायकस्याशीर्वचनम्, शकुन्तलायाः वृक्षसेचनमित्यादीनि संविधानानि सन्ति।

सन्ध्यङ्गानां वैलक्षण्यम्

अपरविधमेव सन्ध्यङ्गं मातृगुप्ताचार्येण लक्षितम्। तदनुसृत्य सन्ति भवन्ति—

मुखे—आरम्भः, हेतुचिन्तन, साध्योपगमनम्

प्रतिमुखे—सम्पत्तिः, प्रसर, चित्तसाधन-सम्बन्ध

गर्भे—योग्यता, सिद्धिदर्शनम्, मित्रसम्पत्

विमर्शे—नाशः, सविघ्नता, पुनर्बीजसम्पत्तिः।

निर्वहणे—अर्थसम्पत्ति, सिद्धि, निर्वाह।

एतानि तथाकथितसन्ध्यङ्गानि वस्तुत कार्यावस्थाना भेदा। नैतानि काव्यार्थांशा। अत एव तेषां सन्ध्यङ्गत्वमपास्तम्।[1]

सन्ध्यङ्ग-योजना-विशेष.

कस्मिंश्चित् सन्ध्यङ्गेऽन्यान्यपि सन्ध्यङ्गानि संश्लिष्टानि भवितुमर्हन्ति। तद्यथाभिनवगुप्त उदाहरति—राधाविप्रलम्भनामके रासकाङ्के उपक्षेपेणैव परिकरपरिन्यासौ।[2] एकत्र चत्वारि अपि सन्ध्यङ्गानि परस्पर सम्मिश्राणि सहास्तित्वमर्हन्ति।

भरतमनुसृत्याभिनवगुप्तेन विशदीकृत यत् किमपि सन्ध्यङ्गं कस्मिंश्चित् सन्धौ पुन पुनर्द्वि त्रिर्वा निबद्धु शक्यम्। यथा रत्नावल्या प्रतिमुखे विलास., सागरिकायाः राज्ञि वा सकृदनिबद्ध प्रधान शृङ्गारमुद्दीपयति। वेणीसंहारे सम्फेटविद्रवौ पुन प्रदर्शितौ वीररौद्रोद्दीपनौ भवत।[3] न च सर्वाणि सन्ध्यङ्गानि तत्र सन्धौ प्रयुज्यन्ते। रसभावादिकं समीक्ष्य यथोचितान्यङ्गानि विन्यस्यन्ते।

---

१. भरतकोशे पृष्ठ ३१६

२. ना० शा० १६.१०५ अधिकृत्य भारती।

३. ना० शा० १९.१५ अधिकृत्य भारती।

नैतेषु सन्ध्यङ्गेषु इतिवृत्तांशानां कालक्रमेण वर्णनमावश्यकं भवति। ते तु तावन्मात्रं निगूढा एवाश्चर्यकारिणो भवन्ति यावदेषां प्रकाशनेन महत्तमा भावसमृद्धिः कौतुकं च न जायेते।

सन्ध्यङ्गाना क्रमो वैकल्पिक एव। कानिचित् सन्ध्यङ्गानि तु क्रमानुसारेणैव प्रयुज्यन्ते। यथा उपक्षेप, परिकर, परिन्यासश्च। नाट्याचार्यै शास्त्रेषु सन्धीनां क्रम. पृथक् पृथक् स्थापित। अभिनवगुप्तानुसारेण 'न च क्रमेणामेनैव तानि प्रयोज्यानीति'

कतिपय-सन्ध्यङ्गानि न केवलं स्वकीये सन्धौ विधीयन्तेऽपि तु अन्येष्वपि सन्धिषु निधीयन्ते। तद्यथा विलोभनं युक्तिश्च सर्वेषु सन्धिषु स्थानमर्हत.।

तथाहि—'सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते' इति यन्मुखसन्धौ पञ्चमम-ङ्गं' *तत्सर्वेषु सन्धिषु तावत्रिबन्धनयोग्यमिति।*[1]

सन्ध्यङ्ग-प्रयोजनानि

रसापूरणमेव सन्ध्यङ्गानां परम प्रयोजनम्, यथोक्तमभिनवगुप्तेन—

तेन रसस्यैवायं विभावादिपरिकरो यदङ्गचक्रम्।[2]

भरतानुसारेण सन्ध्यङ्गानां प्रयोजनानि सन्ति—

इष्टार्थस्य रचना वृत्तान्तस्यानुपक्षयः।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम्॥
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम्। १९.५१–५२

**इष्टप्राप्तिः**

प्रथमं प्रयोजनं तु इष्टार्थस्य रचना वर्तते। तत्राभीष्टस्य प्रयोजनस्य रसास्वादकता रचना विस्तारणा भवति।[3] एतत्तु सर्वेषु सन्ध्यङ्गेषु समानमेव।

**वृत्तान्तस्यानुपक्षयः**

कथाशरीरस्य क्षयो न भवेदिति द्वितीयं प्रयोजनं वृत्तान्तस्यानुपक्षयो नाम। एतत्प्रयोजनं सर्वसाधारणम्।

**प्रयोगस्य रागप्राप्तिः**

अरञ्जकमपि वृत्तमङ्गवैचित्र्येण निबध्यमानं परां रक्तिमावहति, कार्यवशाच्च, पुनरुच्यमानमपि वृत्तमङ्गभङ्ग्या निबद्धमपुनरुक्तमिवाभाति।[4]

---

१. ना० शा० १९.६८ अधिकृत्य भारती।
२. ना० शा० १९.१०५ अधिकृत्य भारती।
३. ना० शा० १९.१०५ अधिकृत्य भारती। सन्धीना रसपारतन्त्र्यमुद्घाटयति।
४. नाट्यदर्पणे १.४१.२

इद द्वितीय मतमभिनवगुप्तस्य स्वीकृत यतो हि नामात पर म स्पष्टयन्ति—

तत्र सामादया वीरे उज्ज्वलत्वहेतव, वधो रौद्रे, प्रत्युत्पन्नमतित्वं मतिलक्षण व्यभिचारि रूप सर्वत्र गोत्र स्खलनमीर्ष्याविप्रलम्भे साहसं (शृङ्गारवीरादौ), चापल्यं हास्यादौ। एवमन्यत्र। एते सर्वेषु नाटकादिरूपकेषु सुलभा स्वय च गुनाना इति।

नाटकलक्षणरत्नकोशे सागरनन्दी सन्ध्यन्तराणि अपरविध परिभाषते। तद्यथा- एतेषामेव सन्धीनामेकविंशति प्रदेशा अवयवाद्भवन्ति। यथा—

साम भेव प्रदान च दण्डश्च वध एव च। इत्यादि

प्रयोजनवशाद्यावन्त एते प्रवेष्टु शक्यन्ते तावन्त सन्धिषु प्रदर्शयितव्या।

भरतोऽभिनवगुप्त सागरनन्दी च सन्ध्यन्तरं सन्ध्यङ्गाद्भिन्नमेव निदर्शयन्ति। धनञ्जय सन्ध्यन्तराणामन्तर्भावो भावेष्वलङ्कारेषु च भवतीति भरतविरोधि मतमुपन्यस्यति।[1]

डा० वे० कृष्णराघवन् महोदय एतयोर्द्वयोरभिन्नत्व प्रतिपादयन् किञ्चित् प्रस्तौति। स कथयति—

Sandhyaṅgas are not only sixtyfour The fact that a supplementary list grew up under the name of Sandhyantaras—Sama, Bheda etc shows that the incidents are too infinite to be exhausted by sixtyfour items Śṛṅgaraprakāśa P 594

राघवन् भरताभिनवगुप्तादीना मतेभ्य किञ्चिद्विलक्षणमेव यद्वदति न तत्साधु प्रतिभाति। न खलु प्राक्तनाना नाट्याचार्याणामभिमत सम्यक् स्पष्टम्। अत एव राघवन् महोदयस्य तत्र तिरस्कारो नास्वाभाविक।

वस्तुत सन्धयस्तु कथाखण्ड एव। कथाखण्डस्याङ्गान्येव सन्ध्यङ्गानि वचनात्मकानि भवन्ति। इमा यङ्गानि यथास्थानवैशिष्ट्य पूर्वापरप्रसङ्ग सामञ्जस्य च भजन्ते। तेषु वाग्वैदग्ध्यस्य चारुता विलसति। तत्रैव नाट्यकवे कलानैपुण्य शिक्षायते।

इमानि सन्ध्यङ्गानि न सहसा प्रकटन्ति। तानि प्रासंगिकतामौचितीं

---

१ दशरूपक ४ ८४

चार्पन्तो पृष्ठभूमिमपेक्षन्ते । सा पृष्ठभूमि सन्ध्यन्तरै प्रस्तूयते । तथा हि—संग्रहो भाषणं च सन्ध्यङ्गे सामदानयो पृष्ठभूमौ निर्दिष्टे—

सामदानादि - सम्पन्नः संग्रहः परिकीर्तितः ।
सामदानादि - सम्पन्नं भाषणं समुदाहृतम् ॥

अथ सामदानादिभि पृष्ठभूमिनिर्मीयते । तस्या पृष्ठभूमौ कस्यचिज्जनस्य संग्रहो भाषण वा भवति । संवरणनामकेन[1] सन्ध्यन्तरेण उद्भेदनामकं सन्ध्यङ्गं स्थाप्यते । तथा हि—

उद्भेदो गूढभेदनम् । दश० १.२७

यथा रत्नावल्या वत्सराजस्य कुसुमायुधव्यपदेशगूढस्य वैतालिकवचसा 'अस्तापास्त' इत्यादिना 'उदयनस्य' इत्यन्तेन उद्भेदनादुद्भेदः ।

अत्रानुष्ठेयार्थो विलसति—सन्ध्यङ्गानि वस्तुत कथांशा रमणीया एव । तानि तु रम्यतराणां सन्ध्यन्तराणा समाश्रयेण प्रासङ्गिकतामौचितीं च भजन्ते । अत एव सन्ध्यन्तराणि सन्ध्यङ्गानामाश्रयरूपाणि क्वचिद्भावात्मकानि अन्यत्र घटनात्मकानि एव भवन्ति । प्रेक्षकाणा प्रीतिजननमेवोभयोरुद्देश्यम् । सध्यन्तर सन्ध्यङ्गयोः पर्यायविकल्पनं तु वितथवाद प्रतिभाति ।[2]

---

१. 'संवरणमवहित्थम्' ना० शा० १९.१०९ अधिकृत्य भारती
२ नाटयशास्त्रीयानुसन्धानम् पृ० १

## प्रकरण-वक्रता

महाकविप्रबन्धानां सर्वेषामस्ति वक्रता ।
नूतनोपायनिष्पन्ननयवर्त्मोपदेशिनाम् ॥

नाटकादिषु काव्येषु प्रकरणवक्रता-विच्छित्तिः सोत्कर्षं सन्निधेया रसनिष्यन्दिनीति कुन्तकेन सम्यगुपन्यस्तम् ।[1] तत्र प्रथमं तावदध्यवसायोत्कर्षोऽभिज्ञानजानकीनाटकादुदाहृतं । तथा हि नीलस्य सेनापतेर्वचनम्—

शैला सन्ति सहस्रशः प्रतिदिशं वल्मीककल्पा इमे
दोर्दण्डाश्च कठोरविक्रमरसक्रीडा समुत्कण्ठिताः ।
कर्णास्वादितकुम्भसम्भवकथा. किं नाम कल्लोलिनी-
कान्ते गोष्पदपूरणेऽपि कपयः कौतूहलं नास्ति वः ॥

उपकार्योपकर्तृत्व-परिस्पन्द.

अत्रेतिवृत्ताशानामनुग्राह्यानुग्राहकभावोऽभिप्रेत, येन पूर्वोक्तमपरोक्तस्य साह्यभावेन समीचीनत्वमनुसन्धत्ते ।[2] यथोत्तररामचरिते प्रथमाङ्के जृम्भकास्त्राणां सीतागर्भशायिशिश्वोः समाराधनं कल्पितं, तदेव पञ्चमाङ्के पुनरधोलिखितस्यावसरं समाधत्ते—

व्यतिकर इव भीमो वैद्युतस्तामसश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अभिलिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम् ॥

अत्र विच्छित्तिरधोविधं कुन्तकेन विशदीकृता—

एकप्रकरणप्राप्त. प्रकारान्तरशोभित. ।
प्रबन्धो भासते नूतनपरिस्पन्द इवोदित. ॥

अङ्कवक्रता

अनुत्तमरसनिष्पन्दत्वेनाङ्गिरसोत्थापकस्य कस्यचिदङ्कस्य कथावक्रता·

---

१. यत्र नियन्त्रणोत्साहपरिस्पन्दोपशोभिनी ।
प्रवृत्तिर्व्यवहर्तृणां स्वाशयोल्लेखशालिनी ॥
अप्यामूलादनाशङ्क्यसमुत्थाने मनोरथे ।
काप्युन्मीलति निःसीमा सा प्रबन्धांशवक्रता ॥ वक्रोक्तिजीविते ४ १–२

२. प्रबन्धस्यैकदेशानां फलबन्धानुबन्धवान् ।
उपादायोपकर्तृत्वपरिस्पन्दः परिस्फुरन् ॥ तत्रैव ४ ५

विच्छित्तिं प्रादुष्करोतीति अङ्कवक्रता।[1] विक्रमोर्वशीये उन्मत्ताङ्कस्तस्योदाहरणम्। यथा वाभिज्ञानशाकुन्तलस्य चतुर्थोऽङ्क। उभयत्र शृङ्गाराभिनिवेशः।

**वस्त्वन्तर-वक्रता**

प्रधानवस्तुनि सविशेषं चमत्कारमाधातुमवान्तरवृत्तांशस्य वक्रता साह्यमाचरति।[2] यथा मुद्राराक्षसस्य षष्ठेऽङ्के रज्जुहस्तस्य पुरुषस्य राक्षसेन सह संवादः राक्षसं नायकसमीहितमेवाचरितु प्रोत्साहयति।

**गर्भनाटक-वक्रता**

कुन्तकानुसारेण गर्भनाटकं तु सर्वप्रबन्धसर्वस्वकल्पां वक्रतां पुष्णाति।[3] तत्रोदाहरणमुत्तररामचरितस्य सप्तमाङ्के विलसति। तत्स्पष्टयति कुन्तकः —

क्वचिदेव निरङ्कुशकौशलाः कुशीलवाः स्वीयभूमिकापरिग्रहेण रङ्गमलंकुर्वाणा नर्तकान्तरप्रयुज्यमाने प्रकृतार्थजीवित इव गर्भवर्तिन्यङ्कान्तरे तरङ्गितवक्रतामहिम्नि सामाजिकीभवन्तो विविधाभिर्भावनाभङ्गीभिः साक्षात्सामाजिकानां किमपि चित्तचमत्कारवैचित्र्यमाम्रूत्रयन्ति।

गर्भनाटकमेवान्तर्नाटकमिति उत्तररामचरितस्य टीकाकारेण वीरराघवेण प्रकरणेऽस्मिन् प्रोक्तम्।

**प्रकरण-विनिवेशनम्**

प्रकरणानां परस्परमौचित्यपूर्ण-ग्रन्थन वक्रतामावहतीति[4] पुष्पदूषितके प्रथमं प्रकरणम् –अतिदारुणाभिनवविप्रवासवेदनानिरानन्दस्य नन्दयन्तीमसम्मान्य समागतस्य समुद्रतीरे समुद्रदत्तस्योत्कण्ठाप्रकारप्रकाशनम्। द्वितीयमपि प्रस्थानात् प्रतिनिवृत्य निशीथिन्यामुत्कोचालङ्कारदानमूकीकृतकुवलयस्य कुसुमवाटिकागमनाकलिताननस्य सहचरीसङ्गमनम्, इत्याद्यनन्तागायाना कथारसनिष्यन्दतत्पराणां परिपाटिः सामञ्जस्यत्वेन कामपि कामनीयक-सम्पदमुद्भावयति। मालविकाग्निमित्रस्य तृतीयाङ्कस्यादौ नायकस्य प्रमदवनदर्शनमपरमुदाहरणम्।

---

१. यत्राङ्गिरसनिष्यन्द-निकषः कोऽपि लक्ष्यते।
पूर्वोत्तरैरसम्पाद्यः साङ्कादेः कापि वक्रता॥ वक्रो० ४.१०

२ प्रधानवस्तुनिष्पत्त्यै वस्त्वन्तरविचित्रता।
यत्रोल्लसति सोल्लेखा सापराप्यस्य वक्रता॥ व० जी० ४.११

३ सामाजिकजनाह्लादनिर्माणनिपुणैर्नटैः
तद्भूमिकां समास्थाय निर्वर्तितनटान्तरम्।
क्वचित्प्रकरणस्यान्तःस्मृतं प्रकरणान्तरम्
सर्वप्रबन्धसर्वस्वकल्पां पुष्णाति वक्रताम्॥ तत्रैव २.१२,१३

४. मुखाभिसन्धिसंह्लादि सविधानकबन्धुरम्।
पूर्वोत्तरादिसाङ्गत्यादङ्गानां विनिवेशनम्॥ तत्रैव ४.१४

वेणीसंहारस्य द्वितीयाङ्के भानुमत्या सह दुर्योधनस्य वेश्यायामिव विलासो वस्तुतो दुर्विनयाध्यासोऽसमञ्जसताभाजनं कवेरनया दृष्ट्या त्रुटिरेव ।

अभिनवरसोत्थानप्रकरणम्

नाटकादीनां काव्यानामन्तिमे भागे प्रसिद्धां कथापद्धतिं परित्यज्यापि रसान्तरं योजयितुमभिनवप्रकरणस्य निवेशनमपेक्षितम् ।[1] यथोत्तररामचरिते विदेहनन्दिनीसम्भोगशृङ्गारं उपसंहरणमात्रं । वेणीसंहारे वाद्भुतरसविनिवेशनप्रकरणे ।

फलान्तरान्वेषिप्रकरण-वक्रता

यत्रैकफलसम्पत्ति-समुद्यतोपि नायको गणनातीतेषु फलेषु कथानिमित्तेन प्रवर्तते, तत्र प्रकरणस्य फलान्तरान्वेषि वक्रतायाः सिद्धिर्भवति ।[2] यथा नागानन्दे नायको न केवलं शङ्खचूडमपि तु सकलं तत्कुलमेव रक्षति ।

रहस्यनिगूहनेन

रहस्यस्य निगूहनेन यथाकालं तस्य प्रकाशनेन कविर्नाटयकथाया उत्कर्षं प्रगुणयति । मुद्राराक्षसस्येतिवृत्तात्मकं रहस्यं केवलं चाणक्यस्यैव विदितम् । तदेवान्तिमेऽङ्के राक्षसाय प्रकाशयन् कविश्चमत्कारं समुत्कर्षयति ।

प्रतिसंस्कारजन्यवक्रता

उपात्तकथा काव्यार्थातिशयार्थं प्रतिसंस्क्रियते क्वचिदभिनवप्रकरणयोजनेन । तथा हि—अभिज्ञाने दुर्वाससो नायिकायै शापः । अनुत्तमस्य नाटकस्य नायकं कथं वान्यथा निर्दोषं स्यात्, वियोगोत्थं कारुण्यं च जनयेत् । प्रतिमानाटके भासेन नाटकस्यौदात्त्यं कैकेय्याश्चारित्रिकसमुत्थानेन दर्शितम्, यत्र सा भरतं निवेदयति ।

कैकेयी—त्वं न जानासि महाराजस्य शापम् । जात ! एतन्निमित्तमपराधे मा निक्षिप्य पुत्रको रामो वनं प्रेषितः, न खलु राज्यलोभेन । अपरिहरणीयो महर्षिशापः पुत्रविप्रवासं विना न भवति ।

कुन्तकेन साधु प्रोक्तम्—उत्पाद्यलवलावण्यादन्या लसतिवक्रता ।

---

१. इतिवृत्तान्यथावृत्तरससम्पदपेक्षया ।
रसान्तरेणरम्येण यत्र निर्वहणं भवेत् ॥
तस्या एव कथामूर्तेरामूलोन्मीलितश्रिय ।
विनेयानन्दनिष्पत्त्यै सा प्रबन्धस्य वक्रता ॥ वक्रो०जीव ४ १६-१७

२. यत्रैकफलसम्पत्तिसमुद्युक्तोऽपि नायकः ।
फलान्तरेष्वनन्तेषु तत्तुल्य - प्रतिपत्तिषु ॥
धत्त निमित्तता स्फारयश सम्भारभाजनम् ।
स्वमाहात्म्यचमत्कारात् सा पराप्यस्य वक्रता ॥ ४ २२,२३

## वृत्तान्तोपनयविधाः

> महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः।
> क्रीडनीयकमिच्छामो दृश्यं श्रव्यञ्च यद्भवेत् ॥
>
> ना० शा० १.११
>
> श्रव्य श्रवणयोगेन दृश्यं दृष्टिविलोकनैः।
> आत्मस्थं परसंस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥
>
> ना० शा० २५.२४

नाट्ये दृश्य श्रव्य च महत्त्वपूर्णमिति मत्वा भरतेनादौ क्रीडनीयकस्य श्रव्यं दृश्यं च भागद्वयं निर्दिष्टम्। तत्र श्रव्ये श्रवणस्य दृश्ये च पुनर्नेत्रस्य प्रधानोपयोग इति प्रोक्तम्।

मूलतो भरतानुसारेणेतिवृत्तांशस्योपनयो नाटकादिषु त्रिविधो भवति—दृश्य श्रव्य सूच्यञ्च। एतेषु दृश्यं श्रव्यञ्चाङ्कभागे सूच्य चाङ्कयोर्मध्ये प्रायो विनिवेश्यन्ते। इतिवृत्तांशस्य घटका एव पात्रीभूय यदि नमेतिवृत्तांशं प्रत्यक्षीकारयन्ति, तर्हि स वृत्तांशो दृश्यमिति प्रोच्यते। यदि मङ्केषु कस्यचिद् वृत्तांशस्य केवलमपरेषां संवादद्वारेण श्रावणं भवति, स वृत्तांशः श्रव्यमिति सज्ञायते।[1] अङ्कद्वयस्य मध्ये यो वृत्तांशो द्वयोरङ्कयोरनुसन्धानार्थं सूच्यते, न प्रत्यक्षीकार्यते स सूच्यमिति कथ्यते।

एतदनुसृत्य धनञ्जयेन दशरूपके प्रोक्तम्—

> द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः।
> सूच्यमेव भवेत् किञ्चिद् दृश्यश्रव्यमथापरम् ॥ १.५६

अत्र प्रश्न. समुदेति किं नाम दृश्यश्रव्यमेकमेव तत्त्वमुताहो दृश्य श्रव्याद् विश्लेषणीयम्? अभिनवगुप्तस्य मतेन दृश्य श्रव्य च विभिन्नमपि प्रचरतः। यथोक्तम् दृश्यमिति हृद्य श्रव्यमिति व्युत्पत्तिप्रदमिति प्रीतिव्युत्पत्तिप्रदमित्यर्थं इति।[2]

---

१. यथा स्वप्नवासवदत्तस्य प्रथमाङ्के ब्रह्मचारिणा लावाणकदाह-वर्णन, वेणीसंहारस्य चतुर्थेऽङ्के सुन्दरकेण कर्णार्जुनयुद्ध-वर्णनम्।

२. ना० शा० १.११ अधिकृत्य भारती। अत्र विशदयत्यभिनवगुप्त.—दृश्यश्रव्ययोस्तु बहुतरसाधारण्योपपत्ति। असाधारणे चेर्ष्याक्रोधादय एव प्रवर्तन्ते।

## दृश्यम्

भरतानुसारेण 'दृश्यं तु नाट्यस्य प्राणा'। तत्तु द्विविधं भवति। यथा—

(१) श्रव्यदृश्यम्

(२) नाट्यनिर्देशोपेत दृश्यम्

### श्रव्यदृश्यम्

श्रव्यदृश्ये सवादेन सह वर्तमानतत्सम्बन्धिकार्यजातमाङ्गिकाभिनयैरुपनीयते। अत्र प्रथम श्रव्य तु वाचिकाभिनय प्रेक्षकाणा श्रवण विषय। तदनुसारी आङ्गिकोऽभिनयस्तु प्रेक्षकाणा दर्शनविषय। तद्यथा मालविकाग्निमित्रे—

मालविका—(उपगान कृत्वा चतुष्पदवस्तु गायति)

दुर्लभ प्रियो मे तस्मिन् भव हृदय निराश-
महो अपाङ्गो मे परिस्फुरति किमपि वाम।
एष स चिरदृष्ट कथ पुनरुपनेतव्यो
नाथ मा पराधीना त्वयि परिगणय सतृष्णाम्॥

(ततो यथारसमभिनयति)

परिव्राजिका समीक्षते—

अङ्गैरन्तर्निहितवचनै सूचित सम्यगर्थ
पादन्यासो लयमनुगतस्तन्मयत्व रसेषु।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भाव नुदति विषयाद् रागबन्ध स एव॥ २८

स्वप्नवासवदत्तस्य षष्ठाङ्के—

पद्मावती—अहो आर्या खल्वियम्। आर्ये सखीजनसमुदाचारेणाजानन्त्याऽतिक्रान्त समुदाचार। तच्छीर्षेण प्रसादयामि।

अत्र शीर्षेण प्रसादनमिति दृश्य तु श्रवणानन्तरं भवतीति श्रव्य-दृश्यम्।

### नाट्यनिर्देशोपेत दृश्यम्

अत्र प्रेक्षका न किंचिच्छृण्वन्ति, केवलमङ्गाभिनयोपेतानि समक्ष क्रियमाणानि कार्याणि पश्यन्ति। तद्यथा मृच्छकटिके — माथर सवाहकमाकृष्य *श्रोणाभां मुष्टिप्रहारं ददाति। सवाहक सशोणित मूर्च्छा नाटयन् भूमौ पतति।* ददु रक उपसृत्यान्तरयति। माथुरो ददुरक ताडयति। ददु रको विप्रतीपं ताडयतीति नाट्यनिर्देशेन दृश्यम्।

यथा वाभिज्ञानस्य द्वितीयाङ्के—

उभौ (ऋषिकुमारकौ) — 'स्वस्ति भवत' इति वचनानन्तरं नाट्यनिर्देशन

फलानि उपहरतः। अत्र नायकाय फलोपहरणं केवलं दृश्यत एव। नात्र फलोपहरणविषयकं श्रवणम्।

दृश्यवैशिष्ट्यम्

१. दृश्यमङ्कभागे विलसति यत्र घटनास्तासां कर्तृभिः पात्रीभूय वर्तमानवत् प्रत्यक्षीकार्यन्ते।

२. तत्सम्बन्धी संवादः वर्तमानकाले प्रचरति।

३. उत्तमनायकानामेव रसासापेक्ष चरितं दृश्यत्वेनाङ्गीकरणीयम्, अभिनयेन तत्सम्बन्धिभावादीनां नाट्यरसास्वादन उपयोगात्। मध्यमाधमप्रकृतीनां कार्यजातं विष्कम्भके प्रवेशके वा भवेत्। केवलं कार्यकौतुकेन तासां चरितमङ्कभागे विनिवेशनीयम्।

४. अभिनय एव दृश्यवृत्तांशस्य परमोद्देश्यम्।

५. संवादद्वारेण दृश्यकथांशस्य वृत्तं रंगस्थितैः प्रमुखपुरुषैर्ज्ञेयं भवति।

६. दृश्यं तु प्रायशः श्रव्येण सम्पृक्तमेव प्रवर्तते। यत् संवादेन श्रूयते तदेवाभिनयेन प्रत्यक्षीकार्यते।

७. कक्षाविभागानुसारेण रङ्गपीठावधेरेव घटना दृश्येन प्रत्यक्षीकार्यन्ते।

## श्रव्यम्

श्रव्ये तु प्रायशो भूतकालिककार्यस्याभिनयं स्वभावतो न दृश्यते-संवादद्वारेण केवलं कार्यस्य वर्णना श्रूयते। अत एव श्रव्यत्वम्। तदेतदभिनवगुप्तेन संकेतितमधोवचनेन—एवं परस्थं वा यदा व्याख्यायते, न च प्रत्यक्षत्वेनैतदुपयुज्यते इति।[1]

श्रव्यं चतुर्विधं भवति

१. कार्ये व्यापृतानां मुखात्

२. कार्यस्य द्रष्टुर्मुखात्

३. दूतमुखात्

४. भाविकार्यविषयक-योजनात्मक-संवादेन।

कार्ये व्यापृतानां मुखात्

अभिज्ञानस्य द्वितीयेऽङ्के नायको विदूषकाय शकुन्तलया स्वकीयं प्रणयव्यापारं श्रावयति। घटनायाः पश्चाद् भावित्वेन नैतद् दृश्यम्। अपि तु केवलं श्रव्यमेव। अत्र श्रावणकाले प्रणय-व्यापारे भागग्राहिणः श्रावकस्य नायकस्य भावादयो दर्शनीयाः सन्ति। अत एव नेतःसूच्यम्।

१. ना० शा० २२.२४६ अभिनवस्य भारती।

विक्रमोर्वशीयस्य प्रथमाङ्केऽपि नायकयोः प्रणयव्यापारोपक्रमः प्रचरितः। स विषयो द्वितीयाङ्कात् प्राक् प्रवेशके चेटीविदूषकयोः संवादे प्रस्फुटति। तत्राप्यूह्य वर्तते यद्राज्ञा विदूषकोऽभिनवप्रणयव्यापारविषये विज्ञापितः।

एवमेव मुद्राराक्षसे —

चाणक्यः — राक्षस एव कञ्चित् कालं सेवितव्यः। ततः प्रत्यासन्नेषु परेषु प्रयोजनमिदमनुष्ठेयम्। ( कर्णे एवमेव ) १ २०/२१

अन्यविधमेवोह्य वा कर्णे वा भरतेन निर्दिशितम्। यथा

पूर्ववृत्तं तु यत्कार्यं भूयः कथ्यं तु कारणात्।
कर्णप्रदेशे तद्वाच्यं मामाशक्त्पुनरुक्तताम्॥ २५.९२

यथोत्तररामचरितस्य द्वितीयाङ्कस्य विष्कम्भे—

वासन्ती — ( सभयं, स्वगतम् ) कथं नामशेषेत्याह ?
( प्रकाशं ) किमत्याहितं, सीतादेव्याः ?

आत्रेयी — न केवलमत्याहितम्, सापवादमपि।
( कर्णे ) एवमिति।

मृच्छकटिके चतुर्थेऽप्यच्च—

मदनिका — स च तस्यार्यस्य हस्ते विनिक्षिप्तः।

शर्विलकः — किमर्थम्।

मदनिका — ( कर्णे ) एवमिव। ४.१७/१८

## सूच्यम्

पूर्वोक्ता उपनयविधाः सरसा हृद्या विस्तरोपपन्ना विलसन्ति। कवेः प्रतिभायाः समुन्मेषाय तत्र प्रकामावसरो वर्तते। तेषामङ्कभागे सन्निवेशः संस्तुत एव। सूच्यं प्रायशस्तावदर्थोपक्षेपकेषु निधीयते। किन्त्वङ्कभागेऽपि सूच्यस्याभावो न भवति। तत्र कथावस्तुप्रपञ्चो रसनिष्पत्तये नापेक्षितः अपि तु नाट्यवस्तुनः संरचनायाः सूत्रबन्ध एव सूक्ष्मरीत्या सक्षेपेण कथाशस्तत्र नैकदिवसानां मासानां वर्षाणां वा विवरणं प्रस्तौति। तान्येव वस्तूनि सूच्यानि विधीयन्ते यानि प्रायो रङ्गपरिधौ समाहितेभ्यो देशकालेभ्यो बहिर्भवन्ति।[1]

स्वगतेनैकोक्त्या च क्वचिदङ्कभागे सूच्यं भवति। यथोत्तररामचरितस्य प्रथमाङ्के —

रामः — ( स्वगतम्। ) शुद्धान्तचारी दुर्मुखः। स मया पौरजानपदेष्वपसर्पः प्रहितः।

मुद्राराक्षसस्य प्रथमाङ्के चाणक्यस्य सूच्यात्मकैकोक्तिः शोभते। चतुर्विधेष्वे-

१. वृत्तानि क्वचित् रङ्गाद्बहिर्घटितानि भवन्तीति नाविदितं सताम्।

तेषु श्रव्यं सूच्यं चाख्यानं ( Narration ) भवति। नाटक आख्यानांशस्य तावन्मात्र महत्त्व न भवति, यावन्मात्र दृश्यस्य। दृश्यं तु कर्तृणा नायकानां चरितानि साभिनयं प्रस्तौति। अरस्तू समीक्षते—

An imitation of a worthy or illustrious action, possessing magnitude in pleasing language, using separately the several species of imitation in its parts by men acting and not through narration, through pity and fear effecting a purification from such like passions[1]

सूच्यवैशिष्ट्यम्

१. सूच्य प्रायः द्वयोरङ्कयोर्मध्ये प्रवेशक-विष्कम्भकनाम्ना तयो सन्धानार्थं निधीयते। महावीरचरितेऽपवादरूपेण कथाप्रवेशनाम्ना सूच्यं प्रस्तावनायामस्ति।

२. तत्र सूच्यं तु प्रेक्षकाणां तथा च तत्रस्थानां नायकेतरपुरुषाणां परिचारकादीनां विज्ञानाय प्रवर्तते।[2]

३. प्रायो वृत्तवर्तिष्यमाणानां क्वचिदेव वर्तमानानामपि घटनानां सूच्येन विज्ञापना भवति।

४. सूच्यं तु मूलतः सूचकैः प्रास्तूयत, परतोऽपि उत्तमकोटिपुरुषाः सूच्ये भागग्राहिणो न दृश्यन्ते।

५. अभिनयावसरः सूच्येऽपवादरूपेण वर्तते। तत्र प्रधानकथाधारातो बाह्यो व्यापारो दृश्यत्वेन क्व चत् विधीयेत।

६. यथानामाभिनयविहीन संवाद सूच्ये प्रवर्तते।

७. यदि नाम कापि घटनोत्तमजनैरविज्ञातमेव रहस्यं रक्षणीयं किन्तु प्रेक्षकोरवश्य ज्ञेयमेव, तर्हि सूच्यद्वारेण तस्योद्घाटन भवेत्। न खलु नाटकवृत्ते सर्वं सर्वैर्ज्ञानिव्यमेव भवेत्।

८. माधुर्यविहीनं तावत्सूच्यं भवति। कथावस्तुन- को भागो दृश्येन, श्रव्येण, सूच्येन वा प्रस्तूयेतेति कविः स्वयमेव सौन्दर्यानुशीलनवृत्त्या वृत्तिरस-सापेक्षं निर्धारयति। तथापि नाट्यशास्त्रानुसारेण कतिपयवृत्तानि रंगे दर्शनीयानि न सन्ति, केवलं श्रव्येण, सूच्येन वा तानि प्रस्तूयेतेत्यग्रे वक्ष्यामः।

१. Sobel . The Theatre Handbook P. 625

२. यथाभिज्ञानशाकुन्तले दुर्वासःशापवृत्त केवल प्रियंवदानुसूयाभ्यां ज्ञात न कण्वादिभिः। नाटकस्य कौशलस्य मारस्य सविशेषमेव।

# अर्थोपक्षेपकाः सूचनोपायाश्च

अर्था ( काव्यार्था ) उपक्षिप्यन्ते सक्षेपेण प्रेक्षकेभ्य उपनीयन्त यैरिति अर्थोपक्षेपका भारतीये नाट्यशास्त्रे प्रवेशका इति संज्ञिता ।[1] यत्र काव्यार्था विस्तरेणोपनीयन्ते तत्रार्थप्रकृतयो भवन्ति। काव्यस्यार्थराशिरनेन विधिना द्विधा विभक्त ।

अर्थोपक्षेपकस्य सूच्यविषयाः

अर्थोपक्षेपकस्य प्रयोजनानि भरतेन निर्दिष्टानि सन्ति, किन्तु तेन स्पष्टमेव निगदित यन्नास्ति प्रयोजनानामवधारणा। अनिर्दिष्टानि सन्ति बहूनि प्रयोजनानि नाट्यशास्त्रे ।[2] प्रयोजनाना परिकल्पनाधोविधा विलसति —

वस्तुसूचना

दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम् ॥ १८.२६

इति भारतीय वचनमभिनवगुप्तेनाधोविध व्याख्यातम्—

यत्र दिवसकार्याणि अनेकानि, तत्र तन्मध्ये यत् सुन्दरप्रयोगमुपदेशोपयोगि च तत् प्रत्यक्षेण दर्शनीयम् ( अङ्कभागे )। अन्यत्सर्वं प्रवेशकेन वृत्तान्तार्थस्तदवशिष्टेनेतिवृत्तनिर्वाहफला अल्पा। सक्षिप्ता कथा यस्य प्रवेशकः। एतदेव पुनर्व्याख्यात भरतेन—

यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात् ।
वृत्तान्तः स्वल्पकथः प्रवेशकः सोऽभिधातव्यः ॥ १८.३७
कालोत्थानगतिरसौ व्याख्या सरम्भकार्यविषयाणाम् ।
अर्थाभिधानयुक्त. प्रवेशकः स्यादनेकार्थः ॥ १८.३५

---

१. प्रवेशकस्यास्मिन् प्रसङ्गेऽभिप्रायो वर्तते—अप्रत्यक्षदृष्टाना चेष्टितानामावेदका प्रवेशका । ना० शा० १८ ११ अधिकृत्य भारती ।

२ भरतोऽर्थोपक्षेपकस्य प्रयोजन निर्दिश्य तस्य बाहुल्यमितोऽप्यधिकमिति सङ्केतयति— 'प्रवेशक स्यादनेकार्थः' इति १७.६५
अन्यान्यपि प्रवेशकस्य प्रयोजनानि सन्ति । नत्वेतत्परिगणनम् ।

इत्यनेन कालसूचना,[1] रहस्यवृत्तयोद्घाटनम्,[2] उपायान्वेषणादि-मन्त्रणा[3] कर्मणामारम्भोपायः, कार्यसिद्धिरित्येतानि[4] प्रवेशके सूच्यन्ते।

पूर्वोक्तविवेचनेन स्पष्टं प्रतिभाति यदङ्केषु यादृशानि कथावस्तूनि भवन्ति, प्रायः तादृशान्येवार्थोपक्षेपकेष्वपि भवन्ति। वस्तुतो बहवो महत्त्वपूर्णघटना अर्थोपक्षेपकैरेव प्रेक्षकाणां ज्ञाता भवन्ति, न ता अङ्कोचिता सन्तीति कतिपय-नाट्यशास्त्रविदां मतम्।

यत्तु 'प्रवेशकः स्यादनेकार्यं' इति भरतेन प्रोक्तं, तत् सत्यमेव। यथा नागानन्दस्य तृतीयाङ्कात् पूर्वं प्रवेशके चेटी-विट-विदूषकादीनां सविस्तरः परिहासः।[5] तत्र सूच्यं तु वृत्तं स्वल्पमेव संक्षेपेण प्रोक्तम्।

अन्यच्च नास्ति अङ्कावतारे किमपि वस्तुविषयकं सूच्यम्। अङ्कावतारेण केवलं पूर्वापराङ्कयोर्वस्तुसातत्यमेव निगद्यते। तस्यार्थोपक्षेपकत्वमनुचितमेव संज्ञामात्रं कल्पनीयम्।

अर्थोपक्षेपकस्य प्रयोजनम्

अर्थोपक्षेपकस्य परमं प्रयोजनं संक्षिप्तिरेव वर्तते। महत्त्वपूर्णघटनानामपि स्वल्पेन वाक्यचयेनोपनयोऽर्थोपक्षेपकद्वारा सम्भवति। यथा प्रतिमानाटकस्य सप्तमाङ्कात्पूर्वं विष्कम्भके—

तापसः—'नन्दिलकः कुलपतिर्विज्ञापयति—एष खलु स्वदारापहारिणं त्रैलोक्य-विद्रावणं रावणं नाशयित्वा राक्षसगणविरुद्धवृत्तं गुणगणविभूषणं विभीषणमभिषिच्य देवदेवर्षिसिद्धविमलचारित्रा तत्र भवती सीतामादाय ऋक्ष-राक्षसवानरमुख्यैः परिवृतः सम्प्राप्तस्तत्रभवान् शरद्विमलगगनचन्द्राभिरामो रामः।

अत्र रावणविजयः विभीषणाभिषेकः, सीता-ग्रहणं, रामागमनं चेति घटनाः सूचिताः।

---

१. कालोत्थानगतिरिति कालोदयसूचकः कश्चित् प्रवेशकः।

२. व्याख्ययमा गूढोऽर्थो व्याख्यायते।

३. सरम्भार्थं।

४. कार्यस्यार्थः पश्चाद्कस्यानुष्ठानम्। कर्मणामारम्भोपाय इत्यादि।

५. पूर्वाजनानां जीवन-चित्रणमुत्तमकोटिकजनानां समक्षं न करणीयमिति सौष्ठवमनुसृत्य हीनकोटिकपात्राणां समक्षं प्रवेशके हीनदृश्यानि स्थानमर्हन्ति। अभिज्ञानस्य षष्ठाङ्कात् पूर्वं मत्स्यजीवी रक्षिणी, शकारप्रायाणि पात्राणि सन्ति। तेषां जीवन-दर्शनं बालानां कृते योग्यमेव।

नाटके किं वृत्तं कदा कस्मिन् प्रसङ्गे प्रधाननायकादीनां ज्ञातं भवत्विति महता कौशलेन संविधीयते। यदि नाम मध्यमाधमजनैरेव किमपि पूर्वंतरज्ञातं प्रधानजनैश्च पश्चाद् ज्ञातं भवेदिति नाट्यकौशलदृष्ट्यापेक्षितं स्यात् तर्हि सम्बद्धमध्यमाधमजनान् पात्रीकृत्य प्रवेशकविष्कम्भकादयो विरच्यन्ते। तद्यथाभिज्ञाने चतुर्थाङ्कात्पूर्वं विष्कम्भके शकुन्तलाशापस्य वृत्तान्तोऽनसूयाप्रियंवदे जानीतः। सप्तमाङ्के शापवृत्तं शकुन्तलादुष्यन्तादयो जानन्ति। एतस्य संविधानस्य नाटकीयोत्कर्षं विशिष्टस्थानं सुविदितमेव।

नाट्यशास्त्रानुसारेण रङ्गपीठे बहुविधा घटना दर्शनीया न भवन्ति।[1] तेषां प्रेक्षकेभ्यः सूचनार्थोपक्षेपकाः सम्भवन्ति।

कविना विनिर्णीते रङ्गपीठस्य सीमितपरिधौ घटमानानि कार्यजातान्यवाभिनयद्वारेण दृश्यानि भवितुमर्हन्ति। तस्य परिधेर्बहिः समकालं घटमानानि कार्याणि यथावश्यकं प्रेक्षकेभ्यः प्रवेशकेन नेपथ्ये इति विधानेन, आकाशवाण्या वार्थोपक्षेपकैः सूच्यन्ते। यथा वेणीसंहारस्य तृतीयाङ्कान्ते 'नेपथ्ये' इति प्रयोगेण भीमो दुःशासनं निगृहीतवानिति घटना।

केवलं वर्तमानघटना एवाभिनयेनैकस्मिन्नङ्के एकदिनस्य दृश्यं भवति।[2] प्रवेशकादिभिरर्थोपक्षेपकैः साधारणतो भूतकालिकी, भविष्यत्कालिकी च नैकवर्षाणां मासानामपि च, घटना सूच्यते।[3] क्वचिद् रङ्गाद्बहिर्घटमानं वर्तमानमपि कार्यं प्रवेशकेन प्रेक्षकेभ्यो विज्ञाप्यन्ते।[4]

---

१. युद्धं राज्यभ्रंशो मरणं नगरावरोधनं चैव।
प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि॥ ना० शा० १८.३८

२. तत्र भरतप्रतिपादितो नियमः —
अङ्कच्छेदे कृत्वा मासकृतं वर्षसंचितं वापि।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित्॥ १८.३१

इदमधिकृत्याभिनवगुप्तेन प्रोक्तम्—यस्मान्मासकृतं वर्षसञ्चितं वा यच्च तत्कार्यं सामाजिकानां हृदयगतं तस्मात् प्रवेशक-विष्कम्भकौ कर्तव्यौ। परिमितं तु यदनुसन्धेयं तत्राङ्कमुखमल्पानुसन्धेये चूलिका, अल्पतमे अङ्कावतारः। नैतद्व्यवहारोपपन्नमिति चिन्त्यमेव।

३. कश्चिच्चिरकालिकस्येतिवृत्तावधेः पञ्चषदिवसानां घटना पञ्चषाङ्कैर्वर्णयति, शेषकालस्यावश्यकघटना प्रायोऽर्थोपक्षेपकैः सूच्यन्ते।

४. उत्तररामचरितस्य षष्ठाङ्कात्पूर्वं विष्कम्भके वर्तमानयुद्धस्य वर्णनं वर्तते। प्रतिज्ञायौगन्धरायणस्य चतुर्थाङ्कात् प्राक्, वेणीसंहारस्य तृतीयाङ्कात् प्राक् तापसवत्सराजस्य द्वितीयाङ्कात्प्राक् अभिषेकस्य षष्ठाङ्कात् प्राक् च वर्तमानघटना सूचिताः सन्ति।

प्रवेशके पूर्वाङ्कस्य कथांशस्य पुनरावृत्तिरपि क्वचिद् दृश्यते।[1] असूचितं पात्रं रङ्गं न प्रविशति। प्रवेशकान्ते सूचना दीयते यदङ्कारम्भे इद पात्रं रङ्गं प्रविशति। यथा वेणीसंहारस्य तृतीयाङ्कात् प्राक् प्रवेशके—

राक्षसः—(नेपथ्याभिमुखमवलोक्य) वसागन्धे, एष खल्वश्वत्थामा कृष्टासिपत्र इत एवागच्छति।

तदनन्तरं तृतीयाङ्कारम्भे प्रविशत्यश्वत्थामा इत्यनेनाश्वत्थाम-प्रवेशः सूचितः। अन्यच्च प्रतिमानाटकस्य चतुर्थाङ्कात् पूर्वं प्रवेशके विजया कथयति—

एवं गते कुमारः (भरतः)। एतदनुसृत्य चतुर्थाङ्कारम्भे—ततः प्रविशति भरतः।

पात्रपरिचयः

पात्राणां परिचयः प्रेक्षकाणां कृते महत्त्वपूर्णः इति विज्ञाय कवयः प्रवेशकेषु क्वचित् पात्रपरिचयं सविशेषं वर्णयन्ति। मालविकाग्निमित्रस्य प्रथमाङ्कात् पूर्वं विष्कम्भके मालविकापरिचयो विलसति।

अङ्गिरसानुरोधेनापि कतिपयघटना दृश्यविधानेन शेषाश्च श्रव्यविधानेन सूच्यविधानेन वा प्रेक्षकेभ्य उपनीयन्ते। यथा शृङ्गारप्रधानेऽभिज्ञाने दुर्वाससः शापः विष्कम्भकेण सूचितः। शापस्तु वीरोचितो रौद्रोचितो वा भवति। न खलु शृङ्गारप्रधाने नाटके शापस्य स्थितिर्दृश्यभागे उचिता। तत्रैव षष्ठेऽङ्के मातलिः विदूषकं निगृह्णातीति घटना सूचिता, यतो हि नाम शृङ्गारप्रधाने नाटके ईदृशं घोरं कर्माभिनयेन वर्णनीयं न स्यात्।

अङ्कानुसन्धानम्

अभिनवगुप्तानुसारेणार्थोपक्षेपकोऽङ्कार्थानुसन्धानाय भवति।[2] परवर्त्यङ्कस्य भूमिकारूपेणाङ्कावतारोऽङ्कमुखचूलिका इत्यर्थोपक्षेपका विलसन्तीति कोहलेन प्रतिपादितम्। तद्यथा—

त्रिधाङ्कोऽङ्कावतारेण चूडयाङ्कमुखेन वा। इति

ना० शा० १९.१४ अधिकृत्य भारत्यामभिनवगुप्तेनोद्धृतम्। अर्थात् परवर्त्यङ्ककथाया भूमिका क्वचिदङ्कावतारेणान्यत्र चूलिकयाङ्कमुखेन वा प्रस्तूयते।

---

१. विक्रमोर्वशीयस्य द्वितीयाङ्कस्य प्रवेशके प्रथमाङ्कस्य नायकयोः प्रणयस्य सूत्रपातः पुनरपि संक्षेपेण वर्णितः।

२. 'अङ्कसन्धानरूपस्य प्रवेशकस्य।'

अथ प्रवेशकोऽङ्कार्थसन्धानाय भवति। ना० शा० १८-२८ अधिकृत्य भारती।

अङ्कास्ये परवर्त्यङ्कस्याङ्कानां वा कथावस्तुनो भूमिकारूपेण तस्य लेश वा सक्षेपेण पूर्वकथनं प्रेक्षकाणां विबोधसौकर्यं जनयति।

प्रवेशकविष्कम्भकाभ्यामपि परवर्तिकथाभूमिका संक्षेपेण प्रस्तूयते। यथा अभिज्ञाने चतुर्थाङ्कस्य कथा पूर्ववर्तिविष्कम्भके प्रियंवदावचनेन—

सखि, त्वरस्व शकुन्तलाया प्रस्थानकौतुकं निर्वर्तयितुमिति।

योरपीय-मध्ययुगीन-नाटकेषु भाविघटनानां पूर्वसूचनाधमपात्रमध्यमतमा कृतेति मिलेट महोदयः समीक्षते—

The least laborious type of exposition was the introduction through the speeches of minor characters of whom the playwright could create as many as he pleased and of whom he need make no use, once the exposition was out of the way *The Art of the Drama. P 184*

सूचकपात्राणामीदृशी अवतारणाभिज्ञानशाकुन्तलस्य षष्ठाङ्कस्य प्रवेशके वर्तते। तत्र शकार, मत्स्यजीवी, रक्षिद्वयं च सकृदेव नाटके प्रकटन्ति।

## अर्थोपक्षेपकाणामवस्थानम्

पुस्तकेषु प्रायशः प्रवेशकविष्कम्भयोरपि अङ्कभागे मुद्रणं दृश्यत इति त्रुटिरेव। भरतादिबहुभिर्नाट्यशास्त्राचार्यैः स्पष्टमेव प्रोक्तं यत् साधारणतः प्रवेशको द्वयोरङ्कयोर्मध्ये भवेत्। तथा हि—

भरतः

अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्तः। १८.२९

सिंहभूपालः

अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः। ३.१९४

शारदातनयः

वृत्तवर्तिष्यमाणाङ्कद्वयमध्ये निवेशनम्॥ ७.२२४
एतेष्वङ्कबहिर्भावः स्याद् विष्कम्भप्रवेशयोः। ७.२४३

सागरनन्दी

प्रवेशकोऽङ्कान्तरसन्धिषु कर्तव्यः।

बहुरूपमिश्रः

एषु विष्कम्भकादिषु पञ्चसु विष्कम्भक-प्रवेशकयोरेवाङ्कबहिर्भावः दशरूपक। १.६२ अधिकृत्य दीपिका

अङ्कान्तरालेऽपि प्रवेशकः

नाट्यशास्त्रीया कारिका प्रवेशकस्यावस्थानविषये वर्तते—

अङ्कान्तरालविहितः प्रवेशकोऽर्थक्रियां समभिवीक्ष्य।
संक्षेपात् सन्धीनामर्थानां चैव कर्तव्यः॥ १९.५६

अभिनवगुप्त इमां कारिकां विवृण्वन्नाह—

संक्षेपात् सन्धीनामर्थानां चेति। सन्धीनां च संक्षेपो युद्धराज्यभ्रंशादीनां चार्थानां यः संक्षेपस्तमभिधाय अङ्कस्य अङ्कयोर्वान्तराले मध्ये विष्कम्भको (प्रवेशको) योज्यः। अर्थात् विष्कम्भक (प्रवेशक) स्यावस्थान द्विविधं भवति—(१) अङ्कस्य मध्ये (२) अङ्कयोर्मध्ये च। अत्र महान् वितर्को दृश्यते। साधारणतो मुद्रितपुस्तकेषु प्रवेशकविष्कम्भकविषये द्विधा त्रुटिर्दृश्यते—

(१) अङ्कस्य मध्ये ये प्रवेशका भवन्ति, ते तु न तत्त्वतः परिच्छिन्नाः।

(२) अङ्कयोर्मध्ये ये प्रवेशका भवन्ति, ते तु परवर्त्यङ्कस्य भागा इव मुद्रयन्ते।

अङ्कमध्ये प्रवेशकयोराहरणान्यधोलिखितानीमं विषयं विशदयन्ति—

(१) मृच्छकटिके नवमाङ्क, ऊनविंशश्लोकात् पश्चात्—

(ततः प्रविशति गृहीताभरणो विदूषकः)

विदूषकः — प्रेषितोऽस्मि आर्यचारुदत्तेन वसन्तसेनासकाशम् तत्रालङ्करणानि गृहीत्वा, यथा — 'आर्यमैत्रेय! वसन्तसेनया वत्सो रोहसेन आत्मनोऽलङ्कारेणालंकृत्य जननी-सकाशं प्रेषित। अस्या आभरणं दातव्यम्। न पुनर्ग्रहीतव्यम्। तत्समर्पय' इति। तद्यावद् वसन्तसेनासकाशमेव गच्छामि। (परिक्रम्यावलोक्य चाकाशे — कथं भाव रेभिल.। भो रेभिल! किं निमित्तं त्वमुद्विग्न इव लक्ष्यसे? (आकर्ण्य) किं भणसि — 'प्रियवयस्यश्चारुदत्तोऽधिकरणमण्डप आहूतः' इति। तन्न स्वल्पेन कार्येण भवितव्यम्। तत्पश्चात् वसन्तसेनासकाशं गमिष्यामि। अधिकरण-मण्डप तावद् गमिष्यामि।

अयं गद्यांशो दृश्यं कथावस्तुनो प्रास्तौति। अत एवार्थोपक्षेपक एव। तत्रापि अधमपात्रेण विदूषकेण प्रोक्तत्वात् नास्त्ययं विष्कम्भकः। न च चूलिकायम्। सूतमागधवन्दिनश्चूलिकाया वक्तारो भवेयुः। तत्राङ्कास्याङ्कावतारयोः कथैव

नास्ति । नायमाकाशे वचन एकोक्तिर्वा । वस्तुतो गद्यांशोऽयं प्रवेशकः सूच्यं चाङ्कमध्ये नवीनं दृश्यमेव ।

प्रवेशके सूच्यं केवल रङ्गपीठे वर्तमानानामधमकोटिकपात्राणां कृते भवति । प्रेक्षकाणां विज्ञापनार्थं तु भवत्येव । अत्र न कश्चिदन्यो मध्यमकोटिकमुत्तमकोटिकं वा पात्रं प्रवेशकेन सूच्यं तथ्यं विजानाति । प्रवेशकस्येदं परमावश्यकं लक्षणं तु पूर्वोक्ते गद्यांशे दृश्यत एव । अन्यानि चोदाहरणानि मृच्छकटिकस्य पञ्चमाङ्के षष्ठश्लोकात् पश्चात् विदूषकवचनम्—

( प्रविश्य )

विदूषकः—अहो गणिकाया लोभोऽदक्षिणता च । यतो न कथापि कृतान्या । अनेकधा स्नेहानुसारेण भणित्वा किमपि, एवमेव गृहीता रत्नावली । इत्यारभ्य 'तद्यावदुपसर्पामि, इति यावत् ।

अविमारके चतुर्थाङ्के विंशश्लोकानन्तरम्—

विदूषकः—'अहो तत्रभवतः सुगृहीतनामधेयस्य इत्यारभ्य मुहूर्तकं विश्रम्य गमिष्यामि' इति यावत् ।

तत्रैव द्वितीयाङ्के तत प्रविशति विदूषक )

विदूषक—अहो नगरस्य शोभा सम्प्रति । इत्यारभ्य अथवा सर्वमलङ्कारो भवति सुरूपाणाम् । जयतु भवान् ।' इति यावत् ।

अभिषेकनाटकस्य द्वितीयाङ्के सीताया एकोक्तेरनन्तरं हनुमान् प्रविशति । तदनन्तरम्—अङ्गुलीयकहस्त इत्यारभ्य रावणस्य प्रवेशं यावत् । अनेन प्रवेशकेन रावणं प्रवेशयत इति प्रवेशक सार्थ ।

अभिज्ञानशाकुन्तलस्य पञ्चमाङ्के द्वितीयश्लोकानन्तरं कञ्चुकी प्रविशति । यथा

कञ्चुकी—अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि इति यावत् ।

मालविकाग्निमित्रस्य तृतीयेऽङ्के

( ततः प्रविशति पर्युत्सुका मालविका )

मालविका—अविज्ञातहृदयं भर्तारमभिलषन्ती आत्मनोऽपि तावल्लज्जे । इत्यारभ्य तत्, परिदेविष्ये तावत् विस्रब्धं मुहूर्तकम् ।

नागानन्दे प्रथमाङ्के सप्तदशश्लोकानन्तरम्—

तापस—आज्ञापितोऽस्मि कुलपतिना कौशिकेन । यथा—वत्स शाण्डिल्य पितुराज्ञया सिन्धुराजमित्रावसुर्भविष्यद्विद्याधरचक्रवर्तिने कुमारजीमूतवाहनमिहैव मलयपर्वते क्वापि वर्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टु-

मथ्यागतः । इत्यारभ्य 'तत् तपोवनगौरीगृहमेव गच्छामि' इति यावत् प्रवेशकः ।

यदि नाम प्रवेशकोचितसूच्यस्यावश्यकताङ्कमध्य आपतति, तर्हि अङ्कमध्ये-प्रवेशकेषु ॥ घटना मुख्यतः सूच्यते या पूर्वत एव वर्णिताङ्ककथायास्य समकालं घटत इत्यवधेयम् । यस्मिन्कालावधौ किमपि रङ्गे क्रियते, तस्मिन्नेव कालावधौ रङ्गाद्बहिः कृतं कार्यं प्रवेशकेनोपनीयते ।

साधारणतः प्रवेशकविष्कम्भकौ नाटक-प्रकरण-नाटिकासु दृश्यन्ते । अपवादरूपेण एकाङ्केषु रूपकेष्वपि प्रवेशको वर्तते । यथा ऊरुभङ्गस्य प्रस्तावनान्तर प्रवेशकः सन्निविष्टः ।

शेषा अर्थोपक्षेपका अङ्कास्यमङ्कावतारश्चूलिकाश्चाङ्कमध्ये निवेश्यन्ते । अङ्कास्यमङ्कावतारश्चाङ्कस्यान्तिमे भागे स्थानमर्हतो यतो हि नाम परवर्त्यङ्कस्य वस्तु सातत्यं च क्रमशस्ते सूचयतः ।

## अङ्कास्यम्

द्विविधं भवति अङ्कास्यमधोविवृतम्—

(१) येनाङ्कास्येन केवलमेकस्यैव परवर्त्यङ्कस्य विष्कम्भकस्य वा कथा संक्षेपेण सूच्यते ।

(२) येनाङ्कास्येन सर्वेषां परवर्तिनामङ्कानां कथा संक्षेपेण सूच्यते ।

तत्र प्रथमविधस्योदाहरणं बालचरितस्य चतुर्थाङ्कस्यान्तिमे श्लोकेऽधोविधं दृश्यते—

दामोदरः — बाढम् । प्रथमः कल्पः । एष भोः ।

प्रभ्रष्टरत्नमुकुटं परिकीर्णकेशं विच्छिन्नहारपतिताङ्गदलम्बसूत्रम् ।
आकृष्य कंसमहमद्य दृढं निहन्मि नागं मृगेन्द्र इव पूर्वकृतावलेपम् ॥

अङ्कमुखेन विष्कम्भके वस्तुसूचना प्रतिमानाटकस्य पञ्चमाङ्कस्यान्तिमे श्लोके वर्तते —

मद्भुजाकृष्ट-निस्त्रिंशकृत्तपक्षक्षतच्युतैः ।
रुधिरैरार्द्रगात्रं त्वां नयामि यमसादनम् ॥५.२२

अतः परं विष्कम्भके वृद्धतापसौ जटायुरावण-युद्धं संक्षेपेण संवदतः ।

द्वितीयविधप्रकारस्य विष्कम्भकरूपेण मालतीमाधव-प्रकरणस्य प्रथमाङ्कात् पूर्वं दृश्यते । अस्मिन्नङ्कास्ये प्रकरणस्य सम्पूर्णा कथा संक्षेपेण निगदिता । एतद-धिकृत्य शारदातनयेन निगदितम् —

सूचनं सकलाङ्कानां ज्ञेयमङ्कमुखं बुधैः ।

विश्वनाथेनाङ्कास्यस्य परिभाषा विशदयता साहित्यदर्पणे शारदातनयमघोविध समर्थयति —

यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाखिला ।
तदङ्कमुखमित्याहुर्बीजार्थख्यापकं च तत् ॥६ ५९

यथा मालतीमाधवे प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथा प्रसङ्गस्य सन्निवेशं सूचयति ।

## अङ्कावतारः

यत्र कस्यचित्सन्धे कथा नैकस्मिन्नङ्के परिसमाप्यते तदा पूर्वाङ्कस्यान्तिमे भाग इव सूचना प्रवर्त्यते यदिमान्येव पात्राणि अस्मिन्नेव स्थाने सातत्येन कार्यक्रमं निष्पादयिष्यन्ति[1] । इयं सूचनाङ्कावतार इति सञ्ज्ञितम् । तद्यथा मालविकाग्निमित्रस्य प्रथमाङ्कस्यान्ते —

परिव्राजिका — हन्त प्रवृत्तं संगीतम् ।

राजा — धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरागोऽयम् ।
अवतरत सिद्धिपथं शब्दः स्वमनोरथस्येव ॥

### चूलिका

चूलिका तु वैतालीय-पाठः । लोके चूलिकाया व्युत्पत्तिश्चूलाया भवति । चूला राजप्रासादस्य चन्द्रशालेति तत्र शिखरस्थः कक्ष आसीत् ।[2] तत्र सूत मागधबन्दिनः काले काले राजप्रशंसामधिकृत्य श्लोकानगायन् कालगतिमसूचयन्, राज्ञो विजयादीरुपलब्धीरवर्णयश्च । तेषां गानमेव चूलिकेति प्रसिद्धमासीत् । मूलतो नाट्यशास्त्रीया चूलिकोपरिवर्णितैवासीत् । गायकास्तु वैतालिका·

---

१. अङ्कान्तर एवाङ्को निपतति यस्मिन् प्रयोगमासाद्य ।
नाट्यार्थकथायोगाद् विज्ञेयोऽङ्कावतारोऽसौ ॥
इति कोहलमतं ना० शा० १८.२८ अधिकृत्य भारत्याम् ।

२. राजप्रासादानां गोपुरस्य द्विपार्श्वयोर्नाट्यशाले आस्ताम् । वर्धमानचरिते १८ ११ । गोपुराणि नगरद्वाराणि बभूवुः । मन्दरोपमैर्गोपुरैर्नगरं रक्षितमिति महाभारते —
द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम् ।
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः ॥
मानियर-विलियम्स-महोदयस्य कोशानुसारेण चूलः प्रासाद-शिखरकक्षः — A toproom of house अस्ति । अमरकोशानुसारेण चन्द्रशाला शिरोगृहम् । तत्र संगीतमासीदिति—वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति । रघु० १३ ४० इत्यनेन प्रमाणितम् ।

मागधादयो बहिःपात्राणि सन्ति।[1] ते केवलं सन्देशवाहकाः। पात्राणि तु फलानुवर्तिकार्य-घटका एव भवन्ति।

शिशुपालवधे वैतालिकानां (सूतमागध वन्दिनां) कलगिरो वर्णिताः—
वैतालिकाः स्फुटपद-प्रकटार्थमुच्चैर्भोगावलीः कलगिरोऽवसरेषु पेठुः ॥५.६७

चूलिका रूपकेषु प्रायशोऽङ्कान्ते निवेश्यते,[2] अपराङ्कस्य च कथा-वस्तु सङ्केतयति। अत एव चूलिकायाः प्रयोजनमङ्कानामनुसन्धानं प्रतीयते। तद्यथाभिनवगुप्तेन प्रतिपादितम् —

अत्रार्थस्य कस्यचित् सम्यगन्यत एवानभिसन्धानपूर्विकाप्तिः प्राप्तिरिति चूडा दर्शिता। तद्यथा रत्नावल्यां वैतालिकपाठाद् 'हर्षामुदयनस्य' इत्यस्य उपयोगी सम्यगर्थः प्राप्त। तत्प्रत्यभिज्ञामूलत्वात् सागरिकानुरागस्य चूलिकया यदोत्तराङ्कस्य कथा-सङ्केतं स्यात् तदा सोऽङ्कः चूलिकाङ्क इति कथ्यते।[3] इयं चूलिका नैपथ्योक्ते सर्वथा भिन्नैव।[4] द्वयो साम्य स्थिपभ्मात्रमेव यदभिनयकर्मणि चूलोक्ति, नैपथ्योक्तिश्चोभे नेपथ्यस्थानादुच्येते, यद्यपि लोके चूलिका चन्द्रशालायां सूतमागधादिभिर्गीतेति प्रसिद्धिः।

## नेतारः

### उत्तममध्यमाधमाः

अर्थोपक्षेपकेषु नायकानामवधारणं स्थूलदृष्ट्यैव कृतं नाट्यशास्त्रीयग्रन्थेषु। तत्र प्रवेशकविष्कम्भकयोर्नेतारस्तु स्पष्टतया निगदिताः। यदि नाम मध्यम-पात्राण्येव भवन्ति, तर्हि विष्कम्भकः शुद्धो भवति। यदि मध्यमाधमानि पात्राणि सन्ति तर्हि विष्कम्भको मिश्रीभवति। प्रवेशकेषु केवलमधमान्येव पात्राणि भवन्ति।

---

१. वैतालिकास्तु कालयतिसूचका आसन्।

२. चूलिकाङ्कमध्येऽपि क्वचिन्निवेशिता। यथा, मुद्राराक्षसस्य चतुर्थाङ्के।

३ ना० शा० १८.१६ अधिकृत्य भारती।

४. अभिनवगुप्तानुसारेण चूलिका तु वैतालीयपाठः यथोक्तम्—
नेपथ्यपाठेऽपि कञ्चुकी पठति, वीरोऽयमङ्गद पठति, यौगन्धरायण पठति इति। एवंभूतवृत्तिचिरावृत्त्यादिविशेषप्रतिपादकेनैव पाठेन भवितव्यम्। वैतालीयपाठेऽपि समुचितावसरावेदनप्रधानेऽवश्यमयं आदातव्य एव। ना० शा० १७.१०६ अधिकृत्य भारती। अत्र नेपथ्यपाठो वैतालीय पाठाद् भिन्नो दर्शितः।

किंविधानि भवन्त्युत्तममध्यमाधमानि पात्राणीति महान् वितर्कः। भरतानुसारेण—

जितेन्द्रियज्ञानवती नानाशिल्पविचक्षणा।
दक्षिणाथ महालक्ष्या, भीतानां परिसान्त्वनी॥
नानाशास्त्रार्थसम्पन्ना गाम्भीर्यौदार्यशालिनी।
स्थैर्य-त्यागगुणोपेता ज्ञेया प्रकृतिरुत्तमा॥
लोकोपचारचतुरा शिल्पशास्त्र-विशारदा।
विज्ञान-माधुर्ययुता मध्यमा प्रकृतिः स्मृता॥
रूक्षवाचोऽथ दुःशीलाः कुसत्त्वा स्थूलबुद्धयः।
क्रोधना घातकाश्चैव मित्रघ्नाश्छिद्रदर्शिनः॥
पिशुनास्तूद्धतैर्वाक्यैरकृतज्ञास्तथालसाः ।
मान्यामान्यविशेषज्ञाः स्त्रीलोलाः कलहप्रियाः॥
सूचकाः पापकर्माणः परद्रव्यापहारिणः।
एभिर्दोषैस्तु सम्पन्ना भवन्तीहाधमा नराः॥ २४.२-७

भरतो नारीणामपि त्रिविधां प्रकृतिं वर्णयति। तद्यथा—

मृदुभावा ह्यचपला स्मितभाषिण्यनिष्ठुरा।
गुरूणां वचने दक्षा सलज्जा विनयान्विता॥
रूपाभिजनमाधुर्यैर्गुणैः स्वाभाविकैर्युता।
गाम्भीर्य-धैर्य-सम्पन्ना विज्ञेया प्रमदोत्तमा॥
नात्युत्कृष्टैरनिखिलैरेभिरेवान्विता गुणैः।
अल्पदोषानुविद्धा च मध्यमा प्रकृतिः स्मृता॥
अधमा प्रकृतिर्या तु पुरुषाणां प्रकीर्तिता।
विज्ञेया सैव नारीणामधमानां समासतः॥ २४ ९-१२

भरतः कतिपयप्रकृतेर्नाम्नापि वर्गीकरणं स्पष्टयति। तथा हि—नपुंसकोऽधमः। तथैव प्रेष्यादयः शकारः, विटश्च। अभिनवगुप्तानुसारेणोत्तमस्तु देवता-गुरु-नृपादयः सन्ति, वणिगमात्यौ मध्यमौ, विदूषकश्चाधमः।[1]

---

१. ना॰ शा॰ ६ १७२-१७३ अधिकृत्य भारती।
योरोपीयनाटकेष्वपि त्रिविधा नायकाः सम्मताः। (1) Great and illustrious, (2) Middle class, farmer, soldier, petty merchant and, (3) Humble persons, mean and ludicrous

नायकानां कोटेर्निर्धारणे नास्ति समत्वं विविधेषु नाट्यशास्त्रीयग्रन्थेषु ।

(१) विश्वनाथानुसारेण पीठमर्दाद्या उत्तमा विटविदूषकौ च मध्यमाः सन्ति ।[1]

(२) भोजोऽप्योविधं नायकान् विभजते — गुणतः उत्तमः मध्यमः, कनिष्ठः, साधारणादयः । प्रकृत्या सात्त्विकः, राजसः, तामसः इति कोटित्रयमपि स निर्दिशति । नायिकायाश्च नायकस्य आभिगामिकान् गुणान् निर्दिशन् भोज उत्तमादीन् तेषां पूर्णतया सर्वत्वेन, न्यूनत्वेन चावधारयति ।[2]

(३) अभिनवगुप्तानुसारेण परिजनेष्वपि उत्तमा भवन्ति ।[3]

(४) भरतोऽभिनवगुप्तश्चस्त्रियमधमकोट्या अवधारयतः ।[4]

(५) निरुक्तानुसारेण उत्तमा बुद्धिपूर्वकं कर्माकर्माणि विचार्य व्यवहरन्ति, मध्यमा विषयोपभोगभावनया यथावश्यकं समाचरन्ति, अधमाः केवलमामुष्मिकं वर्तमानं च समीक्षन्ते ।[5]

(६) सिंहभूपालानुसारेण—

उक्तैर्गुणैश्च सकलैर्युक्तः स्यादुत्तमो नेता ।
मध्यः कतिपयहीनो बहुगुणहीनोऽधमो नाम ॥[6]

(७) कालिदासानुसारेण—

आपन्नार्तिप्रशमनफला सम्पदो ह्युत्तमानाम् ॥

भरतप्रोक्तमुत्तमादीनां लक्षणं परिसंख्यानं च लक्ष्यकोटिषु न सम्यग्घटते । प्रवेशकविष्कम्भकेषु याधमा प्रकृतिर्वर्तते सा तु भरतकृतलक्षणेन कदापि सम्धार्यते । लक्ष्यग्रन्थानुसारेणोत्तमादीनां परिसंख्यानस्य दिशाप्योनिर्दिष्टा—

उत्तमाः

अभिनवगुप्तानुसारेणोत्तमप्रकृतीनां सौष्ठवमय एव सर्वो व्यापारः ।[7] अत एव त एवोत्तमा येषां चरितं शाश्वतमेवोत्तमकोटिकम् । भरतानुसारेण देवाः पार्थिवाश्चोत्तमाः ।[8] प्रमुखरूपकविधेषु नायकाः, नायिकाः, प्रतिनायकाः, प्रकरीनायकाः, फलाधिकारिनायकाः, कार्यनायकाश्चेति सर्वे उपनायकाः, अनुनायकाः

१. साहित्यदर्पणे ३.४६ । अभिनवगुप्तानुसारेण विदूषकोऽधमः । ना० शा० ६.१७२ अधिकृत्य भारती ।
२. शृंगारप्रकाशे पृ० ४७१ एकादशे प्रकाशे । ३. गा. ओ. सी. प्रथमभागे पृ० ४२४ ।
४. ना० शा० १२.१० । ५. निरुक्ते ७.१–२ ।
६. रसार्णवसुधाकरे १.७१–७२ । ७. ना. शा. १.४१ अधिकृत्य भारती ।
८. ना० शा० १२.६–११

उत्तमकोटिका सन्ति।[1] एते समाना जना विष्कम्भकेषु प्रवेशकेषु वा पात्रत्वेन न गृह्यन्ते।

### मध्यमा

विष्कम्भकेषु मध्यमा जना अधोविधा वर्तन्ते—

ब्राह्मणा भटा, विद्याधरा, तापसा, कञ्चुकीया नायिकाना सख्य नाट्याचार्या, प्रतिहारा, तापस्य, वनदेवता, नद्य, शिष्या सन्यासिन्य, योगिन्यश्च।

### अधमा

चेटय, चेटा विटविदूषिका, परिजना, ग्राम्य क्षपणका, रक्षिण, मत्स्यजीविन, राजश्याला, शिष्या, उद्यानपालिका, राक्षसा विद्याधर्य, सख्य, एते समानाश्चाधमा भवन्ति।

### सकीर्णा प्रकृति

यदि नाम कश्चिन्नायक उत्तममध्यमचेष्टितमाचरति, स सङ्कीर्णचेष्टितोऽधमकोटौ निक्षिप्त भरतेन। तद्यथा—

> प्रेष्यादिरपि विज्ञेया सङ्कीर्णा प्रकृतिर्द्विजा। २४ १३
> शकारश्च विटश्चैव ये चान्येऽप्येवमादय।
> सकीर्णास्तेऽपि विज्ञेया ह्यधमा नाटके बुध॥ २४ २४

### निष्कर्ष

१ यदि पुरुष कश्चिदुत्तमो मध्यमो वा, तस्य पत्नी साधारणत तस्यैव कोटौ गणनीया। शकुन्तला सीतादय प्राकृतभाषिण्यो नाय उत्तमा एव।
२ शाश्वतमुत्तमाचारा एव जना उत्तमा इति कल्पनीयम्। आचारे तु लोकपालनवृत्ति, भाषा व्यवहार प्रकृति आत्मगुणाश्च ग्रहणीया।
३ अधमवृत्तिका एवाधमा भवन्तु नाम।
४ पुरातनावधारणानुसारेण जीविकासाधनमपि नायकाना कोटिनिर्धारणे विचार्यते स्म। अभिज्ञाने मत्स्यजीवी अशुद्धाजीवेनाधमो गणित इति सोचितम्।

नैत्यिकी वृत्तिर्न तु केवल तात्कालिकी वृत्ति पात्राणा कोटिनिर्धारणे प्रायशोऽलम्।

---

१ एतत्तु बाहुल्यादेव निगदितम्। मृच्छकटिके प्रतिनायक शकारोऽधमो वर्तते। अन्येषु बहुविधेषु नाटकेषु प्रतिनायका नायका अपि सन्ति अनुत्तमा।

२ भरतो भोजश्च गुणन उत्तमकोटिमहिम्नामपिनिर्दिशन्ति। ना० शा० २४ १० १२ सरस्वतीकण्ठाभरणे ५ ११०

कस्मिन्नर्थोपक्षेपके कीदृश: पुरुषो वक्ता श्रोता च भवेदिति साधारणनियमो भरतेन विहितोऽप्ययम् —

**परिजनकथानुबन्ध: प्रवेशको नाम विज्ञेय: । १८.२८**

तत्र के ते सन्ति परिजना इति विशदयन्नभिनवगुप्त: स्पष्टयति —

परिजनकथानुबन्ध इति चतुर्णो लक्षणम् — सूतमागधादेश्चूलिकाङ्कस्य, स्त्रीपुरुषादेर्वाङ्कमुखोपकरणस्य, चेटीकञ्चुकीयादेर्वा प्रवेशविष्कम्भोपयोगिन: । नैव नियमो व्यवहारोपपन्न: । तथा हि रत्नावल्या यौगन्धरायणो महामन्त्री स्वयमेव विष्कम्भक एकोक्ति प्रस्तावयति । अभिज्ञानशाकुन्तले षष्ठाङ्कात् पूर्वं तु प्रवेशके रक्षिणौ, धीवरश्च संवादपरायणा: । मूलत्वचेटकञ्चुकीयादयो राजभृत्या नायकवृत्तान्तकोविदा प्रवेशकविष्कम्भकयो. पात्राणि स्युर्नाम, किन्तु प्राप्येषु नाटकेषु नैव नियमोऽङ्गीकृत. कविवरै: ।

तत्र चूलिका सूतमागधादीना कृते निर्धारिता भवतु नाम । किन्तु भासस्याभिषेके चतुर्थाङ्कान्ते स्वयं रामोऽप्येविधा कालगति प्रस्तौति —

अस्तादिमस्तकगत: प्रतिसंहृतांशु: ।
सन्ध्यानुरञ्जितवपु: प्रतिभाति सूर्य: ।
रक्तोज्ज्वलां शुकधृते द्विरदस्य कुम्भे
जाम्बूनदेन रचित: पुलको यथैव ।। ४.२३

केवल राजधान्या वा महाराजाना सन्निधौ वा सूतमागधादीनामुपस्थितिर्दर्शनीया । अन्यत्र कालगतेर्वैचित्र्यमन्यादृशैर्जनैर्भाषणीयं भवति ।

## एकत्र कति प्रवेशका:

भरतो नियमयति यदङ्कस्यान्तिमे भागे बिन्दुना भवितव्यम् । तं बिन्दुमाश्रित्य प्रवेशकेन विष्कम्भकेण वा भवितव्यम् । नाय नियम. सर्वथा प्रतिपालितो दृश्यते लक्ष्यग्रन्थेषु । तथा हि अभिज्ञानस्य तृतीयाङ्कस्यान्ते नास्ति तादृश. कश्चिद् बिन्दु: । तत्र बिन्दुमाश्रित्य प्रवेशकादीना कथैव नास्ति ।

बहूनामङ्काना संधाने प्रवेशकेन न भवति । तथापि तत्र बहवोऽङ्का भवन्ति येभ्य. पूर्वं न केवलमेकोऽपि तु बहव: प्रवेशकविष्कम्भका: सन्त्येव । तथा हि-अभिज्ञानशाकुन्तलस्य चतुर्थाङ्कात् पूर्वं त्रयो विष्कम्भका. पृथक् पृथग् वर्तन्ते ।

**रस:**

अर्थोपक्षेपकेषु 'नीरसो वस्तुविस्तर:' स्यादिति धनञ्जयमत बाहुल्यादेव सत्यम् । नैकेषु अर्थोपक्षेपकेषु रसनिर्भरता भूयो दृश्यते । यथा प्रतिमानाटकस्य पञ्चमाङ्कस्य पश्चाद् विष्कम्भके रामरावण-युद्धवर्णनम्—

पक्षाभ्यां परिभूय मौर्यविषयं द्वन्द्वं प्रतिग्गृहते
तुण्डाभ्यां मुनिघृष्टतीक्ष्णमचलः सचेष्टनं चेष्टते।
तीक्ष्णैरायसकण्टकैरिव नखैर्मीमान्तरे वक्षसो
वज्राग्रैरिव वार्यमाणविषमाच्छैलाच्छिला पात्यते ॥

अर्थोपक्षेपकेषु केवलं विष्कम्भकः, प्रवेशकश्चूलिका च सूच्य प्रस्तुवन्ति। एतान् व्यतिरिच्यापि बहुविधा सूच्योपाया प्राचीनकालेऽपि कविभिर्यथायोग प्रयुक्ता, किन्तु ते नाट्यशास्त्रविद्भिरद्यावधिर्न समाकलिताः। एतादृशाः प्रमुखा सूचनोपायाः सन्ति — नेपथ्योक्ति, आकाशवाणी, आकाशे, विशेषणोक्तः, स्वगतं, जनान्तिकं पताकास्थानकं च।

## नेपथ्योक्तिः

संस्कृतनाटकेषु नेपथ्यमिति पदमधोविधं द्व्यर्थकं प्रयुज्यते—

(१) रङ्गपीठात् पश्चिमभागे रङ्गमण्डपस्य भागो यत्र स्थित पुरुषः किमपि सम्भाष्य रङ्ग प्रविशति, यथा वा यत्र स्थितेन पुरुषेण रंगस्थः पुरुषः संवदति किञ्चितकालम्।

(२) रङ्गमण्डपाद् बहिर्दूरतर किमपि स्थानं यत्र स्थितस्य पुरुषस्य तार-स्वरेण भाषितं रङ्गस्थै पात्रै श्रूयते।

प्रथमविध नेपथ्य तु वस्तुतो यथानाम पात्राणा रङ्गप्रवेशमार्ग एव।[1] तत्र पात्राणि रङ्गप्रवेशात् पूर्वमात्मान सज्जीकुर्वन्ति। एतादृशानि पात्राणि प्रसङ्गानुसारेण रङ्गस्थपात्रस्य वचन शृण्वन्ति, प्रतिवचन च कुर्वन्ति अथवा प्रतिवदन्त एव ततो रङ्ग प्रविशन्ति। यथा मुद्राराक्षसे वेणीसंहारे च चाणक्यो भीमश्च सूत्रधारस्य वचनं श्रुत्वा प्रतिवदन्तौ रङ्ग प्रविशतः। तदिद नेपथ्य घटनास्थलीव यदाकदा प्रयुक्ता भवति।[2]

द्वितीयविधं नेपथ्य तु नेपथ्योक्तये कल्पितमेव प्रतिभाति। तत्र स्थित पात्र नेपथ्योक्तये रङ्गमण्डपपरिधौ वर्तमान नेपथ्य न प्रविशति, अपितु दूरत एव स्ववचनं श्रावयित्वापसरति। यथाभिज्ञानशाकुन्तले चतुर्थाङ्कात् पूर्वं विष्कम्भके दुर्वासा नेपथ्ये वदति—

---

१. नयतेर्डिच् (पा. ३ २.७५) ने. (नायक) तस्य पथ। धर्मपथ्यर्थेत्यादिना पा. ४४.८१ यदिति नेपथ्यम्।

२ वेणीसंहारे तृतीयाङ्कस्यान्तिमे भागे भीम नेपथ्ये दुःशासन निगृहीतवनिति दर्शितम्। स रङ्ग न प्रविशति। अभिज्ञाने षष्ठाङ्के नेपथ्ये मातलिर्विदूषक निगृह्णाति, राजा तस्य वचन शृणोति। तदनन्तरं विदूषको मातलिश्च रङ्गपीठ प्रविशतः।

आः अतिथि-परिभाविनि !

विचिन्तयन्ती यमनन्यमानसा तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमं कृतामिव ॥

अत्र दुर्वाससः स्थितो रङ्गात् पश्चाद्भागे नेपथ्ये नासीत्, यतो हि नाम तदनन्तरं अनसूया पुरोऽवलोक्य तं पश्यति। अत्र नेपथ्यं दूरतरं किमपि स्थानमेव कल्पनीयम्।

रङ्गे तु सीमितक्षेत्रस्य कार्यजातं दृश्यं विधीयते। तत्रस्याः कतिपयपुरुषाः सीमितक्षेत्रस्य तात्कालिकघटनामभिनयद्वारेण प्रेक्षकाणां समक्षं प्रदर्शयन्ति। तस्मात् क्षेत्राद् बहिर्घटितस्य तात्कालिकोपक्रमस्य रङ्गस्थपात्राणां प्रेक्षकाणां चोपरि प्रभावो यथासीत्तर्हि नेपथ्यगृहे स्थितः पुरुषः पात्रं वा वागभिनयपूर्वकं तं स्वानुभूतं दृष्टं वा प्रकटीकरोति स्म। अस्या नेपथ्योक्तेर्भृशं प्रभावोऽभवत्। नेपथ्योक्तेः पश्चात् रङ्गे पूर्वं प्रवर्तमाना कथा निरुध्यते, किंचिदभिनवं च कार्यम्, अभिनवा च स्फूर्तिः समुत्पद्यतेतराम्।

उत्तररामचरिते तृतीयाङ्के रामस्य नेपथ्योक्तिरस्ति—

'विमानराज, अत्रैव स्थीयताम्।'

इमामुक्तिं रामस्य भूमिकायाः पात्रं वागभिनयपूर्वकं प्रस्तौति। अत एव सीता तां श्रुत्वा वक्ति—'अम्हहे जलभरभरितमेघमन्थर-स्तनितगम्भीर-मांसलः कुतो न्वेष भारतीनिर्घोषो भ्रियमाणकर्णविवरां मामपि क्षटिरयुत्सुकयति।

अभिनयस्य तु चतुर्ष्वङ्गेष्वाङ्गिकाभिनयो वाचिकाभिनयश्च बहुतरौ। आङ्गिकाभिनयो नेत्रयोर्विषयभूतो वाचिकाभिनयश्च श्रवणयोर्विषयभूतो रञ्जयति। नेपथ्योक्तिस्तु श्रवणविषयभूता रञ्जयति। अत एव नेयं सूच्यं केवलं, ज्ञानविषयं वा, अपि तु आनन्दविषया श्रोत्रगोचरी, अभिनयसम्पन्ना च दृश्यमिव रोचिष्णुर्भवति नेपथ्योक्तिः।

चूलिकाया वक्ता सूतमागधबन्द्यादयः सन्ति। अत्र रामः प्रधाननायक एव नेपथ्योक्तेर्वक्ता। किं पुनः प्रधाननायकोऽपि चूलिकां प्रस्तौतीत्यन्या विप्रतिपत्तिः स्याद्, यदि चूलिका नेपथ्योक्तिश्च पर्याये मन्येते।[1]

नेपथ्योक्त्या यद् वृत्तं प्रस्तूयते, तदाकस्मिकं भवति। तस्य पूर्वापराणि संविधानान्यूह्यानि भवन्ति। तद्यथा भीमस्य नेपथ्योक्तिर्विद्यते—

---

१ 'चूलिकाया वक्ता सूतमागधादयो हीनकोटिकाः पुरुषाः भवेयुः, न तु रामादयो महात्मान इति शास्त्र-सम्मतम्।

कृष्टा येन शिरोरुहे नृपशुना पाञ्चाल-राजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥३.४७

'दुःशासनस्य भुजपञ्जरे ग्रहणात् प्राक् किमभवत् पश्चाच्च किमभवत्' इति प्रेक्षकाणामूह्यमेव । अत एव पूर्वापरासम्बद्धाकस्मिकी च नेपथ्योक्तिः सन्निविष्टिकौशलेन निर्वाह्यते । इयमेव तस्या विशेषता ।

यत्तु नेपथ्योक्त्या नटो रङ्गं प्रविशति, नेपथ्ये च कलकलध्वनिः श्रूयते—नैतत्सर्वं चूलिका विदधाति । प्रथमा नेपथ्योक्तिः तावत्पात्रप्रवेशविधिं द्वितीया च बाह्यजगत प्रवृत्तिं पात्राणां विज्ञप्त्यर्थेऽभिनय एव । नेपथ्योक्तिस्तु सन्ध्यन्तरमिति मातृगुप्तस्याभिमतम् । तदप्यस्याश्चूलिकायाश्च विभेदं प्रकटयति ।[1]

## आकाशवाणी

आकाशवाण्या अपराणि नामानि आकाश-वचनम्, दिव्या वाक्, अशरीरिणी भारती, अमानुषी वाक् च सन्ति । सेयमाकाशवाणी नाटधधर्मी वर्तते । नेपथ्योक्तिस्तु लोकधर्मी भवति । अन्यच्च तयोरन्तरमिदमेव स्पष्टं स्याद्यन्नेपथ्योक्तेर्वक्तान्यत्र नाटकीयं पात्रमावश्यकतानुसारि भवति । आकाशवाण्या वक्ता काचिद् देवता पात्रं भवितुं नार्हति क्वचिदप्यन्यत्र तस्मिन् रूपके । स एव पुरुषः पात्रत्वमर्हति यस्य कार्याणि प्रत्यक्षतो गौणतो वा फलानुवर्तीनि कार्याणां घटकत्वेन जायन्ते ।

आकाशवाण्याः परं लक्षणं तस्याः प्रामाणिकता स्यात् । इदमपि तस्या नेपथ्योक्तेर्वैशिष्ट्यम् ।

यथा—अभिज्ञानशाकुन्तलस्य चतुर्थाङ्के—

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥

## आकाशे

रङ्गात् सुदूरं बहिर्यत्र कथनं रङ्गस्थं पात्रं श्रूयते सा 'आकाशे' इति उक्तिरभिमता । तथा हि अभिज्ञानशाकुन्तले पञ्चमाङ्के—

---

१. स्वप्नो दूतश्च लेखश्च नेपथ्योक्तिस्तथैव हि ।
आकाशवचनं चेति ज्ञेया ह्यन्तरसन्धयः ॥
साहित्यदर्पणेऽपि मतगुप्तमतेन नेपथ्योक्त पृथगेव वर्णितमधोविधम्—
नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा । ६.३९

आकाशे गीयते

अहिणव महुलोलुवो भवं तह परिचुंबिअ चूअमंजरिं।
कमलवसइमेत्तणिव्वुदो महुअर विम्हरिओ सि णं कहं ॥

एवंविधे आकाशे वक्ता न दृश्यते। अपरविधे आकाशे श्रोता न दृश्यते। यथा मुद्राराक्षसे तृतीयाङ्कस्यादौ—

(परिक्रम्यावलोक्याकाशे) भो भो सुगाङ्गप्रासादाधिकृताः पुरुषाः सुगृहीतनामा देवश्चन्द्रगुप्तो वः समाज्ञापयति।

यथा वा मृच्छकटिके—चारुदत्तः—(आकाशे)

विषसलिलतुलाग्निप्रार्थिते मे विचारे
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य।
अथ रिपुवचनाद्वा ब्राह्मणं मां निहंसि
पतसि नरकमध्ये पुत्रपौत्रैः समेतः ॥

नाट्यप्रयोगे चूलिका, आकाशवाणी 'आकाशे' इति वचनं च नेपथ्योक्तिरिव रङ्गपीठात् पश्चात् नेपथ्यगृहादुच्यन्ते। नाट्यधर्ममपेक्ष्य 'नेपथ्ये' इति नाट्यनिर्देश एतेषां सर्वेषामपि कृतेऽपि प्रयोगसौकर्याय लिख्यते। वस्तुतश्चूलिका प्रासादचूलां (शिखरम्) अधिष्ठितानां सूतमागधादीनाम् आकाशवाणी आकाशे स्थितानां देवादीनाम्, 'आकाशे' इति वचनं च रङ्गपीठाद् बहिः सुदूरस्थितानां जनानां च वचांसि रङ्गस्थपात्राणामुपदेशाय भवन्ति प्रेक्षकेभ्यो विज्ञाप्यन्ते च।

सूचनोपायाः केचिदन्येऽपि नाटकेषु प्रयुज्यन्ते। तेषु दूतेन प्रतिप्राहितः संवादः लेखपत्रं, स्वप्नश्च कविभिर्यथास्थानं सौष्ठवेन गृहीतानि। अभिज्ञानशाकुन्तलस्य द्वितीयेऽङ्के दुष्यन्तो मातुः सकाशादागतात् करभकात्सन्देशं लभते। तत्रैव तृतीयेऽङ्के शकुन्तलाया प्रणयपत्रं नायकं रमयति। विक्रमोर्वशीये उर्वश्याः पत्रं नायकं समाश्वासयति। मालविकाग्निमित्रस्यारम्भस्तु लेखहस्तेन मन्त्रिणा राज्ञोऽनुवर्तनेन सम्भवति। मृच्छकटिके विदूषकस्य स्वप्नवासवदत्ते उदयनस्य च स्वप्नः नाट्यगुणमुत्कर्षयति।

## विशेषण-योजना

विशेषणानां योजनया क्वचित्कार्याणां सूचना काव्यार्थोत्कर्षाय प्रभवति। तद्यथा वेणीसंहारे—

लाक्षागृहानल - विषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान्
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥

अन्यच्च

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा।
भंक्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति॥ ५.२८

अत्र प्रथमश्लोके सोपादानेन क्रियाविशेषणेन द्वितीये च भीमस्य विशेषणेन लाक्षागृहदाहः, विषप्रयोगः, सभागृहे द्यूत-कर्म, द्रौपदीकेशकर्षणमिति वृत्तघटनाः सूचिता। दुःशासनासृक्पान, दुर्योधनोरुभजनं च वृत्तवर्तिष्यमाणघटना विज्ञापिताः।

## स्वगतम्

स्वगतस्य परं प्रयोजन तु केवलं प्रेक्षकेभ्यः सूचनादानमेव। सूच्यत्वात् स्वगतं सक्षेपार्थं प्रस्तौति। तद्यथा स्वप्नवासवदत्तं प्रथमाङ्के—

यौगन्धरायणः—(स्वगतम्) एवम्। एषा सा मगधराजपुत्री पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यति। हन्त भोः, अर्धमवसितभारस्य। यथा मन्त्रिभिः सह समर्थितम्, तथा परिणमति। ततः प्रतिष्ठिते स्वामिनि, तत्र भवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति।

पद्मावती नरपतेर्महिषी भवित्री
　　दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा।
तत्प्रत्ययात् कृतमिदं नहि सिद्धवाक्या-
　　न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि॥ १.११

तत्रैव

पद्मावती—(आत्मगतम्) मम हृदयेन सह मन्त्रितम्।

कुन्दमालायां लक्ष्मणः स्वगतेन प्रेक्षकेभ्यः सीतायाः वनवासादेशस्य सर्वाः परिस्थितीः सूचयति। तद्यथा—

लक्ष्मणः—(परिक्रम्य आत्मगतम्) समादिष्टोऽहमार्येण, अथवा स्वामिना—'वत्स लक्ष्मण, देव्याः किल सीतायाः रावणभवन-सस्थानात् चारित्रं प्रति समुत्पन्नविमर्शाना पौराणामन्यादृशाः प्रलापाः प्रवर्तन्ते। इत्यारभ्य तदहमपि स्वजनविस्रम्भनिर्विशङ्कां देवीमुपादाय गृहहरिणीमिव वध्यभूमिं वनमुपनयामि।'[१]
उत्तररामचरितस्य प्रथमाङ्के रामस्य स्वगतेन सूच्य वर्तते—शुद्धान्तचारी दुर्मुख। स मया पौरजानपदेष्वपसर्पः प्रहितः। अन्यत्र स्वगतेन 'प्रकाशम्' इति वक्तव्यस्य चाकचक्यं प्रेक्षकान् रञ्जयति। यथा मुद्राराक्षसे प्रथमाङ्के।

चाणक्यः (स्वगतम्) साधु चन्दनदास साधु।

---

१. कुन्दमाला १.४/५

सुलभेष्वर्थलाभेषु परसंवेदने जनः ।
क इदं दुष्करं कुर्यादिदानीं शिबिना विना ॥ १.२३

(प्रकाशम्) शार्ङ्गरव, उच्यतामस्मद्वचनात् कालपाशिको दण्डपाशिकश्च—शीघ्रमयं दुष्टवणिक् निगृह्यताम् ।

स्वगतेन परवर्ति प्रकाशमिति वचनस्य भूमिका निर्मीयते । यथाभिज्ञानशाकुन्तले चतुर्थेऽङ्के कण्वस्यात्मगतम्—किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभि: सन्देष्टव्यम् । (इति चिन्तयति) तदनन्तरं स प्रकाशं ब्रूते—शार्ङ्गरव इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्य वक्तव्य इत्यारभ्य-भाग्यायत्तमतः परं न खलु तद् वाच्यम् ।

## जनान्तिकम्

जनान्तिकेन यथोत्तमेतरपात्रयो: परस्परं सम्भाषणं भवति, तत्र प्रेक्षकेभ्यः सूचना परमं प्रयोजनमिष्यते । तद्यथाभिज्ञानशाकुन्तलस्य तृतीयेऽङ्के—

प्रियंवदा—(जनान्तिकम्) अनसूये, तस्य राजर्षे: प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत् ।

अपरञ्च तत्रैव

प्रियंवदा—(जनान्तिकम्) अनसूये । दूरगतमन्मथाक्षमोऽयं कालहरणस्य । यस्मिन् बद्धभावैषा स ललामभूत: पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ।

## पताकास्थानकम्

पताकास्थानकं तु भाविनोऽर्थस्य सूचनरूपम् ।[1] शृङ्गारप्रकाशे पताकास्थानकस्यागामिवस्तुसूचनात्मकत्वं निगदितम् ।[2] यथा रत्नावल्याम्—

उद्दामोत्कलिकां विपाण्डुररुचमित्यादि । २.४

इत्यनेन नायकयोर्भाविमिलनं सूचितम् ।

## गण्डः

वीथ्यङ्गेन गण्डेन भाविनोऽर्थस्य सूचना भवति । यथोत्तररामचरिते राम:—

किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ।

प्रतिहारी—देव उपस्थितः ।

इत्यनेन भावि विरह: सूचित: ।

---

1. दशरूपके १.१४ अधिकृत्य अवलोक्य
2. शृङ्गारप्रकाशस्य द्वादशप्रकाशे पृष्ठं ४६५

# श्राव्यविधानं नाट्यधर्माश्च

रङ्गपीठेऽभिनयस्य सौष्ठवाय सौकर्याय निरतिशय भावसमृद्धेर्जननाय चालौकिकविधानमपि स्वीक्रियते । तत्तु नाट्यधर्मः । अभिनवगुप्तानुसारेण—यद्यपि लौकिकधर्मव्यतिरेकेण नाट्ये न कश्चिद् धर्मोऽस्ति, तथापि स लोकागत-प्रक्रियाक्रमो रञ्जनाधिक्यप्राधान्यमधिरोहयितुं कविनटव्यापारे वैचित्र्य स्वीकुर्वन् नाट्यधर्मीत्युच्यते ।[1] स खलु नाट्य एव सम्भवति । नाट्यधर्मो त्रिविधो भवति—उक्ति-प्रत्युक्ति-विधाने वागभिनयप्रसङ्गेन, कर्म-विधाने चाङ्गिकाभिनय प्रसङ्गेन *आहार्येण च । नाट्यधर्मोऽलोकसामान्यो भवति,* लोकधर्मश्च लोकसामान्यो भवति ।[2]

नाट्यधर्मस्तु न केवलं श्राव्यविधानमधिकृत्य सम्भवति, अपितु नाटकीय-मितिवृत्तं, नेतारं, कार्यव्यापारं, अभिनयविधानं चाधिकृत्यापि प्रवर्तते ।[3] कार्यव्यापारे देशकालावधिं लघ्वीकरोति कविः । यथा मृच्छकटिके क्षणमात्रेण चौरको व्यायामशालातः पुष्पकरण्डकोद्यानं यावद् यातायातं सम्पादयति नवमेऽङ्के निष्क्रान्त प्रविश्य च विधिना ।

वाचिकाभिनय प्रसङ्गेन वाचिकनाट्यधर्मोऽभिनवगुप्तेन व्याख्यातः —

यत उक्तप्रत्युक्तमहिम्ना आकाश भाषितात्मकमप्यलौकिकरूपं स्वीकुर्वता तत्सहृचरं स्वगत-जनान्तिकापवारितकाद्युपलक्षितम् ।[4]

ये भावा सर्वसाधारणं प्रकटयितुं न शक्यास्तेषां प्रेक्षकाणां कृते विज्ञापनं वाचिकनाट्यधर्मैः साध्यते ।

---

१ ना० शा० १३ ६९ अधिकृत्य भारती ।

२ लोकधर्मो लोकसाधारणं कर्म व्यनक्ति ।

स्वभावभावोपगतं शुद्धं त्व विकृतं तथा
लोकवार्ताक्रियोपेतमङ्गलीला विवर्जितम्
स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ॥

ना० शा० १३.७१, ७२

३ ना० शा० १३ ७०-८४

४. ना० शा० १९ १३६ अधिकृत्य भारती ।

## प्रकाशम्

नाट्ये लोकसामान्यः प्रकाशाभिनयो भवति, येन रङ्गपीठे कस्यचित् पात्रस्योक्तिमन्यानि सर्वाणि पात्राणि शृण्वन्ति। दशरूपके इदं प्रकाशं नामोक्ति-प्रत्युक्ति-विधानं वर्णितम्—सर्वश्राव्यं प्रकाशं स्यात्। रूपकाणामधिकांशो भाग प्रकाशेन विधिना प्रणीयते।

वक्तुः सान्निध्यं भजमाना जनास्तस्य वचनं श्रोतुं नार्हन्तीति एतादृश वचनत्रयमस्ति—स्वगतं, जनान्तिकम्, अपवारितकं च। तत्र स्वगतं भूयो विलसति रूपकेषु।

## स्वगतम्

नाट्यधर्मविधानं प्रथमं तावत् स्वगतमिति सर्वस्याश्राव्यं भवति। स्वगत-मेवात्मगतमिति भरतेन प्रोक्तम्—

हृदयस्थं वचो यत्तु तदात्मगतमिष्यते।
सवितर्कं च तद्योज्यं प्रायशो नाटकादिषु॥
हृदयस्थं सविकल्पं भावस्थं स्वात्मगतमेव॥ २५.८८-९०

एतत्सर्वं संक्षिप्तमेव दशरूपके निगदितम्—'अश्राव्यं स्वगतं मतम्' इति।

किमपि श्रुत्वा, दृष्ट्वा, अनुभूय च यानुपदं मानसिकी प्रतिक्रियापरैः पात्रै-रग्रहणीया यथास्यात्तथा प्रकटीक्रियते सा स्वगतमित्यभिधीयते।[1]

स्वगतस्य योजनं रूपकेषु त्रिविधं वर्तते। १. प्रकाशात्पूर्वम् २. प्रकाशा-त्पश्चात् ३. स्वतन्त्रमेव प्रकाशं विना।[2] प्रायशः प्रकाशात् पश्चादेव स्वगतं दृश्यते। स्वगते प्रायशः प्रकाशस्य विरोधिनो विलोमा वा भावाः व्यज्यन्ते। यथा मुद्राराक्षसे प्रथमाङ्के चाणक्यः (स्वगतम्)—व्रजतु कार्यसिद्धये (भागुरायणः)। (प्रकाशम्), सक्रोधमिव उच्यन्तामस्मद्वचनाद्—गृह्यतां भागुरायणः।

---

१. श्रवणानन्तरं स्वगतं तु भूयो भूयो दृश्यते। दर्शनान्तरं स्वगतं विरूपमपि साति-शयरञ्जनं वितरते। तथा विक्रमोर्वशीये प्रथमाङ्के—
राजा (उर्वशी विलोक्य)
अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः।
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः॥
परिवर्त्यितिमनुभूय मालविकायाः स्वगतं मालविकाग्निमित्रे पञ्चमाङ्के जानामि निमित्तं कौतुकालंकारस्येत्यादि।

२. स्वप्नवासवदत्ते ब्रह्मचारिणः अनाहारे तुल्य इत्यादि श्रुत्वा वासवदत्ता—(स्वगतम्) दिट्ठिआ सुणिस्सिदो दाणीं अय्यउत्तो। यथा वा मुद्राराक्षसे १.१४, १६

स्वगतमेव संस्कृतनाट्यशास्त्रे सिद्धान्ततो रूपकेषु च व्यवहारतः प्रचलति। एकोक्ति-(Soliloquy) स्थानेऽपि स्वगतमेव प्रयुज्यते इति न साधु। एकोक्तिस्तु वस्तुतः पृथगेवेति प्रतिपादयाम। एकोक्तौ प्रत्युक्तिर्नास्त्येवेति महत्त्वं भजते।

## एकोक्तिः

एकोक्तिर्नाम रङ्गमञ्चे कस्यचित् पात्रस्य प्रायः स्वकीयमनोवृत्तिविज्ञापनमेव।[1] इयमेकोक्तिरपरस्य कस्यचित्पात्रस्य प्रत्युत्तरं न भवति, न चान्यस्य कस्यचित्पात्रस्य प्रत्युत्तरमपेक्षते। अत एवैकोक्तिः सर्वसाधारणसंवादो (dialogue) न भवति। तत्र हृदयेन संवादो भवतु नाम।

एकोक्तिस्तु नाट्यशास्त्रे भरतेनात्मानुभूतशंसीति नाम्ना स्वगतात् परिच्छिन्ना वर्तते। तथा हि —

आत्मानुभूतशंसी परसंश्रयवर्णना विशेषस्तु।
विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च॥ १८.१०८

अभिनवगुप्तो व्याख्याति—एकेन पात्रेण हरणीयः सामाजिकहृदयं प्रापयितव्योऽर्थो यत्र। तत्र स प्रविष्टः पात्रविशेषः आत्मानुभूतं वा शंसति इत्यादि।

एकोक्तेरुदाहरणानि विषयमिमं समर्थयन्ति। तद्यथा अभिज्ञानशाकुन्तलस्य तृतीयाङ्कस्यादौ—

(ततः प्रविशति कामयमानावस्थो राजा)

राजा — (निःश्वस्य)

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।
न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम्॥ ३.२

इत्यारभ्य 'ग्रीष्मात्यास्य विस्रम्भकथितानि' इति यावत्।

अपरोऽपि कश्चिदुपेक्षणीयो प्रासङ्गिको वा जनो यदि नाम रङ्गपीठे स्यात्तथापि एकोक्तिर्भावावेशात् प्रवर्तत एव। यथा मुद्राराक्षसस्य प्रथमाङ्के शिष्योपासिते रङ्गपीठे चाणक्यस्य सुदीर्घा एकोक्तिः, प्रतिमानाटकस्य द्वितीयाङ्कस्यारम्भे राज्ञीनामुपस्थितौ दशरथस्य विलापो वा।

रङ्गपीठस्य विभाजनं भागत्रयेण भवति। तत्र नेपथ्यद्वारेण प्रविश्य बाह्यकक्ष्यायां प्रथमभागे वर्तमानः पुरुषो मध्यभागे द्वितीयकक्ष्यायां वर्तमानान् जनानुपेक्षमाण एकोक्तिं प्रस्तौति। तद्यथा पञ्चरात्रे बृहन्नलायाः —

---

१. अत्रापि मानसिकी प्रतिक्रिया भवतु नाम, किन्तु सात्त्विकसंचितानुभावादीनामाकलनेन सम्भवति।

( ततः प्रविशति बृहन्नला )

बृहन्नला—(निरूप्य सविमर्शम्)

गाण्डीवेन मुहूर्त्तमाततगुणेनासीत् प्रतिस्पर्धितं
बाणानां परिवर्तनेष्वविशदा मुष्टिर्न मे संहता।
गोधास्थानगता न चास्ति पटुता स्थाने हृतं सौष्ठवं
स्त्रीभावाच्छिथिलीकृतः परिचयादात्मा तु पश्चात् स्मृतः॥२.२९

इत्यारभ्य 'उत्तरा प्रीतिदत्तालंकारेणालङ्कृतो व्रीडित इवास्मि राजानं द्रष्टुम्। तस्माद् विराटेश्वरं पश्यामीति' यावत्। एवं भूतंकोक्तिरङ्कस्य मध्ये निवेश्यते।

अन्यच्च मुद्राराक्षसे—

( ततः प्रविशति यथानिर्दिष्ट सशस्त्रो राक्षसः )

राक्षसः—(सास्रम्) कष्टं भो कष्टम्।

उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीगता
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः।
आप्तैरप्यनवाप्तपौरुषफलैः कार्यस्य धूरुज्झिता
किं कुर्वन्त्वथवोत्तमाङ्गरहितैरङ्गैरिव स्थीयते॥ ६.५

इत्यारभ्य—

श्रावितोऽस्मि श्रियं शत्रोरभिनीय च दर्शितः।
अनुभावयितुं मन्ये यत्नः सम्प्रति मां विधेः॥ ६.१५

इति यावत्।

उत्तररामचरिते च

( तत. प्रविशति जनकः )

जनकः — अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन् मर्माणि क्रकच इव मन्युर्विरमति॥ ४.३

इत्यारभ्य 'भगवति वसुन्धरे, सत्यमतिदृढासि।'

त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः।
विद्यां वागिव यामसूत भवती शुद्धिं गतायाः पुन—
स्तस्यास्त्वद्दुहितुस्तथा विशसनं किं दारुणे मृष्यथाः॥[1] ४.५

---

१. उत्तररामचरिते एकोक्तेरन्योदाहरणानि सन्ति ३.४५, ४६; ३.२२-२८

क्वचिद् विरलैव सा विचित्रैकोक्तिर्यत्र कश्चित् पुरुष एकाकी किमपि कर्म कुर्वाणस्तस्य प्रक्रियां ब्रूते। तद्यथा मृच्छकटिके तृतीयेऽङ्के—

(ततः प्रविशति शर्विलकः)

शर्विलकः—

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च बलेन च कर्ममार्गम्।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः॥ ३.९

इत्यारभ्य 'भवतु बीजं प्रक्षिपामि। (तथा कृत्वा) निक्षिप्तं बीजं न क्वचित् स्फारीभवति। अये परमार्थदरिद्रोऽयम्। भवतु गच्छामीति यावत्।

एकोक्तेरपरेणरूपेण 'आकाशे दत्तदृष्टिः', 'आकाशमवलोक्य, 'आकाशे लक्ष्यं बद्ध्वा', ऊर्ध्वमवलोक्य चेति नाट्यनिर्देशेन देवा अनुपस्थिता दिवंगता वा जनाः सम्बोध्यन्ते।[1]

साधारणैकोक्तौ अपि क्वचिदिमा उक्तयो गर्भिता सन्ति। अभिज्ञानशाकुन्तलस्य तृतीयाङ्कस्यादौ दुष्यन्तस्य साधारणोक्तौ गर्भितैकोक्तिः—

(मदनबाधां निरूप्य) भगवन् कुसुमायुध! त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः। इत्यारभ्य 'यदि मयि सभृतहृदया तामधिकृत्य प्रहरसीति।'

एकोक्तिः स्वगतं च

एकोक्त्या समं क्वचित् स्वगतं प्रवेशकश्च भवत इति स्वगतप्रवेशकयोरेकोक्तेः वैशिष्ट्यं निर्वचनीयम्।

१. स्वगतं संक्षेपेणैकोक्तिः स्वगतापेक्षया विस्तारेण सूच्यं प्रस्तौति।
२. स्वगतं न तारस्वरेणोच्यते येन रङ्गमञ्चस्यान्यानि पात्राणि स्वगतभाषणं न शृणुयुरिति नाट्यधर्मं कल्प्यते। एकोक्तिस्तारस्वरेण प्रोच्यते। यदि

१ आकाशे —वेणीसंहारे ६ १८/१९ युधिष्ठिरस्योक्तिः
आकाशे दत्तदृष्टिः — वेणीसंहारे १.२२/२३ भीमस्योक्तिः
आकाशमवलोक्य —विक्रमोर्वशीये ५.२०/२१ नारदस्योक्तिः
आकाशे लक्ष्यं बद्ध्वा —मुद्राराक्षसे ३ १२ चाणक्यस्योक्तिः
ऊर्ध्वमवलोक्य —प्रतिमानाटके २.८ दशरथस्योक्तिः

रङ्गमञ्चेऽन्यत्किञ्चित्पात्रं भवति, तदपि श्रवणं करोति। कस्मादपि पात्रात् किंचिद् गोपनीयं रहस्यं न मनसि कृतम्।

३. स्वगतं तु प्रायशः संवादांश एव। अत एव प्रत्युत्तरं भवति। एकोक्तिः संवादांशो नास्ति रङ्गमञ्चे प्राय एकपात्रत्वात्। नेयं प्रतिक्रियात्मकं प्रत्युत्तरं वा।

४. एकोक्तौ एकमेव पात्रं मुख्यतः स्वकीयां मनोवृत्तिं विज्ञापयति। स्वगते नैव नियमः। नैकशः प्रकाशमिति वचनाद् विपरीतं स्वगतेनोच्यते।

५. एकोक्तिर्लोकधर्मी स्यात् स्वगतं च नाट्यधर्मी।

६. प्रयोगकाले एकोक्तौ वक्तुरनुभावाः प्रकटन्ति। न तथा भवति स्वगते। द्वयोरिदमेव साम्यं यद्द्वयेन वक्तुर्हृदयं प्रेक्षकैर्विज्ञातं भवति, न कदापि रङ्गस्थं पात्रं तज्जानाति। उपनयदृष्ट्या सममेव प्रेक्षकैः साक्षात्-सम्बन्धो जायते स्वगते एकोक्तौ च।

आङ्गलभाषायामेकोक्तिः Soliloquy इति स्वगतं च Aside इति प्रथितं। तयोरन्तरमधोलिखितं स्पष्टमेव।

**Aside :**

The aside is an almost too easy device for revealing directly and immediately to the audience the discrepancy between what the character says and what he feels, between the appearance of courage and the actuality of cowardice, between the innocence of the announced intention and the malice of the actual purpose.

**Soliloquy :**

Logically and practically, it is speaking aloud of the character's feelings and ideas, an objection of intimate and personal psychological material....It brings us as close to the heart of a character as it is possible.[1]

**एकोक्तिः विष्कम्भकादयश्च**

१. विष्कम्भकप्रवेशकयोः प्रायशः संवादमुखेन कतिपयपात्राणि वृत्तवर्तिष्यमाणान् कथांशान् निदर्शयन्ति। वृत्तवर्तिष्यमाणकथानिदर्शनमेकोक्तौ नापेक्षितम्।[2] विष्कम्भकप्रवेशकयोः क्वचिदेकमपि पात्रं भवति।[3]

---

१. Bentley Millett, The Art of Drama, P. 201, 202

२. एकोक्तौ क्वचिद् भाविकार्यक्रमो निर्दिश्यते।

३. एकानेककृतः शुद्धः सङ्कीर्णो नीचमध्यमैः।

तत्र संवादस्तु न भवति किन्तु कथांशसूचनं भवत्येव। विष्कम्भक-प्रवेशकयो. कस्यचिदङ्कस्य कथात्मकभूमिका निर्दिश्यते। एकोक्तिस्तु क्वचिदागाम्यङ्कस्य कार्यव्यापारस्य मानसिकी भूमिकां प्रस्तौति।

२. एकोक्ति कस्यचिदङ्कस्यादौ मध्येऽन्ते वावश्यकतानुसार प्रयुज्यते। विष्कम्भकप्रवेशकावङ्कारम्भात् प्राय पूर्वं प्रयुज्येते।

३. विष्कम्भकप्रवेशकयोर्मध्यमाधमान्येव पात्राणि भवन्ति, किन्तु एकोक्तेर्वक्तार प्राय उत्तमपात्राणि च भवन्ति।

एकोक्तेः प्रयोजनम्

मानसिकान्तर्द्वन्द्वस्य गोपनीयभावस्य च यादृश प्रकरणमेकोक्तौ सम्भवति तादृशमन्यथा न स्यादिति सहृदयाना वेदनमेव। रसनिष्पत्तये च नायकादेर्मनोवृत्तीना विज्ञापना परम साध्यमिति सिद्धान्तितमेव।

एकोक्तेरभिधानम्

कालिदासादय एकोक्ति विधान स्वीकुर्वन्ति। तथा हि अभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के—

द्वितीया—परभृतिके किमेकाकिनी मन्त्रयसे ?

रूपगोस्वामिनो विदग्धमाधवे पञ्चमेऽङ्के राधाया एकोक्तिमधिकृत्य कथिता—हला राधिके, एकैव किं मन्त्रयसे।

## प्रतिक्रियोक्तिः

स्वगतमिव प्रतिक्रियोक्तिरपि तस्माद् भिन्नैव भवति। नैषा नाट्यशास्त्रादिषु वर्णिता। प्रतिक्रियोक्तौ कस्यचिदेकस्य बहूना वा पात्राणा कार्यमुक्ति वात्मान प्रच्छाद्य दृष्ट्वा श्रुत्वा च तदधिकृत्य साश्चर्यमाकस्मिकं प्रतिवचनं क्रियते। तद्यथा मृच्छकटिके वसन्तसेना प्रच्छन्ना सती गवाक्षात् मदनिकाशर्विलकयोरुक्तिप्रत्युक्ति श्रुत्वा स्वकीया प्रतिक्रियोक्तिमधोविध प्रकटयति—

वसन्तसेना—कथ मम सम्बन्धिनी कथा ? तच्छोष्याम्येतेन गवाक्षेणापवारित-शरीरा।

मदनिका—अयि उपनय, अन्यथातिसाहसम्।

वसन्तसेना—साधु मदनिके साधु, अभुजिष्ययेव मन्त्रितम्।

प्रतिक्रियोक्तेरपरविधमुदाहरण मुद्राराक्षसे चतुर्थाङ्के मलयकेतुभागुरायणयो प्रच्छन्नतया राक्षस-करभकयोर्गोपनीय-वार्ताश्रवणेन प्रवर्तते। अनेन प्रतिक्रियो-

क्तिरसंविधानेन मलयकेतोरभिनयस्य रसवंशवमनन्योपलब्धिरेव शोभते। न तत् प्रतिक्रियोक्ति विहायान्यथा कल्पनीयम्।

समक्षघटनामुक्ति वाधिकृत्य प्रतिक्रियोक्तिः प्रवर्तते। प्राय भूतकालिकघटनामुक्ति वाधिकृत्यैकोक्तिः प्रभवति।

## आकाशभाषितम्

दशरूपकानुसारेणाकाशभाषित कस्यचिदेकस्यैव पात्रस्य केनापि कल्पितेन पात्रेण सहोक्तिप्रयुक्ती भवति। तद्यथा—

> किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
> श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाश-भाषितम्॥

न खलु कल्पितपात्र किंचिद् ब्रवीति। तस्योक्तिप्रयुक्ती रङ्गस्थेन पात्रेण कल्प्येते, अनुक्तमेव श्रूयते चेत्यभिनीयते।

नाट्यशास्त्रे भाण-लक्षण-प्रसङ्ग आकाश-भाषितमधोविधं व्याख्यातम्।

> परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथितैः।
> आकाशपुरुषकथितैरङ्गविकारैरभिनयैश्चैव ॥ १८.१०९

अभिनवगुप्तानुसारेण तु विट एवानुवदन् सामाजिकान् बोधयति। न केवलं परवचनमभिनयेत्, किन्तु प्रतिवचनं स्वोक्तः सह। आकाशपुरुषस्तु प्रविष्टं पात्रं भावयति। अप्रविष्टोऽपि स एव प्रधानः।[1]

## दूरस्थाभाषणम्

यदा श्रोता श्रोतारो वा समक्षं न सन्ति तर्हि तान् प्रति रङ्गस्थपात्रस्योक्तिः दूरस्थाभाषण भवति। यथा मुद्राराक्षसस्य चतुर्थेऽङ्के कञ्चुकी—भो भो राजानः कुमारः समाज्ञापयति न खल्वहं केनचिदनुगन्तव्य इति। अत्र राजानो दूरस्थाः सन्तीति कल्पितम्। अभिनवगुप्तेन दूरस्थाभाषणं व्याख्यातम्।[2]



१. ना० शा० २२.२९३

२. ना० शा० १७.१०७ अधिकृत्य भारती

# जनान्तिकापवारित-स्वगतानि

स्वगत एकोक्तौ च श्रोतुः पात्रस्य महत्त्वं नास्ति, किन्तु जनान्तिकेऽपवारितके च श्रोतुः पात्रस्य कृते महत्त्वपूर्णा सामग्री वर्तते।[1] त्रिपताककरेण यानि पात्राणि न श्राव्यन्ते, तेषामश्रवणेन यद् भावनिगूहनं जन्यते तस्मात् सविशेषं रञ्जनं प्रभवति।

**त्रिपताककरः**

जनान्तिकेनापवारितकेन च वक्ता श्रोता च निगूहनीयं रहस्यं सम्वदन्तौ आत्मानं शेषेभ्यो रङ्गस्थपात्रेभ्यस्तिरस्कुरुतः।[2] तत्र रङ्गपीठं द्विधा विभक्तमिव कल्प्यते। तत्र विभाजनं तिरस्करिणी-स्थाने त्रिपताककरेण भवति। अनेन पात्रेणेदं न श्रवणीयमिति कविः काव्यार्थोत्कर्षमुद्दिश्य निश्चिनोति।

त्रिपताककरमुद्राया हस्तस्याङ्गुष्ठमनामिका च विहायाङ्गुलित्रयमुन्नीयते। एतादृशो हस्तो वक्तृश्रातारौ शेषेभ्यः पात्रेभ्यस्तिरस्करोतीति नाट्यधर्मीता।

संस्कृतनाटकेषु रहस्यनिगूहनं तु कला-सौष्ठवार्थं बहुविधं निष्पाद्यते। निगूहनं त्रिविधं भवति—(१) पात्रविषयकम्, (२) घटनाविषयकम्, (३) भावविषयकञ्च। पात्रविषयकनिगूहनस्योदाहरणं स्वप्नवासवदत्ते वासवदत्ता प्रस्तौति।[3] घटना-विषयकं निगूहनं तु अभिज्ञानशाकुन्तले दुर्वाससः शापस्य पात्रद्वयेनैव ज्ञानम्। भावनिगूहनं तु मालविकाग्निमित्रे द्वितीयस्याङ्कस्यारम्भेऽग्निमित्रस्य। तत्र नायिकां प्रति शृङ्गारभावस्य प्रच्छन्नता। अत्र भावनिगूहनस्योपाया विधिविधानं च व्याख्यायन्ते। एतानि स्वगतं, जनान्तिकम्, अपवारितकं च सन्ति। भरतानुसारेणैतानि 'गूढार्थयुक्तानि वचनानि' सन्ति।

रङ्गपीठे बहूनि पात्राणि युगपद् वर्तन्ते। नाट्याभिनयकाले प्रायशस्तेषु कस्यापि वचनं सर्वाणि शेषाणि पात्राणि शृण्वन्ति। एतादृशं वचनं प्रकाशं वा सर्वश्राव्यं वेति सञ्जितम्। अपरञ्च क्वचिदेकमपि पात्रं वक्तुर्वचनं न शृणोतीति तस्य मन्दस्वरभाषणेन दर्श्यते इत्यश्राव्यं, स्वगतमात्मगतं वा सुविदितमेव।

---

१. अपवारितके क्वचिन्न भवेत्पात्रं श्रावयितुम्, यद्यपि साधारणतस्तत्र पात्रद्वयं सम्वदति।

२ 'हस्तमन्तरितं कृत्वा' इत्यादि ना० शा० २५.८४

३ वस्तुतः राज्ञी सा तपस्विनो भगिनीति निगूह्यते।

किमपि पात्र न शृणोतीति त्रिपताककरेण वक्तारं श्रोतारं च निगूह्य यदा दर्श्यते तदापवारितकं भवति।[1] तद्यथाभिज्ञानशाकुन्तलस्य सप्तमाङ्के—

राजा — ( अपवार्य ) हन्त द्वितीयमिदमाशाजननम्।

मालविकाग्निमित्रे च

विदूषकः — ( अपवार्य ) छिन्नहस्ते मत्स्ये पलायिते निर्विण्णो धीवरो भणति — गच्छ धर्मो मे भविष्यतीति। अत एव स्वगतं क्वचिदपवारितकं चोभे अश्राव्यम्।

## अपवारितकम्

नाटकेष्वपवार्येति सङ्केतेनापवारितकं द्योत्यते। किमपि पात्रमास्मानं निगूह्य वदतीति अपवारितकम्।

कतिपयस्थलेषु अनाहूत एव विशेषविज्ञानबलेन कश्चित् पुरुषोऽपवारितकेन किञ्चिन्मनोनुकूलं रहस्यमन्यं प्रति कथयति। तथा हि अभिज्ञानशाकुन्तलस्य द्वितीयाङ्के—

उभौ ( ऋषिकुमारकौ )—तत्र भवतः कुलपतेरसान्निध्याद् रक्षांसि नः इष्टिविघ्नमुत्पादयन्ति। तत् कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति।

राजा—अनुगृहीतोऽस्मि।

विदूषक. —( अपवार्य ) अयमीदानीमनुकूलस्ते गलहस्तः।

राजा—( स्मितं कृत्वा ) रैवतक इत्यादि। ईदृशमपवारितकं विदूषकस्यातीतवटनावृत्तानां विशेषज्ञानेनैव सम्भवति, नान्यथेति सुधियां प्रतीतमेव।

अत्रापवारितकस्य प्रवर्तनं पात्रद्वयेन विदूषकेण राज्ञा च भवति। मालविकाग्निमित्रे ईदृशमपवारितकं प्रथमाङ्कस्यान्ते प्रवर्तते। तद्यथा—

विदूषक —( अपवार्य ) भो धीर गच्छ। तत्र भवती धारिणी विसंवादयिष्यति।

अपरविधमपवारितकं क्वचिज्जनान्तिकस्य पूर्वभावमपेक्षते। प्रथमं जनान्तिकेन विधिना कश्चित् पुरुष. श्रोतुर्निकटं गत्वा स्वहृदयं प्रकटयति। तत. परं तेन

---

१. धनञ्जयोऽश्राव्यं स्वगतं मतमिति परिभाषते। किन्तु नैतत्पारमार्थिकं सत्यम्। अपवारितकमपि क्वचिदश्राव्यं भवति, किन्तु तन्नियतमाश्राव्यमपि भवतीति अग्रे व्याख्यास्यामः। ना० शा० २५.९१

पुरस्कृतो बाधो वितर्क पृच्छा नापवारितकेन समाधीयते। तथाहि मालविकाग्निमित्रे—

राजा—(जनान्तिकम्), वयस्य

नेपथ्यपरिगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥२.१

विदूषक —(अपवार्य) उपस्थित नयनमधु। सन्निहितमक्षिव च। तदप्रमत्त इदानीं प्रेक्षस्व।

(तत प्रविशत्याचार्यप्रत्यवेक्षमाणाङ्गसौष्ठवा मालविका)

अपर च

विदूषक —(जनान्तिकम्) प्रेक्षता भवान्। न खल्वस्या प्रतिच्छन्दात् परिहीयते मधुरता।

राजा—(अपवार्य) वयस्य

चित्रगतायामस्या कान्तिविसवादशाकि मे हृदयम्।
सम्प्रतिशिथिलसमाधि मन्ये येनेयमालिखिता ॥ २.२

पूर्वोक्तेऽदाहरणे स्पष्ट भवति यदपवारितक सूचनात्मक वोपदेशात्मकं वा भवति। यद्यपि तस्योत्तरवचन नापेक्षित किन्तु तदाश्रितस्योत्तरवचन क्वचिद् भवेन्नाम। तद्यथा मालविकाग्निमित्रे—

विदूषक —(अपवार्य) भो धीर गच्छ। तत्र भवती धारिणी विसवादयिष्यति।

राजा—धैर्यावलम्बिनमपि त्वरयति मा मुरजवाद्यरागोऽयम्।
अवतरतः सिद्धिपथ शब्दः स्वमनोरथस्येव ॥ १.२२

## जनान्तिकम्

जनान्तिक तूत्तररूपेण कस्यचित् सशयावच्छेदकस्य समर्थकवाक्यस्य परभाव साधारणतोऽन्वीक्षते। तत्र जनान्तिकवचनस्य श्रोता क्वचिद् भवेदेव।[१] अपवारितकस्य श्रोता क्वचिद् भवेत्, किन्तु स नास्ति अपरिहार्य। अत एव जनान्तिक द्वयोस्त्रयाणामपि वार्तालापो भवति। त्रयाणा वार्ता यथाभिज्ञानशाकुन्तले—

---

१. श्रोतु प्रतिवचन जनान्तिके प्रायो भवति, किन्तु सर्वत्र न भवति। क्वचिज्जनान्तिकं य प्रयुज्यते, स जनान्तिकवचनमनवधानान्न शृणोति। तद्यथा वेणीसंहारस्य प्रथमाङ्के द्रौपदी जनान्तिक वदति भीम प्रति, किन्तु भीमो न शृणोति।

सख्यौ—( उभयोराकारं विदित्वा, जनान्तिकम् ) हला शकुन्तले, यद्यत्राद्य तातः संनिहितो भवेत् ।

शकुन्तला—( सरोषमिव ) ततः किं भवेत् ?

सख्यौ—इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।

शकुन्तला—( सकृतककोपम् ) युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि[1] ।

अस्मिन्नुदाहरणे जनान्तिकेनैव प्रश्न उत्तरञ्चोभे भवतः । केवलमेको राजैव न शृणोतीति त्रिपताककरेण सङ्केत्यते ।

कतिपयेषु जनान्तिकेषु द्वावपि न शृणुत जनान्तिकवार्ताम् । तद्यथा—

प्रियंवदा—( जनान्तिकम् ) अनसूये को नु खल्वेष चतुरगभीराकृतिश्चतुरं प्रियमालपन् प्रभाववानिव लक्ष्यते ।

अनसूया—सखि, ममाप्यस्ति कौतूहलम् । पृच्छामि तावदेनम् ।

इयं जनान्तिकवार्ता द्वाभ्यां ( शकुन्तलया राज्ञा च ) न श्रूयते । अत एवाभिनवगुप्तस्य 'जनान्तिकस्य ( निगूहनमेकस्यैव भवतीत्यवधारणं न सत्यं प्रतिभाति ।[2] विदूषकेण राज्ञा च प्रोक्तानि जनान्तिकानि धारिण्या, परिव्राजिकया मालविकया च न श्रूयन्ते मालविकाग्निमित्रे । पुनः जनान्तिकेन यत्कथ्यते तस्यान्तरेण केनचित् समर्थनं प्रायो दृश्यते ।[3] तथाहि—

प्रियंवदा—( जनान्तिकम् ) अनसूये, दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन् बद्धभावैषा स ललामभूतः पौरवाणाम् । तद् युक्तमस्या अभिलाषोऽभिनन्दितुम् ।

अनसूया—सखि, तथा यथा भणसि ।

जनान्तिकेन यो वितर्कः प्रस्तूयते, तस्य समाधानं क्वचित् 'प्रकाशम्'

---

१. अत्र शकुन्तलाया जनान्तिकोक्तिरनुसूयाप्रियंवदे इति द्वय प्रति वर्तते ।

२. अभिनवगुप्तो नाट्यशास्त्रस्य २२८९ कारिकामधिकृत्य व्याख्याति—जनान्तिकमेकान्तिकत्वं चैकस्यैव निगूह्यते इति विशेषः । उदाहरणैः प्रतीयते यज्जनान्तिकमनेकान्तिकमपि भवति तथा चानेकेषामपि निगूह्यते । अत एव निगूहनीयपुरुषाणां संख्यया जनान्तिकापवारितकयोर्भेदनिर्धारणं मिथ्याप्रत्ययः ।

३. क्वचिच्छ्रोत्रा विरोधोऽपि भवति । मालविकाग्निमित्रे धारिण्या जनान्तिकस्याभिप्रेतं गणदासेन न समर्थितम् ।

इत्युक्त्या अपरस्यासबद्धजनस्योत्तरेण भवति, अन्यत्र चापवारितकेन श्रोतुर्वचनेन भवति।[1]

जनान्तिकेन यथाभिनवो वितर्कः प्रस्तूयते, न तथापवारितकेन। एतस्याः पूर्वविचारसरण्या संगमनेन नवैव काचिद्विचारधारा क्वचित् प्रवर्तते। किन्तु नेदं सर्वथावश्यकम्।

## नवीनविचारसरणेः प्रस्तावना प्रवर्तनं च

अभिज्ञानशाकुन्तलस्य प्रथमाङ्के—

प्रियंवदा—( जनान्तिकम् ) अनसूये को नु खल्वेष चतुरगम्भीराकृतिश्चतुरः प्रभाववानिव लक्ष्यते इत्यनेन नायकयोः परिचय-प्रकरणमारभ्यते। तेन तयोः प्रणयावतारः प्रवर्धते।

अन्यत्र जनान्तिकेन केवलं नवीनविचार-सरणेः प्रस्तावनैव भवति। सा पुनर्नोद्ध्रियते। तथाहि—अभिज्ञानस्य चतुर्थाङ्के शकुन्तलानुसूया प्रति जनान्तिकं वक्ति—

हला, पश्य, नलिनीपत्रान्तरितमपि सहचरमपश्यन्ती आतुरा चक्रवाकी आरौति इत्यादि। पूर्वतनविचारधाराया द्वीपमिवेदं जनान्तिकं प्रतिभाति यतो हि नामात परं पूर्वविचारसरणिः पुनः प्रवर्तते।

**जनान्तिकापवारितकयोरन्तरम्**

१. रङ्गपीठे जनान्तिकवचनमपरं कमपि सन्निहितं कृत्वैवोच्यते।[2] अपरस्य तस्य पुरुषस्य तत्र प्रतिवचनमपि स्यात्। अपवारितकस्य क्वचित् कोऽपि श्रोता न स्यात्, यथा प्रागेव दर्शितम्।

२. जनान्तिकात् पश्चादपवारितकं क्वचिद् भवेत्, किन्तु अपवारितकात् पश्चाज्जनान्तिकस्यावसरो नास्ति।

---

१ अनुयुक्तस्य प्रश्नमित्युक्त्या जनान्तिकेऽनुयोक्तुः समाधानमभिज्ञानशाकुन्तलस्य तृतीयेऽङ्के शकुन्तलाया अधोवचनेन भवति—सखि, कस्य वान्यस्य कथयिष्यामि। यत प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः इत्यादि।
अपवारितकेन पुनरभिज्ञानशाकुन्तले—
शकुन्तला—( जनान्तिकम् ) हला प्रेक्षस्व, नलिनीपत्रान्तरितमपि······इत्यादि।
अनसूया—( अपवार्य ) सखि मैवं मन्त्रय—एषापि प्रियेण······इत्यादि। ४ १६

२ जनान्तिके श्रोतुः कर्णान्तिकगोचरत्वं नापेक्षितम्। वक्ता श्रोतारं विलोकयतीतिमात्रमावश्यकम्। यथामालविकाग्निमित्रे देव्या गणदासं प्रति जनान्तिकम्।

३. अपवारितकं पूर्वानुभवज्ञानादिजन्यं समाधानदिशि वक्तव्यं भवति। तत्र काचित् सूचना वा कश्चिदुपदेशो वा भवति। नैतदावश्यकं जनान्तिके।[1]

४. अपवारितकस्य कारणमपरस्य कस्यचिद् वचनं भवति। जनान्तिकस्य एतद्विधं कारणमावश्यकं नास्ति। विशेषस्थितेरनुभवेन यथा स्वगतं क्वचित् भवेत् तथैव जनान्तिकमपि भवेत्।

५. जनान्तिकं श्रोतुः पात्रस्योपगाय भवति, अपवारितकञ्च प्रेक्षकाणां कृते सविशेषं महत्त्वं भजते।

६. प्रयोगकाले जनान्तिके उभयोरपवारिते त्रिपताकरेण केवलं वक्तु रेव निगूहनं भवति।

## स्वगतापवारितकयोर्भेदाभेदौ

स्वगतं तु केनापि पात्रेण न श्रूयते। तत्र वक्ता साभिनयं न वदति, शनकैर्वदति। वाचिकादीनामभिनयानां सर्वथा अभावो भवति। नानुभावः कश्चिद् प्रकटयते पात्रेण। एतस्माद्विपरीतमेवानया दृशाऽपवारितकं भवति। तत्र पात्रं साभिनयं तारस्वरेण ब्रूते वाचिकादीनामभिनयानां सातत्यं भवति। तदनुसारिणोऽनुभावाः सम्यक् प्रकटयन्ते।[2]

पूर्ववचनमनपेक्ष्यापि स्थितिमनुप्रेक्ष्यैव क्वचित् किञ्चित् पात्रं स्वगतं करोति। अपवारितकेऽपि क्वचित् पूर्ववचनमनपेक्षितं स्याद्। तद्यथा मालविकाग्निमित्रे —

विदूषकः – अपवार्य) भो धीर गच्छ। तत्रभवती धारिणी विसंवादयिष्यति।

हृदयस्थो भावोऽपवारितकेन, स्वगतेन जनान्तिकेन च पात्रेभ्यो निगूह्यते इति तेषां साम्यमस्त्येव।

स्वगतमश्राव्यमेव भवति। अपवारितकं तु क्वचिदश्राव्यमन्यत्र नियतश्राव्यं भवति।

---

१. जनान्तिकेऽपि क्वचिदुपदेशः स्यात्। तद्यथा—अभिज्ञानशाकुन्तले सेनापतेर्जनान्तिकवचने—वृद्धे, स्थिरप्रतिबन्धो भव।' मृच्छकटिकस्य प्रथमाङ्के विटो जनान्तिकेन वसन्तसेनामाभूषणादिकमपनेतुं निर्दिशति किन्तु जनान्तिके इदमादेशात्मकत्वमावश्यकं नास्ति।

२ अनेनेदं स्पष्टमेव यत् स्वगतेऽभिनयभाषाया तावती आवश्यकता नास्ति यावती अपवारितके।

## जनान्तिकापवारितक-स्वगतानां विशेषोपलब्धयः

नाट्येन रस एव परमोपलब्धिः। सोऽयं रसो नायकानामनुभावमेव सविशेषमाश्रयते। अनुभावास्तु प्रचुरमेव रहस्यविवरणेषु विलसन्ति। रहस्य-विवरणार्थं केवलं पात्रद्वयस्य हृदयस्थो वार्तालापः 'प्रकाशम्' इति विधानेन सम्यक् समर्थः। प्रायो राजा विदूषकश्च, नायिका तस्याः सखी च द्वयमेव प्रकाशं रहस्यात्मकं विवरणं विशेषतः शृङ्गाररसस्य निष्पत्तये प्रतन्वन्ति। किन्तु नैषा एकान्तिकस्थितिः सर्वत्र वर्तते। यत्र बहूनि पात्राणि रङ्गपीठस्थानि भवन्ति, तत्र रहस्यात्मकं प्रणयवृत्त-प्रवर्धनं जनान्तिकेनापवारितकेन स्वगतेन च क्रियते। मालविकाग्निमित्रस्य द्वितीयाङ्कस्य प्रारम्भे राज्ञो विदूषकस्य च जनान्तिकापवारितक-वार्तालापोऽमुं विषयं स्पष्टयति।

प्रधानेतिवृत्तस्यैका मुख्या धाराद्यन्तं प्रवर्तते। तत्रानुषङ्गिककथाधारा सविशेषं रुचिरा भवति। सा तु क्वचित् स्वगतेनान्यत्र जनान्तिकेनापवारितकेन वा सम्भाव्यते। अभिज्ञानशाकुन्तलस्य चतुर्थाङ्कस्यान्तिमे भागे चक्रवाकी विषयिणी शकुन्तलानुसूययोर्जनान्तिकवार्तास्य प्रयोजनस्य स्पष्टमुदाहरणं प्रस्तौति।

स्वगतेन, जनान्तिकेनापवारितकेन च यत्किञ्चिदुच्यते तत् भावातिरेक-प्रभावितजनानामेव विशेषकथनमित्यवधारणीयम्। न तल्लोकधर्मी भाषा सूक्तं भवति।

## नायक-विमर्शः

संस्कृत-नाट्यशास्त्रेऽभिनवगुप्तानुसारेण नायकोऽभिप्रायत्रयं स्पृशति। तद्यथा—

१. नायकस्तु फलभोक्ता अङ्गी नायकः प्रधाननायको वेति अतिविशेषवचनम्।[1]

२. नायकस्तु प्रधाननायकः, तस्य नायिका, प्रतिनायकः, उपनायकः, अनुनायक इति मध्यमसामान्यवचनम्। तत्र पताका-प्रकरीनायकाः उपनायकाः, लक्ष्मणादयः सहकर्माणोऽनुनायकाः सन्ति।

३. नायकस्तु कथाबीजं फलं प्रति प्रापयितुं नियुक्ताः सर्वे जना इति महासामान्यवचनम्। अत्रामात्यादिभ्यः प्रभृति दूत-प्रतिहारपर्यन्तं प्रधाननायकस्य प्रतिनायकस्य उपनायकस्य च सहाया भृत्याश्च समाविष्टाः।

शीलदृष्ट्या उपर्युक्ताः सर्वे नायकाः कोटित्रयेऽन्तर्भूता उत्तमाः, मध्यमाः, अधमाश्चेति।[2] एतेषूत्तममध्यमाश्चतुर्विधाः सन्ति—धीरोदात्तः, धीरललितः, धीरोद्धतः धीरप्रशान्तश्च। धीरोदात्तादयश्चत्वारोऽधमाश्च रूपकेषु प्रधाना नायका भवितुमर्हन्ति।[3]

सर्वे इमे नायका योनिभेदेन दिव्याः दिव्यादिव्याः, अदिव्याश्च संज्ञिताः। ते प्राणिनोऽप्राणिनश्च क्वचिद् भवन्ति।

शृङ्गारप्रधानेषु रूपकेषु नायिकासव्यवहार-दृष्ट्या दक्षिणः, शठः, धृष्टः, एकनायिकश्चेमे महत्त्वपूर्णभेदा प्रधाननायकानां भवन्ति। शृङ्गारपथेऽपरश्च नायकभेदः चतुर, उत्तम, नीचोऽधमः, प्रवृत्तकश्चेति भवति।

प्रकरणेऽस्मिन्ग्रन्थेऽत्र च नाट्यशास्त्रे नायकशब्दस्य प्रयोगोऽतिविशेषवचने, मध्यमसामान्यवचने महासामान्यवचने वाभिप्रेत इति पाठकैरूह्यमेव। भरतः प्रधाननायकं परिभाषते—

---

१. अभिनवभारती ना० शा० बा० ओ० सी० द्वितीयभागे पृष्ठ ४२२

२. ना० शा० २४.१४, पुस्तकेऽस्मिन् ६१-६४ पृष्ठेषु अर्थोपक्षेपक-प्रकरणे उत्तमादयो भेदा विनिर्दिष्टाः सन्ति।

३. धीरोदात्तादयः प्रधाननायका उच्चकोटिकेषु रूपकेषु विलसन्ति। भाणप्रहसन-वीथ्यादिषु अधमा एव प्रधाननायकाः प्रयुज्यन्ते।

व्यसनी प्राप्य दुःखं वा युज्यतेऽभ्युदयेन यः ।
तथापुरुषमाहुस्तं प्रधानं नायकं बुधाः ॥ २४.२१-२२

## प्रधाननायकः

अभिनवगुप्तानुसारेण प्रधाननायकः कथां नयति स्वकर्तव्याङ्गभावमिति कथानायको निर्वहणे फलभागी ।[1] फलभागित्वेन स फलनायकः । तस्य बहवः पर्याया अङ्गी नायकः, अग्रयो नायकः, मुख्यो नायकश्च सन्ति ।

अभिनवगुप्तानुसारेण असौ नेता फलस्य भोक्ता अमात्यसम्पादिताभिसन्धि-प्रत्युपायपरम्पराजितस्यापि । यथा तापसवत्सराजे वत्सराजस्य राज्यप्रत्यापत्तिः कर्तव्यतायाममात्याभिसंहितायामिति ।[2]

अत एव कार्यसाधकतामवलम्ब्य नायकस्य त्रैविध्यं वर्तते—स्वायत्तसिद्धिः, सचिवायत्तसिद्धिः, उभयायत्तसिद्धिः । तद्यथा शारदातनयेन स्पष्टीकृतम्—

स स्वामात्योभयायत्तससिद्धेर्नायकस्त्रयः ॥ ७ १४३

वस्तुतः स एव प्रधाननायकः यस्य प्रधानफलप्राप्तये नाटकीयेतिवृत्तस्य सर्वोऽप्यर्थराशिः प्रयुज्यते । कथाशरीरफलेन प्रधानतया सम्बध्यमानो (फल-) नायक उच्यते । यदि नामाङ्के प्रधाननायको रङ्गं प्रविशति स तु प्रायः सर्वेषु पात्रेषु निष्क्रान्तेषु स्वयं ततो निष्क्रामति ।[4]

कार्यनायक

कतिपयनाटकेषु फलनायकेन सह कार्यनायकोऽपि विलसति । तत्र कार्य-नायकः प्रधाननायकाय फलं प्रापयितुं व्यवस्यति, फलनायकस्तु फलं भुङ्क्ते । कार्यनायकस्य प्रसिद्धमुदाहरणं मुद्राराक्षसे चाणक्यो वर्तते । तत्र चन्द्रगुप्तः फलनायको नाटकीयकार्यव्यापारप्रवर्तनाय न्यूनमेव विद्यते, विपर्यये तु चाणक्यः फलमुद्दिश्य संविधानानि प्रकल्पयति, अपराश्च कार्यार्थं नियोजयति, फलोन्मुखं च कार्यजातं प्रवर्तयति ।[5] प्रतिज्ञायौगन्धरायणवेणीसंहारयोः कार्यनायकौ

१ ध्वन्यालोकलोचने पृ० ३४७
२ ना० शा० १९.५ अभिनव भारती ।
३ अत्रामात्य उपलक्षणेनापरानपि पताकानायकादीन् व्यनक्ति । यथा रामायणे सुग्रीवेण सह रामः कार्याणि साधयति ।
४ अभिनवभारती ना० शा० गा० ओ० सी० द्वितीयभागे पृ० ४२२
५ तत्र चन्द्रगुप्तो वदति—राज्यं चारोपिता वयम् । ७ ८
चाणक्यस्य कार्यनायकत्वमेवाधोलिखितेन प्रमाण्यते—
नेतुर्यशस्विनि पदे नियता प्रतिष्ठा । मुद्रा० ७ १४

यौगन्धरायणो भीमश्च। तत्रैव फलनायकौ उदयनः, युधिष्ठिरश्च प्रतीतौ। सागरनन्दी पुरातननाट्याचार्याणमभिमतमुद्धरति —

साधकः साधनं साध्यं सिद्धिः सम्भोग एव च।
इत्याह केऽपि नाट्यज्ञाः सन्तः साध्यादिपञ्चकम्॥

एतदनुसृत्य तेन भीमविजये भीमः साधकः इति वर्णितम् तथा च युधिष्ठिरस्य राज्यप्राप्तिः सिद्धिरिति।

प्रायो रूपकेषु कार्यनायकः फलनायकश्च समानः पुरुषो भवति। यथाभिज्ञानशाकुन्तले, मृच्छकटिके, नागानन्दे वा।

## धीरोदात्तादयः

उत्तम-मध्यमनायकानां धीरोदात्तादयश्चत्वारो भेदाः सम्भवन्ति। अधम-नायकास्तु एतान् व्यतिरिच्य भाण-प्रहसनादिषु प्रयुज्यन्ते। अत एव पञ्चभिदो नायका भवन्ति।

तत्र भोजानुसारेण —

धीरोदात्तः —विक्रमोदारकर्मा —सेनापतिरमात्याश्च[1]

धीरललितः —रागप्रधानः —नृपाः

धीरोद्धतः —अहङ्कारप्रधानः —देवाः

धीरप्रशान्तः —उपशमप्रधानः[2]—यति-श्रमणतपस्वि-ब्रह्मचारि वणिग्ब्राह्मणाः[3]

रसस्तु कथानायकाश्रयस्तद्विपक्षाश्रयो वा निष्पद्यते।[4] एतस्य विश्लेषणमभिनवगुप्तेनाधोविधिना कृतम्

| नायककोटिः | रस-वैशिष्ट्यम् | वृत्तिवैशिष्ट्यम् |
|---|---|---|
| धीरोदात्तः | धर्मयुद्धवीरप्रधानः | सात्वती |
| धीरोद्धतः | वीररौद्रप्रधानः | आरभटी |
| धीरललितः | वीर-शृङ्गारप्रधानः | कैशिकी |
| धीरप्रशान्तः | दानधर्मवीरशान्तप्रधानः | भारती[5] |

---

१. ना० शा० १८.२४। भासेन तस्य गुणाः पञ्चरात्रे २.२४ वर्णिताः —शौण्डीर्यं, श्रुतिविनयः, स्वपक्षे दया, माधुर्यं, धनुषि जयः, पराक्रमश्च

२. सरस्वतीकण्ठाभरणालङ्कारे पृ० ५०२

३. ना० शा० १२, ७९ २४.१९। एतेषु वर्णिता शमप्रधानत्वं न उत्तरग्रन्थेषु दृश्यते। ते शृङ्गार-प्रधानाः।

४ ध्वन्यालोके ३.६

५. धर्मयुद्धवीरप्रधानो धीरोदात्तः, वीररौद्रप्रधानो धीरोद्धतः वीरशृङ्गारप्रधानो धीरललितः, दानधर्मवीरशान्तप्रधानो धीरप्रशान्त इति चत्वारो नायकाः क्रमेण, सात्वत्यारभटीकैशिकीभारती-वृत्तिप्रधानाः। ध्वन्यालोकलोचने २.६ अविरुद्धा वृत्तिः।

इमे चतुर्विधा नायका वीरोचितकार्यसम्पादने समर्था भवन्ति किन्तु कस्मिंश्चिन्नाटके प्रधाननायका: सन्त: कामप्येकामेव कोटिमाद्यन्तं निर्वहन्ति ।[1]

धीरोदात्तादिषु चतुर्षु वीररसयोग्यता वर्तते इति तेषां सामान्यो धर्मः। अत एव वीरं विहायापररसा एव तेषां विभेदका: सन्ति । तथा हि धीरोदात्तस्य धर्मवीर, धीरोद्धतस्य रौद्र, धीरललितस्य शृङ्गार, धीरप्रशान्तस्य शान्त: । एतेषां विशेषास्तु वृत्तिभिः स्पष्टत परिचीयन्ते । तथाहि धीरोदात्तस्तु सात्वती-वृत्तिक एव । मम्मटानुसारेण धीरोदात्तो वीरप्रधान एव ।[2]

धीरोदात्तादिषु धीरस्य कोऽभिप्राय ? अत्र धीरस्तु वीरस्य पर्याय एव । उत्साह-सम्पन्न एव धीर ।[3] भोजानुसारेणैते भेदा धैर्यमाश्रित्य निर्मिता ।[4] धीरोदात्तादीनामुदाहरण भरतानुसारेणाधोलिखितकारिकया स्पष्टमेव—

देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥
धीर-प्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ॥२४.१८

अत्र डिमादिषु नायका वस्तुतो धीरोद्धता देवा सन्ति ।[5] नाटकेषु देवा नायका न भवन्ति । नृपाणा द्विविधं रूप नाटकादिषु दृश्यते—अन्त:पुरीयं, बाह्यञ्च । अन्त:पुरे तेषां नायिकाविषयक शृङ्गारो धीरललितत्वमेवोप-निबध्नाति । यथा स्वप्नवासवदत्ते, अभिज्ञानशाकुन्तले, विक्रमोर्वशीये, माल-विकाग्निमित्रे च । यद् राज्ञा बाह्यं जीवनं, तत्र सहचारित्वेनामात्यादीनां धैर्यं प्रायः दृश्यते । ते धीरोदात्ता प्रोक्ता: । धीरप्रशान्तोचिते दानधर्मवीरशान्ते ब्राह्मणानां विप्राणाञ्चाधिकारो विशेषतरो लक्ष्यते । अत एव नात्र विसंवादो लक्षणीय: । तथापि यथा लोके तथा नाटकादिषु चेतरेतरनायकानामितरेतर-चारित्र्य विशेषो दृश्यते । यथा देवीचन्द्रगुप्ते नायकस्य चन्द्रगुप्तस्यौदात्यमेव विलसति । रामचन्द्रगुणचन्द्रानुसारेण राजानश्चतुर्विधा भवन्ति ।[6]

---

१. योग्यतया धीरोदात्तो दुष्यन्तोऽभिज्ञानशाकुन्तले धीरललित एव वृत्त्या वर्तते ।

२ काव्यप्रकाशे ७ ६२ कारिकावृत्तिश्च

३ मानियर-विलियम्स-कोशे धीरस्तु *Brave, Courageous, Energetic* भवति । धैर्यं महाव्यसनेऽप्यकातर्यं विशेषण येषाम् ते धीरा. ना० द० १.६

४. उद्धतो ललितः शान्त उदात्तो धैर्यवृत्तित । सरस्वतीकण्ठाभरणे ५ १०९
धैर्यं यत्र गुणसन्निवेश-चारुत्वादुदात्त स धीरोदात्त इत्यादि भरतकोशे पृष्ठ २९७

५. आ पिशाचाद् ब्रह्म यावत् देवा. सन्ति । ना० शा० १३.१८,२२ भारती ।

६. नाट्यदर्पणे १.७

देवादीनां धीरोद्धतत्वं सामान्यं लक्षणम्। तेषां विशेषलक्षणमभिनवगुप्तेन विशदीकृतम्। तयोक्तम्—यद्यपि देवाः पुरुषापेक्षयोद्धतास्तथापि स्वापेक्षया गाम्भीर्य-प्रधानतयोदात्ता उच्यन्ते भगवत्त्रिपुरारिप्रभृतयः, प्रशान्ता ब्रह्मादयः, उद्धता नृसिंहादयः।

## अधमा अपि प्रधाननायकाः

भरतोऽधमं प्रधाननायकं न प्रतिजानीते। तयोक्तम्—

अत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः।
मध्यमोत्तमप्रकृतौ नानालक्षणलक्षिताः॥ २४.१६

किं तर्हि न भवन्ति प्रधाननायका अधमा अपि? बहुषु रूपकेष्वधमा एव प्रधाननायकाः सन्तीति नाहष्टं विपश्चितम्। तदनुसृत्याभिनवगुप्तेन सिद्धान्तितम्—

हास्यादिरसप्रधानत्वे ह्यधम एव नायकः।[1]

नाट्यदर्पणानुसारेण

भाण-प्रहसनयोः कस्यांश्चिद् वीथ्यां च नीचोऽपि नायकः।

तत्र रामचन्द्रेण स्पष्टीकृतम्—नीचोऽपीशः कथावशात्।

## योनिदृष्ट्या नायकाः

योनिदृष्ट्या त्रिविधा नायका भवन्ति - दिव्याः, दिव्यादिव्याः, अदिव्याः (मानुषाः) च। तत्र देवेषु ब्रह्मणः आरभ्य पिशाचान् यावद्ययश्च सर्वेऽन्त-र्भूताः।[2] दिव्यादिव्यास्तु राजान एव भवन्ति। भारतीयधरणानुसारेणेमे नृपा

---

१ तस्याः (वीथ्या) सर्वरसत्वस्याभिधानात् पर्यायेण रसानां प्राधान्यादुत्तमो मध्यमोऽधमो वा नायको भवत्येव। तथा च कोहलः—

उत्तमाधममध्याभिर्युक्ता प्रकृतिस्तथा।
एकहार्या द्विहार्या वा सा वीथीत्यभिसञ्ज्ञिता॥

अधमप्रकृतेस्तु न नायकत्वमिति ब्रुवन् प्रहसनभाणकादौ किं ब्रूयात्? हास्यादि-रसप्रधानत्वे ह्यधम एव नायकः। कथाशरीरफलेन प्रधानतया सम्बध्यमानो नायक उच्यते। ना० शा० खण्डस्तृतीयः पृष्ठ ४२६

२ 'दिव्याना देवयोनीनां पिशाचादिब्रह्मान्तानाम्' ना० शा० १३.१८ अधिकृत्य भारती।

लोकपालांशेन समुद्भूता देवा एव, किन्तु मानुषीयोनिषु जाता अदेवा अपि ते दिव्यादिव्या इत्युच्यन्ते।[1] मानुषास्तु सुप्रतीता एव।

अभिनय-दृष्ट्यापि प्रकृतीनामिमे भेदा महत्त्वं भजन्ते। तद्यथा—

दैत्य-दानव-यक्षाणां नृपपन्नग-रक्षसाम्।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः॥
दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते।

ना० शा० १२.२३, २४

नाटके देव. प्रधाननायको भवितु नार्हति।

तत्र दिव्या दिव्यादिव्याश्चनायका वेदपुराणेतिहासोचित - कथानकेष्वेव ग्रहणीयाः परवर्तियुगीनकथानकेषु केवलं मानुषमात्र पात्रं ग्रहणीयमित्यावश्यक विधानम्।

दिव्यनायकाना दिव्या अलौकिक शक्तय' प्रभृतयश्च प्रदर्श्यन्ते। तद्यथा-प्सरसां तिरस्करिणीविधानेन प्रच्छन्नस्ताभिज्ञानशाकुन्तले सानुमत्या विक्रमोर्वशीय उर्वश्याश्च।[2] दिव्यनायकाना प्रभावेण मानुषाणामपि विभूतय सिद्ध्यन्ते। यथाविमारके विद्याधरस्याङ्गुलीयकेन नायकस्यादृश्यतोपपद्यते। ऋषीणा तु वरशापप्रदानेन मानुषाणा भाग्यविपर्ययो जायते। यथाभिज्ञाने दुर्वाससः शापेन नायिका-वियोग.।

तपस्विना योगिना च स्वात्मनोऽलौकिकप्रभावोऽन्येषां कृते चालौकिक-विभूतिप्रदान तेषा सम्भाव्येते।

## अप्राणि-नायकाः

भरतानुसारेणाप्राणिनायका यथावकाशं नियुज्यन्ते। तथोक्तम्—

शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा।
नानाप्रहरणाद्याश्च तेऽप्राणिन इति स्मृताः॥
अथवा कारणोपेता भवन्त्येते शरीरिणः। २१.९३-९४

अभिनवगुप्तो विशदयति—

'शैलप्रासादादीनि निर्जीवत्वे प्रस्तुतत्वेन परिगणितान्यपि अवस्था-विशेषेषु नाट्यधर्मेण सजीवत्वेऽपि' इत्यादि।

---

१. दिव्यादिव्या एव राजानो यतो हि नाम ते देवाश्च इति लोकपालांशनिर्मीणा राजान। ना० शा० १२ २५ अधिकृत्य भारती।
देवाश्चराजास्तु राजानो वेदाध्यात्मसु कीर्तिता। तत्रैव १२.२८

२. सानुमती—अस्ति मे विभव प्रणिधानेन सर्वं परिज्ञातुमिति अभिज्ञाने षष्ठाङ्के।

एते क्वचिदधिष्ठातृदेवरूपेण प्रकटन्ति। यथा उत्तररामचरिते नद्यो विमानराजश्च स्वरूपेणैव किंचिन्मनुष्यवदाचरन्ति। दूतवाक्ये बालचरिते च सुदर्शनादीनि मनुष्यवद् व्यवहरन्ति।

वस्तुत इमानि पात्राणि बहुशो मनुष्यरूपेणावतरन्ति। तद्यथा बालचरिते शंख-चक्र-गदा-पद्मादीनि गोपालवेषप्रच्छन्ना घोषमवतरन्ति।

परवर्तियुगे छायानाटकमेतदप्याश्रित्य प्रपञ्चितमासीत्।

### तिर्यक्प्रकृतिः[1]

तिर्यक्पात्राणि द्विविधानि सन्ति—भाषमाणानि अभाषमाणानि च। भासस्य बालचरिते कालियनाग, अरिष्टर्षभ., गरुडश्च तिर्यञ्चः सन्ति.।

तत्रारिष्टर्षभ. वस्तुतो दानव पशुवत् मानुषवच्च व्यवहरति वदति च। तथा हि—

अरिष्टर्षभ. —एष भो'

> शृङ्गाग्रकोटिकिरणैः खमिवालिखंश्च
> शत्रोर्वधार्थमुपगम्य वृषस्वरूपम्।
> वृन्दावने स ललितं प्रतिगर्जमान-
> माक्रम्य शत्रुमहमद्य सुखं चरामि॥ ३.५

दामोदरस्तं गोवृषाधम इति सम्बोधयति।

कालियनागस्तु पन्नगपतिः। स यमुनाह्रदे वसति। दामोदरस्तस्य पञ्चफणेषु हल्लीसक प्रक्रीडति। दामोदरं नागो भाषते—

> स्थूलाखण्डलहस्तिहस्तकठिनो भोगेन संवेष्टितं।
> त्वामेव त्रिदशाधिवासमधुना सम्प्रेषयामि क्षणात्॥

प्रतिमानाटके काञ्चनमृगः पात्रीयति।

तद्यथा—

रावण. —धावन्तं मृगं दृष्ट्वा धनुरारोपयति राघव.। एष मृग एकप्लुताति-क्रान्तशरविषयो वनगहन प्रविष्ट।

---

१. प्रसङ्गेऽस्मिन् सुग्रीवहनुमदादयो वानरा न पशुमृग्याः। यद्यपि ते सपुच्छाः सन्ति तथापि बुद्धिवैभवान्मानुषभाषाच्च न तेषां पशुकोटौ गणना समीचीना।

प्रथमाङ्क एवाभिज्ञानशाकुन्तलस्य मृग पात्रीयति[१] । तद्यथा

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्त दृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् । इत्यादि

तत्रैव चतुर्थाङ्के शकुन्तलाया. प्रस्थानकाले कालिदासेन परित्यक्तनर्तना मयूरा दर्शिता । अस्मिन्नङ्के मातृहीनो मृगशाव शकुन्तलाया निवसने सज्जते । कण्वस्तं वर्णयति—

यस्य त्वया व्रणविरोपणमिङ्गुदीना
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽय न पुत्रकृतकः पदवीं मृगस्ते ॥ ४.१४

शकुन्तला—वत्स, कि सहवासपरित्यागिनी मामनुसरसि । इत्यादि

अभिज्ञानशाकुन्तले सिहोऽमापमाण पात्र वर्तते । तस्यानुभावास्तु प्रेक्षकाणा प्रीतये सन्ति । तद्यथा

---

१ वृक्षादीना च तिर्यंश्चा पात्रत्वकल्पना लौकिकी प्रतिभातीति सूक्ष्मदृष्ट्या प्रमाणितम् । Mahatma Gandhi says in his letter to Mira—And if we had vision enough we should appreciate the language of trees and plants and value their friendship ..They are all one and they are all expression of God P. 207,204

Batir, a baby elephant at the Karaganda zoo, can talk and zoologists have tape recording to prove it.

Tass reported "Once upon a time, the watchman at the Karaganda (Kazakhastan) zoo discovered that the baby elephant Batir talks during the night Naturally, no one believes the watchman's story elephants are not on the list of animals capable of imitating human speech

Nevertheless, zoologists decided to check the truth of the watchman's claims. Armed with tape recorders they went off for a night watch at the zoo And they were rewarded

Batir spoke nearly 20 phrases into the tape recorders । His "interview" was even transmitted on local radio The elephant speaks mainly about himself and his needs Batir is good, Batir is a fine fellow-Water, Have you watered the elephant

"The specialist explained this phenomenon by noting that the elephant was orphaned at a very early age He was raised by humans from the time he was in 'dipers'. He learned some of the simplest phrases from his human parents". Moscow, July 13 1983 (AP). Tass, the Official Soviet News Agency

तापसी—( राजानमवलोक्य ) भद्रमुख, एहि तावत्। मोचयानेन दुर्मोक्हस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम्।

तत्रैव मृगा उद्गलितदर्भकवला: सन्ति।

वनस्पतयः

यद्यपि वनस्पतयः साक्षात्पात्रीभूता न सक्रियन्ते तथापि तेषामपि नियोगः काव्येषु प्रेक्ष्य एव। तद्यथाभिज्ञानशाकुन्तले—

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित्।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै—
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः॥

इयं वनस्पतिसेवा कालिदासानुसारेण विलसति। ते वनवासबन्धव इति कालिदासेन अभिज्ञानशाकुन्तले दर्शितम्—

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः
परभृतविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम्॥ ४.१६

लताः

कालिदासस्तु लतासु पात्रत्वमन्विष्यति। लावण्यमयीललना इव सुमसूना लता: शकुन्तलायाः प्रस्थानकाले रुदन्तीव। तद्यथाभिज्ञानशाकुन्तले—

अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥

प्रतीकपात्राणि

प्रतीकपात्राणि भूयिष्ठानि विलसन्ति नाट्यप्रयोगेषु साक्षाल्लोकोपदेशाचरणाय। तत्राश्वघोषस्यानामिते रूपके कीर्तिः पात्ररूपेण राजते। परवर्तियुगे बालचरिते शाप, अलक्ष्मी खलतिः, महानिद्रा, राजश्रीः प्रबोधचन्द्रोदये च विवेकः, महामोह, कामक्रोधादय, मन, उपनिषद्, कामः, रतिः, अहंकार, इत्येतादृशानि बहूनि पात्राणि सन्ति। अहस्तपादा अपीमे पुरुषवद् व्यवहरन्ति, वदन्ति पराक्रामन्ति च।

अनायक-भूमिका

नाटकेषु याः कार्यपद्धतयो भवन्ति तत्र कार्याणां सम्पादनाय ये उपायाः स्वीक्रियन्ते तेषां सविमर्शं निर्धारणाय उपयोगाय च ये पुरुषा नियुक्ताः सन्ति, ते नायकभूमिका विदधति। शेषा जना अनायका एव परिचारकसमा प्रेष्याः सूचकाश्च भवन्ति। तत्रानायकभूमिकाधोलिखितजनानामवधारणीया—

पुरुषाः—कञ्चुकी, विदूषक, विटः, सेनापतिः, भटः, प्रतिहारः, वैतालिकः, सूत-मागध-सारथयः, दूतः, प्रणिधिः, चर।

स्त्रियः—सखी, चेटी, गणिका, उद्यानपालिका दूती धात्री, प्रतिहारी, यवनी, तापसी।[1]

यदि नामानायकजना यथावश्यकं नायकवदाचरन्ति त एव नायकस्य सिद्धये योजनाः प्रवर्तयन्ति, ते नायक पुरुषा भवन्ति। यथा मालविकाग्निमित्रे विदूषकः।

अनायकपात्राणि क्वचित् सकृदेव रङ्गपीठे कस्मिंश्चिदङ्के स्वनियोगं सम्पाद्य न पुनरागमनाय विलीयन्ते। कविस्तेषां चरित्रचित्रणे मन्दादरो भवतीति स्वाभाविकमेव।

इदं भूमिका विभाजन तु साहित्यदर्पणे विश्वनाथस्य सम्मतम्। तेन विशदीकृतम्—चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपुरुषाः। ६.११

## नायिका-संव्यवहारतो नायकभेदाः

नायिका-विषये नायकस्य वर्तनं परीक्ष्य प्रणयिनो नेतु पाञ्चविध्यं भरतेन प्रतिपादितम्—चतुर, उत्तम, , मध्य, नीच., प्रवृत्तकश्च।[2]

चतुरः

समदुःखक्लेशसहः प्रणयक्रोधप्रसादने कुशलः।
योऽर्थी नात्मच्छन्दो बलश्चतुरः स बोद्धव्यः॥ २३.५४

उत्तम

मधुरस्त्यागी रागं न याति मदनस्य नापि वशमेति।
अवमानितश्च नार्या विरज्यते चोत्तमः स पुमान्॥ २३.५६

मध्यमः

सर्वार्थैर्मध्यस्थो भावग्रहणं करोति यो भार्याः।
किञ्चिद्दोषं दृष्ट्वा विरज्यते मध्यमः स भवेत्॥ २३.५७

नीचोऽधमः

अभिनवकृते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः।
मित्रैर्निवार्यमाणो विज्ञेयः सोऽधमः पुरुषः॥ २३.६०

प्रवृत्तकः

अवगणितभयामर्षो मूर्खप्रकृतिः प्रसक्तहासश्च।
एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु॥

---

१. इय सूची तूपलक्षणेन बृहत्तरा समावनीया।

२. स्त्रीसम्प्रयोगविषये ज्ञेया पुरुषास्त्वमी पञ्च। ना० शा० २३.५३

रतिकलहसम्प्रहारेष्वकर्कशः क्रीडनीयकः स्त्रीणाम् ।
एवंविधस्तु तज्ज्ञैर्विज्ञेयः सम्प्रवृत्तस्तु ॥ २३.६२

एतेभ्यो व्यतिरिक्त ज्येष्ठ नायकमप्यस्मिन् प्रसङ्गे भरतो विवृणोति । तद्यथा,

यो विप्रियं न कुरुते नार्याः किंचिद्विराग-संज्ञातम् ।
अज्ञातेप्सितहृदयः स्मृतिमान् धृतिमान् स तु ज्येष्ठः ॥

ना० शा० २३.५५

इमे भारतीया नायका साधारणत एकनायिकाः सन्ति । न तेषां वैविध्यं प्रपञ्चयितुं धनञ्जयो मतिं कुरुते । स तु पूर्वं प्रत्यन्यया हृतं नायकमेव युवजनप्रीतये सविशेष महत्त्वपूर्णं मन्यते, तेषां भेदं च दक्षिण, शठ, धृष्ट इति प्रस्तावयति । एतेषु धृष्टो वा शठो वा तावद् भरतस्याधमेन समान ।[1]

*धनञ्जयस्यानुकूलो दक्षिणश्च नायको भरतेन प्रियः, कान्तः, विनीतः,* नाथः, स्वामी, जीवितम्, नन्दन इत्यादिभि नामभि संकेतितः ।[2] धनञ्जयस्य शठो धृष्टो वा भारतीयनाट्यानुसारेण नायिकया दुःशीलः, दुराचारः, शठ, वाम, विकत्थन निर्लज्जः, निष्ठुरश्चाभिधीयते ।[3]

धनञ्जयस्तु दक्षिण, शठ, धृष्ट इति प्रकारत्रयमेव संक्षेपेण वर्णयति । भरतस्तावत् प्रत्येकस्य भेदानपि सूक्ष्मेक्षिकया सरल विवृणोति । भरतानुसारेण दक्षिणादयो नायका अधोविधाः सन्ति—

दक्षिणः

कुलीनो धृतिमान् दक्षो दक्षिणो वाग्विशारदः । २२.३१०

शठः

वाचैव मधुरो यस्तु कर्मणा नोपपादकः ।
योषितः किञ्चिदप्यर्थं स शठः परिभाष्यते ॥ २२.३१५

निर्लज्जः

भरतस्य निर्लज्ज एव धनञ्जयस्य धृष्टः । तद्यथा—

वार्यमाणो दृढतरं यो नारीमुपसर्पति ।
सचिह्नः सापराधश्च स निर्लज्ज इति स्मृतः ॥ २२.३१८

प्रियः

भरतस्य प्रिय एव धनञ्जयस्यानुकूलनायकः । तद्यथा

यो विप्रियं न कुरुते न चायुक्तं प्रभाषते ।
तथार्जवसमाचारः स प्रियस्त्वभिधीयते ॥ २२.३०५

---

१. व्यक्ताङ्गवैकृतो धृष्टः । गूढविप्रियकृच्छठः । दश० २.७

२. ना० शा० २२.३०५–३११    ३. ना० शा० २२.३१२–३१९

## अङ्गनायकाः

फलभागङ्गी नायको भवति । नाटकीयकार्यव्यापारेऽव्यवसिताः शेषाः स्त्रीपुरुषा अङ्गनायका भवन्ति । एतेषां द्विधा विभाजनं समीचीनम्—प्रधाननायकस्योपकारकाः प्रतिनायकस्तस्योपकारकाश्च । तेषु प्रधाननायकपक्षतः प्रथमं स्थानं कार्यनायकस्य विलसति । स तु प्रागेव व्याख्यातः ।[1]

## उपनायकाः

नाटकीयेतिवृत्ते प्रधानोपकारकं क्वचित् पताकावृत्तं, प्रकरीवृत्तं च वर्तते । प्रधाननायकस्य सहायौ एतयोर्द्वयोर्नायकौ 'उपनायकौ' इति प्रोच्यते । पताकानायकस्तु कथामध्ये प्रकटति । अनुबन्धानुसारेण प्रथमं तस्य समीहितं नायकः साधयति, पश्चात् स नाटकान्तं यावन्नायकस्य साह्यमाचरति । प्रकरीनायकस्य स्वार्थस्तु परार्थ एव । नायकेनाज्ञात एव स नाटकान्तं यावन्नायकार्यं साधयेच्चयोत्तररामचरिते वाल्मीकिः । कथामध्य एव तस्यापि आविर्भावो लक्ष्यते ।

## अनुनायकः

नायकस्याद्यन्तं साह्यमाचरन्ननुनायकः प्रतिमानाटकेऽनर्घराघवे च लक्ष्मणवद् विभाति । न स कार्यनायकवत् स्वतन्त्रः, न चापि पताकानायकवत् स्वार्थसाधकः । स प्रकरीनायकवन्नि स्वार्थो भवति, किन्तु नायकस्यानुपस्थितिं न सहते ।

## पीठमर्दः

धनञ्जयानुसारेण पताकानायको पीठमर्दो भवति । पीठमर्दस्तावत् पारिभाषिकं पदम् । पीठमर्दस्तु नायकस्यानुचरः, भक्तः, गुणैः प्रधाननायकात् किञ्चिदूनो विचक्षणः स्यादिति धनञ्जयो दशरूपके निदर्शयति ।[2] नैतन्मतं धनञ्जयस्य वास्तविकतामनुधावति । तद्यथा शारदातनयानुसारेण—

पीठमध्यास्य पुरतः प्रयोक्ता नायिकादिषु ।
स पीठमर्दो विश्वास्य-कुपितस्त्री-प्रसादकः ॥

---

१. अस्य पुस्तकस्य पृष्ठे ८८ । २ दश० २८

पीठमर्दस्तन्मतेन विदूषको भवति ।[१] न हि खलु सुग्रीवादयः पताकानायकाः पीठमर्दाः । पीठमर्दास्तु नायिकाप्रापण एव नायकस्य सहायाः । नेतन्निर्दिष्टं धनञ्जयेन । स तु पताकानायकं पीठमर्दं च पर्याय मन्यते इति चिन्त्यम् ।

अविमारके नाटके पीठमर्दस्तु अन्तःपुरीयः परिजन इति नायिकाया अधोवचनेन प्रतीयते[२] —

कुरङ्गी—अथ चेमे मयूरा अस्माकं राजकुलमानसे अतिपीठमर्दभाव कुर्वन्ति ।

अत एव पीठमर्दो नायिकाया. प्रसादार्थमन्तःपुरे विचरतीति निश्चितमेव ।

मालविकाग्निमित्रे परिव्राजिका कौशिकी पीठमर्दिका सञ्जिता । सा राज्ञे मालविका प्रापयति ।[३] दशकुमारचरितेऽपि पीठमर्दः शृङ्गारसहाय एव विलसति ।

कतिपयोपरूपकेषु पीठमर्दस्य भूमिका भूयो वर्तते । तद्यथा नाट्यरासकम्, दुर्मल्लिका, भाणी ।[४]

रसमञ्जरी पीठमर्दमधोविधं परिभाषते—

कुपितस्त्रीप्रसादकः पीठमर्दः

रसरत्नहारे च

पीठमर्दः प्रकुपितस्त्रीप्रसादक उच्यते

बहुषु नाटकेषु विदूषको नायिकासख्यश्च पीठमर्दस्थाने व्यवहरन्ति ।

## विदूषकः

विदूषकस्य स्थानं शृङ्गारितनाटकस्य पात्रत्रय्या वर्तत इत्यनेन तस्य महत्त्वं सूचितम् ।[५] स नायकस्य राज्ञो नर्मामात्यः पारिपार्श्विकेषु गणितः ।[६]

कालिदासानुसारेणायं विदूषको राज्ञः प्रियसखो ब्राह्मणो भवति ।[७] स

१. रसमञ्जरीधिवानुसारेण —
पीठमर्दः शृङ्गारे सचिवः कुपितवधूप्रसादकश्च ।–शृङ्गारामृतलहरी, पृ० १४१

२ विदूषक. –अयि उपस्थिता देवी पीठमर्दिकापण्डितकौशिकी पुरस्कृत्य तत्रभवती धारिणी ।

३ दश० २.२  ४ नाटकलक्षणरत्नकोशे पृ० ३०५

५. नायकः रसतीन्द्रस्तु नायिका च सरस्वती ।
विदूषकमथोद्धार शेषास्तु प्रकृतीर्हरेः ॥  ना० शा० १.९७

६. ना० शा० ५ २८ अधिकृत्य भारती ।  ७ विक्रमोर्वशीये पञ्चमाङ्के ।

प्रणयात्मकेषु रूपकेषु नायकस्य प्रथम सहायको वर्तते। अन्यत्र स न केवलं राज्ञामेव हासकारकोऽपि तु देवानामपि। तद्यथा भरतो वर्णयति—

लिंगी द्विजो राजजीवी शिष्यश्चेति यथाक्रमम्।
देवक्षितिभृदमात्यब्राह्मणाना प्रयोजयेत्॥ २४.२०

अभिनवगुप्तानुसारेण देवाना विदूषको लिङ्गी ऋषिर्भवति। राज्ञा विदूषक. कश्चिद् ब्राह्मणो नियुज्यते। अमात्यस्य विदूषको राजजीवी भवति। ब्राह्मणाना विदूषक शिष्य एव नियोजनीय।[1] विशेषता राज्ञो विदूषकस्य प्रमुखस्थानमासीत् रूपकेषु। तद्यथा,

विप्रलम्भसुहृदोऽमी सकथालाप-पेशला.॥

ना० शा० २४ २१

भरतो विदूषकस्य विशेष वर्णयति—

प्रत्युत्पन्नप्रतिभो नर्मकृतो नर्मगर्भ निर्भेद।
छेकविदूषितवचनो विदूषको नाम विज्ञेय॰॥ ३५ २५
विदूषकस्य खलति. स्यात काकपदमेव वा। २१ १५५
दन्तुर खलति कुब्ज. खञ्जश्च विकृताननः॥
यदीदृश प्रवेश स्यादङ्गहास्यस्तु तद् भवेत्।
यदा तु बकवद् गच्छेदुल्लोलितविलोकितः॥
अत्यायतपदत्वाच्च अङ्गहास्यो भवेत्तु सः।
काव्य-हास्य तु विज्ञेयमसम्बद्ध-प्रभाषणं.॥
अनर्थकैर्विकारैश्च तथा चाश्लीलभाषणं.।
चीरचर्ममषीभस्मगैरिकाद्यैस्तु मण्डित।
यत्तादृशो भवेत् विप्रा हास्यो नेपथ्यजस्तु सः॥

ना० शा० १२ १३८-१४१

विदूषकस्तु कुरूपो वानररूपो वासीदिति रूपकेषु प्रायशो वर्णितम्। कालिदासो विदूषकमालेख्यवानर इवेति चित्रयति।[2] नागानन्दस्य तृतीयाङ्के चिटो विदूषक कपिलमर्कट इति सम्बोधयति। करुणावज्रायुधे चन्द्रसूरिर्विदूषकं वर्णयति—

---

१ भगवदज्जुकाये प्रहसने धूर्तसमागमे च आचार्यस्य शिष्य॰ शाण्डिल्यो दुराचारश्च विदूषक इव प्रयुक्त॰। प्रतिज्ञायौगन्धरायणेऽमात्यस्य यौगन्धरायणस्य विदूषक प्रयुक्त।

२ विक्रमोर्वशीये द्वितीयेऽङ्के।

पादौ वक्रौ धनुरिव कटिर्वं त्रमध्यानुकारा।

विदूषयत्यात्मानमिति विदूषकः। जात्या कस्यचिद् ब्राह्मणस्य दासीपुत्रो सम्मानितोऽपि जनः शृङ्गारपरायणस्य नायकस्य दक्षिणवामवरस्तस्य कृते प्राणानप्युत्स्रष्टुमुद्यतो विषमासु स्थितिषु अनन्यसाधारणप्रतिभया स कार्यं साधयति।[1] स तु नायकस्यापरे प्राणा इव सखा नाटकेषु महत्त्व भजते। उत्कृष्टतमेषु हीनतमेषु वा कार्यजातेष्वबाह्य एव विदूषको नायकस्य दक्षिणहस्त एव। स नायकार्यसाधने कूटघटकः सुसिद्ध, यथा मालविकाग्निमित्रे।

स राज्ञ· कार्याकार्यविचारणाया भागी भवति। मृगयां प्रति स राजानं निरुत्साहयत्यभिज्ञानशाकुन्तले। राज्ञो मनोरञ्जनस्य, खिन्नता निवारणस्य च स व्यवस्था रचयति। कुत्र राजा तिष्ठतूपविशतु वेत्यादि विधानं कल्पयति सः।[2]

पण्डितोऽप्यात्ममौर्ख्यप्रदर्शनेनापि हास्य मुत्पादयति विदूषकः। बहुज्ञोऽप्यल्पज्ञ इव तोरणमाला सर्प इति सूचयित्वा नायकस्य वासवदत्ता-संस्मरण-वियोग-जनितां चिन्तामपहरति। तत्रैव राज्ञ· शयनाय कथा कथयति स्वप्नवासवदत्ताकां चतुर्थेऽङ्के।[3]

विदूषकस्य प्रतिभा उत्कर्षस्तस्य प्रकल्पनासु प्रतिफलति। नायक उपरता-मपि वासवदत्ता पश्यतीति धारणा एतस्मिन्नपरेऽवन्तिसुन्दरीनाम यक्षी प्रतिवस-तीति तस्य प्रतिवचनेनोद्भूयते। नायकस्य शृङ्गाराचाररहस्य सम्यग् जनाति सः।

वीररसात्मकेष्वपि नाटकेषु विदूषक· प्रणिधित्वेन महत्त्वं भजते, यथा प्रतिज्ञायौगन्धरायणे।

नायकस्य विदूषको नायिकायाश्चेट्या समान एव पदेन प्रतिभाति। अवि-मारकस्य प्रथमाङ्के विदूषकः सन्तुष्टश्चेटी नलिनिका च समानस्तरीयौ विवदेते।

राजेत पु स्वकार्येषु स नियुज्यते। स्वप्ने घोषवती नवयोगा विधातुं स प्रेष्यते। अविमारके भासो विदूषकं यथोचितं समुन्नयति—

गोष्ठीषु हास्यः समरेषु योधः शोके गुरुः साहसिकः परेषु।
महोत्सवो मे हृदि किं प्रलापैर्द्विधा विभक्तं खलु मे शरीरम्॥ ४.२१

अनेन विदूषकस्य सर्वत्रिधिकार्येषु कौशलं सुव्यक्तमेव।

---

१. मृच्छकटिकस्य दशमेऽङ्के
विदूषक· —भो भद्रमुखो, मुञ्चतं प्रियवयस्य चारुदत्तम्। मा व्यापादयत। प्राण-परित्यागेनात्मन प्रियवयस्यमनुगमिष्यामि। स [illegible] गृहस्वामिन्या अग्रे मरणमा-कार्षीत्।

२. अभिज्ञानस्य द्वितीयेऽङ्के—साम्प्रतमेतस्या पादपच्छायाया निषीदतु भवान्।

३. नगर ब्रह्मदत्तं नाम। तत्र किल राजा काम्पिल्यो नाम।

सोऽयं विदूषको मायाचार आत्मानं यथोपयोगं विपरिवर्तयति। तद् भासेन निर्वर्णितम्—

'यज्ञोपवीतेन ब्राह्मण, चीवरेण रक्तपट, यदि वस्त्रमपनयामि श्रमणको भवामीति' विदूषकवचनमविमारकस्य पञ्चमेऽङ्के।

मृच्छकटिके विदूषको जूर्णवृद्धेन प्रेषितं प्रावारकं चारुदत्तायोपनयति। स नायकस्य प्रेष्य एव चतुष्पदे मातृभ्यो बलिमुपहरति। रदनिकाग्रहणे. शकारस्य मस्तकं दण्डकाष्ठेन भङ्क्तुमुद्यतः पराक्रममूर्तिरेव स शकारमपवदति।

शकाराजानुसारेण ॥ उपविशति, उत्तिष्ठति रोदिति, हसतीति च तस्य मानसिकदौर्बल्यं प्रकटयति।

ब्राह्मणत्वविहीनोऽयं जनः सार्थवाहं चारुदत्तं गणिकां च शिरसा प्रणमति।

विश्वासभूमिरयं नायकस्य भवति। नायको मृच्छकटिके तस्मै सुवर्णाभरणानि न्यासीकर्तुं ददाति।

विदूषकः स्वयं तु मृषाभाषोऽस्ति। अन्यानपि मृषावादेनात्मानमृणान्मोचयितुं शिक्षयति।[1]

विदूषको दौत्यमपि करोति मृच्छकटिके। पञ्चमेऽङ्के ॥ वसन्तसेनायाः सन्देशं नायकायोपनयति यत्प्रदोषे आगमिष्यामीति। तस्या आगमनं चेटमुखाच्छ्रुत्वा स्वामिनं सूचयति।

कामोपचारेषु नायकस्य मन्त्री विदूषको मृच्छकटिकस्य चतुर्थे पञ्चमे चाङ्कयो-र्नायकं वसन्तसेनायाः विमुखीकर्तुमेव यतते इति तस्य विपरीतरीतिर्वसन्तसेनाया औदार्यस्याज्ञानादेव समभवत्। मूर्खोऽयं मूर्खोऽपमित्यभिहितो वस्तुतो मौर्ख्यपूर्णमाचरति स कतिपयप्रसङ्गेषु। स्वकीये मौर्ख्यपूर्णेऽपि व्यवहारे ॥ समयानुरूपेण गाम्भीर्येणानुवासितः।[2]

मृच्छकटिकस्य नवमेऽङ्के विदूषको नायकं प्रति शकारस्य दुर्व्यवहारं प्रतीत्य शकारं ताडयति, स्वयमपि तेन ताड्यते।

विदूषकस्य भरः क्वचिदुदात्ततमो दृश्यते। मृच्छकटिकस्य नवमेऽङ्के-चारुदत्तस्तं नियोजयति पुत्रं च मे रोहसेनं परिपालयस्वेति।

कालिदासीयो विदूषकः शृङ्गारभूमौ नितरां वैषम्यनिवारको विलसति। मालविकाग्निमित्रे परं कपटकापटिको नायकस्य नायिकया सङ्गमनायोपायवैचित्र्यं

---

१. मृच्छकटिके तृतीयेऽङ्के।

२. मृच्छकटिके पञ्चमेऽङ्के वसन्तसेनां प्रति तस्यानुयोगा गम्भीरमुद्रया विहिताः। स चेटीं पृच्छति किं भवत्यात्रैव स्वसव्यमिति।

विरचयति ।[1] प्रथमं तावन्मालविकानृत्यप्रदर्शनं द्वितीयं च दूत्या बकुलावलिकाया योगेन प्रमदवने नायिकामिलनं चायोजयति ।

विदूषकस्तूपायदर्शी वैषम्यनिरासप्रसङ्गे प्रसिद्ध एव । किमत्र कर्तव्यमिति प्रश्नस्योत्तरं विदूषकस्य—अस्त्यत्रोपाय इति श्रूयते मालविकाग्निमित्रे । स नायकस्य प्रियवस्तुना रक्षको भवति । विक्रमोर्वशीये राजा तस्मा उर्वशीपत्रं रक्षितुं ददाति । नायकोऽपि नायिकासंगमानुभावान् विदूषकेण सह संलापेन सामाजिकाननुरञ्जयति । यथा—

अनीशया शरीरस्य स्ववशं हृदयं मयि ।
स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव ॥ २.१८

नैतद् दृष्टं भवेत् सामाजिकैरिति सन्दिहानः कविर्विदूषकेण सह वार्तया विदितं करोति ।

चेटीवद् विदूषको राज्ञे पथप्रदर्शनं करोति । तथाहि विक्रमोर्वशीये—

राजा ( विदूषकं प्रति )—तदादेशय मणिहर्म्यपृष्ठं मार्गम् । तत्रैव ग उर्वशी वासगृहमार्गं प्रदर्शयति ।

नायिकां प्रति स्वानुरागप्रभावं नायको विदूषकमेव निवेदयति । तद्यथा विक्रमोर्वशीयस्य तृतीयेऽङ्के—

राजा ( विदूषकं प्रति )—वयस्य परभृतनादागमनं देव्याः । तद्विविक्ते कथयिष्यामि स्वामवस्थाम् । ततः परं स उर्वशी-विषयिणीं मनोगतिं वर्णयति ।

'राजा सन्तान-विहीनोऽस्ति' इति चिन्ता विदूषकस्य मानसे प्रतिफलति ।[2] स मृगयाकर्मणि राज्ञ साहाय्यमाचरति ।[3]

अभिज्ञानशाकुन्तले विदूषकस्तूचितम प्रतिष्ठितः । तद्यथा राजा—

त्वमम्बाभिः पुत्र इति प्रतिगृहीतः । तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हसि ।

विदूषकः —यथा राजानुजेन गन्तव्यं तथा गच्छामि । युवराजोऽस्मीदानीं संवृत्तः ।

विदूषकस्योन्मत्तवत् कार्याणि हास्यं सृजन्ति । तद्यथाभिज्ञानशाकुन्तले —

---

१. एतदर्थं विदूषको धारिणीं दोलातः परिभ्रंशयति, तस्याश्चरणौ सरुजौ करोति चेति प्रथमः कपटः । नागमुद्रामधिगन्तुं स्वकीयस्य नागदंशस्य मिथ्यावार्तेति द्वितीयः कपटः ।

२ विक्रमोर्वशीयस्य पञ्चमाङ्कस्य प्रवेशके ।

३ भो इतो दक्षिणान्तेनापगतः स शासनीय गुणपभोजन इति विक्रमोर्वशीये ।

मुनिसुताप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः॥

विदूषकः—तिष्ठ तावत्, अनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयिष्यामि। स दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति।

राजा—(सस्मितम्) भवतु दृष्टं ब्रह्मवर्चसम्।

विदूषकोऽपार्थकं च वदति। यथाभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के तस्यात्मगतम्—

यथाहं पश्यामि पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः।

## विटः

वेशोपासकाः सन्ति विटाः। तेषां कामसहायाश्च विटा भवन्ति। कामकलाचार्यो विटो न केवलमात्मानमपितु परांश्च रमणात् रमणीर्वेश्याङ्गनाश्च कामार्णवे निमज्जयति। स शकारादीनां कृते वेश्याग्रहणे सहायः।[१] स वेश्यामनुनयति मृच्छकटिकस्य प्रथमाङ्के।[२] शकारस्याङ्गरक्षकः तस्यैव मौर्ख्यं प्रकटयति। वेश्याकर्तव्यं वसन्तसेनां शिक्षयति।[३] स गुणिनं चारुदत्तं भूरिशः प्रशंसति मूर्खं शकारं भृशं निन्दति च।[४] सविमर्शमाचरति। विटस्यौदार्यं स्वगृहचौरस्यापि कृतार्थकरणेन सिध्यति। इदं तु विटसम्राजश्चारुदत्तस्य चरितम्।

पञ्चमाङ्के गणिकाया वसन्तसेनायाः सहायको विटोऽनुत्तमकामकलाभिज्ञस्तामपि कामायनं शिक्षयति।[५] सोऽभिसारिण्याः परिचयं नायकाय साम्प्रतं प्रस्तौति—

एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते।
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका॥ इत्यादि ५.३५

आशास्ते च—

दाक्षिण्यपण्यसुखनिष्क्रयसिद्धिरस्तु। मृच्छ ५.३६

औदार्यमपि कविनियोगेन विटस्य प्रकटति। स वसन्तसेनां शकारपाशाद्रक्षितुं तामुपायं संकेतयति।[६] अष्टमेऽङ्केऽपि स वसन्तसेनां शकारयन्त्रणाद्रक्षितुम-

१ विटः शकारं सम्बोधयति—न भेतव्यं न मर्तव्यम्।
२ वेश्यासि सर्वं भज। मृच्छ, १.३२
३ मृच्छ० १.३४—त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयम्। इत्यादि।
४ दीनानां कल्पवृक्षः इत्यादि चारुदत्त-विषये अन्धस्य दृष्टिरिव इत्यादि शकारविषये च।
५ अत्र चारुदत्तगृहं प्रविश्य कोपोऽत्यन्तं न कर्तव्यः।

सत्यमपि वदति—काणेलीमात , सर्वं राक्षस्येवात्र प्रतिवसतीति ।

स शकारस्य निदेशेनाकार्यं कर्तुं नास्ति समुद्यत. मारय, वसन्तसेनामिति श्रुत्वा कथयति—

बालां स्त्रियं च नगरस्य विभूषणं च
वेश्यामवेशसदृशप्रणयोपचाराम् ।
एनामनागसमहं यदि घातयामि
केनोडुपेन परलोकनदीं तरिष्ये ॥८.२३

स वसन्तसेनावधोद्योगिन शकारं गले गृह्णाति भूमौ पातयति च ।[1]

विटस्तु सद्वृत्तिभिरात्मगुणैश्चाविरहित एव प्राय. शोभते । 'वसन्तसेना मया मारिता' इति शकारवचनं श्रुत्वा स मूर्च्छति । नास्ति किंचिदपि तत्र नाट्यरसे मानवोत्कर्षविधायि यद् विटस्याचरणेषु वृत्तिषु वचनेषु वा न दृश्येत । स कथयति वसन्तसेना-मरणं दृष्ट्वा—

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रति-
र्हा हालङ्कृतभूषणे सुवदने क्रीडारसोद्भासिनि ।
हा सौजन्यनदि प्रहासपुलिने हा मादृशामाश्रये
हा हा नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः ॥८.३८

ईदृशोभावा विटस्य योग्यताया असन्दिग्ध एव । शकारादीनामुपस्थानं तस्य माहात्म्यं क्षिणोत्येव ।

सोऽप्याचारविरोधेन शकारं मारयितुं खड्गमाकर्षति । न केवलं कविहृदय एव विटोऽपि तु सद्धर्माभ्युदयाय स क्रान्तिकारिदले सम्मिलति ।[2]

नागानन्दे तृतीयेऽङ्के विटस्तु विदूषकेण साम्यं बिभर्ति । स मधुपानेन स्त्रीवेशधरं विदूषकं स्वप्रिया मालतिका मत्वा तां कण्ठे गृहीत्वा प्रसादयितुं चेष्टते । तत्रैव चेट्या नवमालिकया सह तस्य प्रणय-प्रसङ्गः प्रवर्तते । तथापि मृच्छकटिकानुसारेण—

कुलजनदर्शनकातरं हि चक्षुः' इति विशिष्टो विटः ।

भरतो विटस्य त्रयस्त्रिंशद् गुणान् निर्दिशति । तद्यथा, शास्त्रविचक्षणसम्पन्नो, रूपवान्, प्रियदर्शनः, विक्रान्त., धृतिमान् वयोवेषकुलान्वित., सुरभिः,

---

१. शकार. कथयति—

सर्वैरान्ये मया पृष्टो मन्त्रिणं च धृतेन च ।
अद्य कार्ये समुत्पन्ने जातो मे वैरी कथम् ॥८.२८

२. मृच्छ० दशमेऽङ्के

मधुर, त्यागी, सहिष्णु, अविकत्थन., अशङ्कित., प्रियभाषी, चतुरः, शुभदः, शुचि, कामोपचारकुशल, दक्षिण, देशकालवित्, अदीनवाक्यः, स्मितवान्, वाग्मी, दक्ष, प्रियवद, स्त्रीलुब्ध. संविभागी, श्रद्धान, दृढस्मृतिः, गम्यासु चाप्यविश्रम्भी, मानी च ।[1] अनेन विट. प्रतिष्ठितो नागरिक प्रतिभाति ।

शारदातनयस्य विट पूर्वोक्तवैशिकेन समान एव । तद्यथा—

> वेशोपचारकुशलो मधुरो दक्षिणः कविः ।
> ऊहापोहक्षमो वाग्मी चतुरश्च विटो मतः ॥
> विटश्च कामसाचिव्यकरणे चोपयुज्यते ।
> माल्यभूषोज्ज्वलः कुप्यत्यनिमित्तं प्रसीदति ।
> विटः प्राकृतवादी च प्रायो बहुविकारवान् ॥[2]

सिंहभूपालोऽपि विटं प्रायश. सर्वगुणसम्पन्न परिभाषते ।

वैशिकस्य विटस्य वा सम्यक् परिचयश्चतुर्भाणी-नामकेनोपरूपकचतुष्टयेन प्रतिफलति । तत्र नायका अनायका वा विटा वेश्योपचारे सम्यक् प्रवर्तन्ते । ते तत्र राजकुमारा ब्राह्मण-युवका वणिज, शूद्रा वा सर्वे वेश्यानिरता एव स्वजीवनं सफलयन्ति । वृद्धोऽपि विट स्वानुभवेन प्रवीण सन् कामुकान् वेश्याश्च परामर्शैर्बोधयति ।

भाणनामके रूपके वैशिको वा विटो यद्युत्तमोऽपि वेशोपचारकर्माणि न विशेषमहत्त्वपूर्ण स्थान भजते, यथा मृच्छकटिकादिषु प्रकरणेषु । अस्मिन् प्रकरणे शकारस्य मित्रमेव तस्य कामुकता सम्पूरयति ।

ईदृशो महत्त्वपूर्णो विटो धनञ्जयेनातिसंक्षेपेण वर्णित —

> एकविद्यो विटश्चान्यः ।

बहुरूपमिश्रानुसारेण एकविद्या मन्मथतन्त्रमेव । विटस्तु केवलं हास्य-श्रृङ्गारात्मकरूपकेष्वेव विलसतीति अभिनवगुप्तस्य मतम् ।[3]

## शकारः

शकारस्तु भरतेन परिभाषितोऽधोविधो वर्तते—

> शकाराभीरचण्डालशबरद्रमिलान्ध्रजा. ॥

---

१. ना० शा० २३.२–७

२ भावप्रकाशने पृ० ६४, २६७, २७१ । विटस्तु साधारणत. संस्कृत वदति ।

३ अभिनवभारती प्रथमखण्डे पृष्ठ ३२

शकारघोषकादीनां तत्स्वभावश्च यो गणः।
शकारभाषा योक्तव्या चाण्डाली पुल्कसादिषु ॥ १७.५४

अनया कारिकया स्पष्टं प्रतिभाति यत् नाटकीया प्रकृतिः शकारः कस्याश्चिद् शकारनाम्न्या विशिष्टजाते. प्रतिनिधीभूतो नृपस्य नायकस्य सान्निध्यमभजत्। अभिनवगुप्तोऽपि तत्रैव शकाराणां जाति मन्यते। तस्या जातेः सामान्यलक्षण प्रवदति—शकारा नीचाभिजना आर्यीभूतत्वेन सदर्पा। मानियर्रविलियम्स-महोदयः स्वकोशे शकार व्याख्याति—'शकवंशीय., शक., राजश्यालः ( राज्ञो हीनकौलिकपत्न्या भ्राता ), नाटकेषु मूर्ख, हास्यास्पदं, सदर्प., नीचः, निर्दयश्च। यथा मृच्छकटिके सस्थानक। स शकारी ( शकारबहुला भाषा ) वदति। अभिनवगुप्त शकारमधोविधं बहुलीकरोति—

शकारबहुला यस्य भाषा स शकार' शकारोपलक्षितशकारजनपदवासीत्यन्ये यद्वक्ष्यते—'शकाराभीरचण्डाल' इत्यादि। हीनाशय उत्तमपदेऽभिरोपितः शकार इत्यन्ये।[1]

अभिनवगुप्तानुसारेण योग्यतां विनापि शकारो मूर्धन्यपदेऽधिष्ठित आसीत्। वस्त्राभरणसंस्पर्शलोकनगर्वयोग शकारस्तेन वर्णित। स विशेषयति—न चार्यदेशजाति. शकार. कश्चित् प्रसिद्ध। स म्लेच्छजातीयः।[2]

अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम्।
लोकन्यायविरुद्धं च शकारवचनं विदुः ॥

शकारस्तु नीचजातीयो नगररक्षाधिकारी वर्तते। विश्वनाथानुसारेण राज्ञोऽनूढाया स्त्रिया भ्राता।[3] मृच्छकटिके शूद्रकानुसारेण शकारः कुलटापुत्र, राजश्यालः सस्थानकः उच्छृङ्खलक, कृतमनदोषभाण्ड, बहुसुवर्णमण्डित-मर्कटक, कुट्टिनीपुत्र आसीदित्यनेन तस्य कार्यजातमनुमातुं शक्यते। न किमप्यकार्यं तस्याकरणीयं प्रतिभाति। मृच्छकटिकानुसारेण शकारो कपटनियोजनेऽप्यबाह्यः प्रत्युत्पन्नमतिरभियोगेषु परं निष्णातो महानुभावानां विपत्तिकोश एव स्खलिताचारः प्रतिभाति।

कालिदासानुसारेण श्यालस्तु सर्वविद्विमर्शप्रतिपन्नोऽपि भवति। अभिज्ञानशाकुन्तले स राज्ञेऽङ्गुलीयकं ददाति। तदा राज्ञो भावानुभावान् विमृश्य स निवेदयति –

---

१–२. ना० शा० १२.१४८ अधिकृत्य भारती

३. मदमूर्खताभिमानी दुष्कुलैश्वर्यसंयुक्त.।
सोऽयमनूढाभ्राता राज्ञ श्याल शकार इत्युक्त. ॥ साहित्यदर्पणे ३.८४

न तस्मिन् महार्हं रत्न भर्तुर्बहुमतमिति तर्कयामि। तस्य दर्शनेन भर्तुरभिमतो जन. स्मारितः मुहूर्तं प्रकृतिगम्भीरोऽपि पर्यस्रुकनयन आसीत्।

शकारो नगररक्षो नियोगानुसारेण पापर्य्यभिचारभूमिषु विचरति।

मृच्छकटिकस्य प्रथमेऽङ्के शकारस्य बलाद् वेश्या-ग्रहण विख्यातमेव। तिरस्कृतानुनया गणिका स निन्दति।[1] स्त्रीमारणदक्ष[2] बलाद् वसन्तसेना ग्रहीतुमिच्छति। शकार मुखात् प्रायश. पद्यमेव विगलितैर्निहासिकतन्त्रं सापवादमवाच्य च साटोपमेव निर्गलति। तथया वसन्तसेना प्रति

चाणक्येन यथा सीता मारिता भारते युगे
एव त्वां मोटयिष्यामि जटायुरिव द्रौपदीम्॥ ८.३५

स्वानि पापाचरितानि वैरसाधनहेतुना गुणिजनेष्वपि मिथ्यारोपयति।[3] कुटिलबुद्धिदुर्विलसितेन स नितरामसत्यमपि साक्ष्विनि प्रमाणयितुं क्षमते। परनियन्त्रण परहितहनन च तस्याभ्यासक्रम। अपरान् सुचरितानपि स्वार्थसिद्धये पापीकर्तुं चेष्टते स नृशसो भोजेनान्नदानेन प्रलोभयति च तान्। अनेन प्रकारेण भाषया व्यवहारेण चाद्वेगोद्वेलितमपि प्रेक्षकमानसं शकारो हास्यानुबन्धेन सङ्कुलयति। आत्मप्रवञ्चक स बहुश. विकत्थते।[4]

स मृषावादनतत्परोऽपि शङ्कानिर्झरनिराशित सत्यमपि वदति—एषा (वसन्तसेना) मया मारितेति कपटाचार स वदति—

चारुदत्तविनाशाय कलयामि कपट नवम्। मृच्छ. ८.४४

शकारस्य नीचता चातुर्यं च शारदातनयेन सपदि व्याख्यातम्—

भवति शकारो बहुगुणाढ्यः।

## कञ्चुकी

कञ्चुकी वस्तुतो राज्ञ परिजन। अमरकोषे तु—

अन्त पुरे त्वधिकृतः स्यादन्तर्वशिको जनः।
सौविदल्लः कञ्चुकिनः स्थापत्या. सौविदाश्च ते॥

---

१. मृच्छ० १ २३

२ स्त्रीणा शत मारयामि शूरोऽहम्। मृच्छ० प्रथमेऽङ्के। तत्रैव अष्टमेऽङ्के स कण्ठे निपीडयन् वसन्तसेना मारयति।

३ शकारो विट कथयति--अरे वसन्तसेना स्वयमेव मारयित्वा मा दूषयित्वा कुत्र पलायसे।

४ न वा वञ्चितो भ्राता मम पिता मातेव सा।
द्रौपदी योऽस्मौ पश्यति नेदृश व्यवसितं पुत्रस्य शूरत्वम्॥

राजकुमार्या विवाहस्य विषयेऽपि तस्य मतं विज्ञेयमभवद्राज्ञे ।

महत्त्वपूर्णघटनानां निवेदयिता क्वचित् कंचुकी भवेत् । स प्रतिज्ञायौगन्धरायणे राजानं सूचयति शालंकायनेन वत्सराजग्रहणमिति वृत्तान्तम् । स राज्ञो विशिष्टादेशानुच्चपदाधीशान् नयति । स राजप्रासादस्य महत्त्वपूर्णद्वारस्य रक्षकोऽपि प्रतिभाति प्रतिज्ञायौगन्धरायणस्य द्वितीयेऽङ्के, वेणीसंहारस्य पञ्चाङ्के च । स राजानं विज्ञापयति शालङ्कायनस्य प्रवेशम् । स प्रश्नानुसारेण वासवदत्ताया वत्सराजस्य कुतस्य राज्ञे निवेदयति । उत्तमोत्तमातिथये कथं सत्कारो विधेय इति कञ्चुकिनो भर आसीत् ।[1] वेणीसंहारे कञ्चुकी दुर्योधनस्य रथकेतनो भग्न इति सूचयति । राज्ञो महासेनस्य प्रतिनिधीभूय स यौगन्धरायणाय भृङ्गारमर्पयति ।

प्रतिमानाटकस्य प्रथमाङ्कस्य विष्कम्भके काञ्चुकीयोऽभिषेकादीनां धार्मिकविधीनां सम्भारान् समगृह्णात् ।

कञ्चुकिनः समीक्षाद्दरिष्टपि भासेन प्रतीष्टा । स रामस्याभिषेकप्रस्तावमनुमोदते—

इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः ।
रामाभिधानं मेदिन्यां शशाङ्कमभिषिञ्चता ॥१.४

प्रतिमानाटके स वनवासविषये रामेण सह विवदते ।[2] न खलु न खलु गन्तव्यम् । इत्यादि

रामवनवासोद्विग्नो दशरथ इति वृत्तं स प्रतिहारी कथयति । पश्चात्समात्येभ्यो निवेदयत्यस्वास्थ्यं महाराजस्य ।

महतामागमनसूचनां स राज्ञे ददाति, तान् प्रवेशयति च ।[3] दूतवाक्ये 'कृष्णागमनं दुर्योधनं श्रावयति इत्यनेन क्वचित् प्रतिहारीवदाचरति ।

दूतवाक्ये स प्रतिहाराधिकृतानादिशति—आहूयन्तां सर्वे राजानो दुर्योधनेन मन्त्रणाय । अस्मिन् रूपके चित्रपटानयनापनयनाभ्यां स प्रेष्यवत् प्रतिभाति ।

बालचरिते कञ्चुकी कंसेन ज्योतिर्विद्भिः पुरोहितैश्च सह पराभवाय नियुज्यते ।[4]

---

१. प्रतिज्ञा० तृतीयेऽङ्के

२. कञ्चुकी—अथ च तयानाहूतोपसृतया भरतोऽभिषिच्यतां राज्यं इत्युक्तम् । भवान्युक्तोऽस्ति ।

३. दशरथाय कथयति—सुमन्त्रः प्राप्त इति प्रतिमाया द्वितीयेऽङ्के । अभिज्ञानशाकुन्तलस्य पञ्चमाङ्के—कञ्चुकी राजानं सूचयति—'काश्यपसन्देशमादाय तपस्विनः सम्प्राप्ताः' इति ।

४. द्वितीयाङ्के ।

सोऽयं कञ्चुकी स्वकीयामन्तःपुरसेवां वृद्धावस्थां च पुनः पुनराक्रोशति। तद्यथा विक्रमोर्वशीये—

सेवाकारा परिणतिरभूत् स्त्रीषु कष्टाधिकारः ॥३.१

विक्रमोर्वशीयस्य पञ्चमेऽङ्के कञ्चुकी दस्युगृध्रग्रहणाय नागरिकान् विज्ञापयितुं नियुज्यते।

राजगृहाधिष्ठितः स विक्रमोर्वशीये पञ्चमेऽङ्के राजदर्शनकामानां सूचनां राज्ञे निवेदयति। तत्र च्यवनर्षेराश्रमादागतौ तापसीमायुष्कुमारं च राज्ञः सविधं नयति।[1] राजकुमारस्याभिषेकायोजनं कर्तुं स राज्ञः सन्देशममात्यपरिषदमुपनयति। अभिज्ञानशाकुन्तलस्य पञ्चमेऽङ्के कञ्चुकी राजभवनस्य द्वारपालवत् प्रतिभाति, यतो हि नाम स कण्वशिष्यागमनं राज्ञे न्यवेदयत्। स राज्ञो वचनादुपाध्याय सोमरातं विज्ञापयति। तपस्विनां सत्कारं विधातुम्।

राजभवने राज्ञः समीपतरमनिशमुपस्थितः कञ्चुकी स्ववयश्चारित्र्यविश्वासभूमित्वादिभिर्महत्त्वं भजते।

मुद्राराक्षसस्य तृतीयाङ्के चन्द्रगुप्तः कञ्चुकिनमादिशति—अतः प्रभृत्यनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यं करिष्यतीति गृहीतार्थाः क्रियन्तां प्रकृतयः। अथ कञ्चुकिनो विशेष एव कार्यक्रमः।

यद्यपि वेणीसंहारे कञ्चुकी आत्मानमधोविधं वर्णयति—

'नोच्चैः सत्यपि चक्षुषीक्षितमलं श्रुत्वापि नाकर्णितम्।'

तथापि स स्वतन्त्रो द्रष्टा, विचारकः, विषयप्रतिपादकश्च स्ववचनैः कार्यैश्च प्रतिभाति। स दुर्योधनं वदन् समालोचते—अद्याप्यन्तःपुरविहारमनुभवति। अयमपरमयथातथं स्वामिनश्चेष्टितम्। कुतः

आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥ ३.२

स दुर्योधनं निर्संवदति—(अभिमन्युवधमधिकृत्य) का नामात्र श्लाघा।

साधारणभृत्यवत् कञ्चुकी वेणीसंहारस्य षष्ठाङ्के राक्षसमुनये भृङ्गारजलमानीयार्पयति। तत्रैव स स्वतन्त्रविचारक इव तं मुनिं सशोधयति—भीमसुयोधनयोरिति संशय। परन्तु स युधिष्ठिरं समाश्वासयति।

१. अभिज्ञानशाकुन्तले कञ्चुकी कण्वाश्रमादागतान् तपस्विनः राज्ञः समीपं नयति।

वेणीसंहारे षष्ठाङ्के कञ्चुकी नायकाय युधिष्ठिराय धनुरुपनयति।

नायकादपि सूक्ष्मतरमन्वीक्षण स्वकीय कञ्चुकी क्वचिद् प्रमाणयत्येव। वेणीसंहारे राक्षसमुनी रहस्यकूटकपटोद्घाटनमथ कुर्यादिति कञ्चुकिनो बिभेति। अन्तत. कञ्चुकी युधिष्ठिरं सूचयति—

धिङ् मुने राक्षससदृशं हृदय भवत। तदनु राक्षसो वदति—कथ ज्ञातमह- मनेन। परतोऽपि कञ्चुकी आदौ भीमं प्रत्यभिजानाति स्म। स युधिष्ठिरं प्रति वक्ति—अय खल्वायुष्मान् भीमसेन।

स्वामिनो राज्ञी प्रति सर्वथात्मनिवेदन कञ्चुकिनो महिमानं द्योतयति। वेणीसहारे स द्रौपदीमनु मरण व्यवस्यति।

उत्तररामचरिते कञ्चुकिन औदार्य परिलक्ष्यते, यत्र स जनक घोषयति सप्तमाङ्के। तद्यथा—

नार्हसि दुःखयितुमतिदुःखितां देवीम्।

कञ्चुकिस्थाने सौविदल्लो बालरामायणस्य प्रथमाङ्के प्रयुक्त.।

## चेटः

चेटस्तु मृच्छकटिके शकारस्य वेश्याग्रहणे सचेष्ट सहाय।[1] स तामनुनयति। चारुदत्तस्य चेट. तस्य विदूषकस्य च पाद प्रक्षालयति स्वहस्ताभ्याम्।[2] वसन्त- सेनाया भृत्यश्चेट कश्चिद् प्रवहणवाहकोऽभवत्।[3] कश्चिदन्यश्चेटो द्वारपाल एव चारुदत्तस्य सकाशादागतस्य ब्राह्मणस्य सूचना वसन्तसेनायै निवेदयति। स द्वारं रात्रौ उद्घाटयति।[4] वसन्तसेनाया अपरश्चेटस्तु पुरोगामितया उद्दाम- मर्मपरायणतया च प्रेष्योऽपि स्वात्मवृत्तिक. प्रतिभाति पञ्चमाङ्कस्यान्तिमे भागे। स प्रश्नोत्तरद्वारेण वसन्तसेना संज्ञापयति। [redacted] पद्येनापि स्वगत वदति।

न खलु सामाजिकी प्रतिष्ठा चेटादीना प्रतिभाति। तत् विदूषकस्य चेट- विषयकसम्बोधनेन स्पष्टमेव।[5]

शकारस्य चेट. स्वामिन आज्ञामनवधार्य वसन्तसेनां मारयितुं नोद्यत.। [redacted] परलोकाद्बिभेति। शकारश्चेटेन ताड्यते।

चेटश्शकार निन्दति वसन्तसेनाया हत्याप्रसङ्गे—महदकार्यं कृतमिति।

---

१. मृच्छ. १.२६

२. तत्रैव तृतीयाङ्के

३. चतुर्थेऽङ्के। षष्ठेऽङ्के वसन्तसेनायाः शकारस्य च प्रवहणवाहकौ चेटौ।

४. तृतीयेऽङ्के

५. पञ्चमेऽङ्के—अरे दास्या पुत्र कुम्भीलक ( चेट. ) उपसर्प ( चारुदत्तम् )

चेटस्य विश्वसनीयता तु निःसन्दिग्धा विद्यत एव। चारुदत्तस्य गृहे निक्षिप्तं स्वर्णभाण्ड तेन दिवा रक्ष्यते।

न खलु चेटो वद्धवाक्। शकारस्य चेट कथयति स्वामिविषये मृच्छकटिकस्य दशमेऽङ्के –अनार्य वसन्तसेना मारयित्वा न परितुष्टोऽसि साम्प्रतं प्रणयिजन-कल्पपादपमार्यचारुदत्त मारयितुं व्यवसितोऽसि।

विश्वनाथानुसारेण चेटो नायकस्य शृङ्गारसहायः। अत एव साधारणतश्चेटः सेवको विशेषतश्च नायिकाग्राहक एव।

## दूतः

दूतस्तु स्वामिनियोगमनुसृत्य प्रतिपक्षिण किञ्चित् सूचयति, परन्तु तस्य महिमा स्वत एवावश्यकतानुसारेण स्वामिने कार्यानुष्ठानेन परिक्षीयते। दूत-घटोत्कचे घटोत्कचो दूतवाक्ये कृष्णश्च दूतभरं निदर्शयतः। रामायणेऽङ्गदस्य दौत्य प्रथितमेव। स्वच्छन्दतया दूत स्वामिनियोगं विनापि स्वोपज्ञ व्याहरति। दूतेषु भूयिष्ठ प्रथिता सन्ति यमदूता।

दूतस्य मध्यमतया प्रायश श्रव्यमितिवृत्तं विकसति। यथा मुद्राराक्षसे, वेणीसंहारे च।

## देवदूतः

दूतानामुपयोगो देवलोकेऽपि दृश्यते। तत्र देवदूत इन्द्रस्य सकाशादागत्य ब्राह्मणरूपेण कर्णं निवेदयति—

भो कर्ण, कवचकुण्डलग्रहणाज्जनितपश्चात्तापेन पुरन्दरेणानुगृहीतोऽसि। पाण्डवेष्वेकपुरुषवधार्थममोघमन्त्र विमला नाम शक्तिरियं प्रतिगृह्यताम्।

अपरत्रेन्द्रादीनां देवाना सन्देशं निवेदयितुं देवर्षिर्नारदो सारथिर्मातलिश्च नियुक्तौ।

## प्रणिधिः, गुप्तचरः

प्रणिधयो गुप्तचरा आत्मानं गोपयित्वा परपक्षस्य वृत्तमुपनयन्ति, परपक्ष घातयन्ति चेति भासस्य प्रतिज्ञायौगन्धरायणे दृश्यन्ते। मुद्राराक्षसे तु तेषां परिवर्तितरूपमधोविधं प्रकल्पितम्—

| गुप्तचरः | परिवर्तितरूपम् | विशेषः |
|---|---|---|
| इन्दुशर्मा (चाणक्यस्य सहाध्यायी ज्योतिर्विद्) | जैनक्षपणक | राक्षसस्यान्तरङ्गः |
| निपुणक (चाणक्यस्य धर्मभ्राता) | यमपटधर. | राक्षसस्य मुद्रिकामानीय चाणक्याय समर्पयति |

निपुणको गुप्तचरश्चाणक्येन प्रकृतिचित्तपरिज्ञाने नियुक्तः। गुप्तचरा आवश्यक-वृत्तसारसङ्ग्रहेण सूक्ष्मपर्यवेक्षणमपि दर्शयन्ति। तद्यथा राक्षसस्य विराधगुप्त-नामा प्रणिधिः स्वगतं वक्ति—

वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः।
गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी
मौर्यस्योपरि नाधुनापि कुरुते वामेतरं श्रीस्तनम्॥ २.१२

प्रणिधेः कार्यस्येयत्ता प्रणिधित्वपर्यन्तैव नास्ति। स स्वामिने यथावसरं सम्यगुपदिशति। तद्यथा विराधगुप्त (अहितुण्डिकः) मुद्राराक्षसे विषण्णं राक्षसं बोधयति—

अमात्य, तथापि खलु प्रारब्धमपरित्याज्यमेव। पश्य—

किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः।
किं त्वङ्गीकृतमुत्सृजन् कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढं प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम्॥ २.१८

प्रणिधिस्तु स्वामिनः प्रतिष्ठास्पदं वर्तते। राक्षसो विराधगुप्तं 'सखे' इति सम्बोधयति।

### बाह्यसहायाः

भरतानुसारेण (युव-) राजः, सेनापतिः, पुरोधाः, मन्त्री, सचिवः, प्राड्-विवाकः, कुमाराधिकृतश्च, नायकस्य सहायाः सन्ति। अन्येऽपि तत्र सहाया भवेयुरिति भरत आह—

एते चान्ये च बहवो मान्या ज्ञेया नृपस्य तु। २४.७५

भरतनिर्दिष्ट-सहायेषु युवराजः सेनापतिः, सचिवः, प्राड्विवाकः, कुमाराधि-कृतश्च धनञ्जयेन न संगृहीताः। अस्मिन् प्रसङ्गे नायकस्य सहायो राजा भवेदिति भरत स्पष्टयति।[1] कथं नाम राजा स्वयमेव स्वकीयः सहायः स्यादिति सन्देहे समुत्पन्नेऽभिनवगुप्तो व्याख्याति—युवराजोऽत्र राजशब्देनोक्तः। अत्र धनञ्जयस्यापेक्षितं कारिकाभिनवगुप्तं नानुसरन्तो किञ्चिन्नवीनं तथ्य-मुद्घाटयति—

---

१. राजा सेनापतिश्चैव पुरोधा मन्त्रिणस्तथा।
सचिवः प्राड्विवाकश्च कुमाराधिकृतास्तथा॥ २४.७५

मन्त्री स्व वोभय वापि सखा तस्यार्थचिन्तने। दश० २ ४२

कथं कश्चिद् राजा नायक स्वयमेव स्वकीय सहाय स्यादिति समाहितमेव– राजा यदान्यस्य कस्यचिन्मन्त्रिणो वा दूतस्य वा कार्यं करोति तदा स स्वयमेव स्वकीय सहाय । अन्यत्रापि धनञ्जयो नायिकासहायेषु स्व इति गणयति। तत्र धनिकानुसारेण नायिका स्वयदूती भवति।

शारदातनयस्तावद् वैतालिको, बन्दी, मङ्गलपाठक सूतो, मागधश्चेति सहाया इति गणयति।

धनञ्जयेन तपस्वी ब्रह्मवादी, सुहृद्, कुमार, आटविक, सामन्तः, सैनिक वर्षवर, किरात, मूक, वामन, म्लेच्छ, आभीर शकार इति बहुजना नायको पकारका परिगणिताः।[1]

सर्वे ते नायकस्य सहाया गुणानुसारेण ज्येष्ठा, मध्यमा, अधमा वा भवन्ति।

## प्रतिनायकः

धनञ्जयानुसारेण प्रतिनायकस्तु—

लुब्धो धीरोद्धत' स्तब्ध पापकृद् व्यसनी रिपु । दश० २ ९

एतादृशेन प्रतिनायकेन नायकस्य मर्यादा न स्यादिति विचारणया प्रतिनायक-विषयकं रुद्रटमत समीचीन प्रतिभाति यत् स गुणी, अभिजातश्च भवेत्। पामर प्रतिनायकः सहानुभूति न जनयेदित्यपि विचारणीयम्। विरला एव प्रतिनायका लुब्धाः पापकृतो व्यसनिनश्च रूपकेषु प्रतिगृहीता । प्रतिनायकस्यापि सहाया भवन्ति। यथा महावीरचरिते प्रतिनायकस्य रावणस्य सहाय परशुराम ।

## नायकगुणाः

नायकस्य मानसिकवृत्तिमधिकृत्याष्टगुणा प्रकल्पिता । सत्त्वादेव प्रादुर्भवात्त सात्त्विकगुणा उच्यन्ते। सत्त्वं नाम चित्तवृत्तिरेव। नायकस्येमे गुणाः सात्त्विका भिनयेन सामाजिकान् प्रति प्रकटीक्रियन्ते।[2] सात्त्विकाभिनयस्तु चतुर्षु अभिनयेषु रसभावापेक्षया प्राधान्यं भजते। अत एव सात्त्विकगुणा बहुमता सन्ति।

अष्टगुणेषु शोभा, माधुर्यम्, स्थैर्यम्, गाम्भीर्यम्, औदार्यम् तेजश्च षडेव

---

१ दश० २ ४३, ४४

२ चतुर्विधोऽभिनयो भवति—सात्त्विक, वाचिक, आङ्गिक, आहार्यश्चेति। तत्र सात्त्विकाभिनये प्रकृते चित्तवृत्ते, वाचिकाभिनये वाण्या, आङ्गिकाभिनये शारीरिककार्याणाम्, आहार्याभिनये च तस्या वस्त्रपरिधानादीनामनुकरणं पात्रेण प्रस्तूयते।

नायकस्य कार्येभ्य- प्रेक्षकाणां बोधगम्यानि भवन्ति। शेष द्वयं विलासो ललितञ्च प्रत्यक्षमेव प्रतिफलति।

शोभा

भरतानुसारेण नायकस्य दाक्ष्यं, शौर्यम्, उत्साहो. हीनविषयेषु घृणा, उत्तमगुणेभ्यो रुचिश्च शोभाया उद्भव-।[1] धनञ्जय एतेषामुत्साहं न गणयति इति[2] तस्य त्रुटिरेव, यतो हि नाम इमे पौरुषा गुणाः सन्ति। पौरुषगुणेषु वीर-रसोचितोत्साहस्तु वर्णनीय एव।

विलासः

भरतानुसारेण विलासे नायकस्य गतिर्वृषभवत् महिमशालिनी भवति, दृष्टिश्च शनैः सञ्चरति। वचनं सल्लपनमीषद्हासपूर्वकं जायते। धनञ्जय-स्तत्त्वतो भारतीय लक्षणमनुहरति।

माधुर्यम्

कथं नाम माधुर्यं नायकेन समिध्यत इति वर्णयन् भरत करणानाम् (इन्द्रियाणाम्) युद्ध-नियुद्ध-व्यायामादिष्वभ्यासमावश्यकं मनुते।[3] यस्या स्थितौ साधारणजनानां महान् विकारो जायेत. तस्यामपि माधुर्यगुणोपेतस्य नायकस्य विकारो मधुर एव स्यात्। धनञ्जयो भरत तत्त्वतोऽनुहरति।

स्थैर्यम्

भरतानुसारेण धर्मकामविषयकेभ्यः सङ्कल्पेभ्य- सदाग्रहो हि स्थैर्यं नाम गुण-। नायको विघ्नोपहृतोऽपि वैधर्म्याद् विचलितो न भवति। धनञ्जयो भरतं संक्षेपेणानुहरति।

गाम्भीर्यम्

भरतानुसारतः —

यस्य प्रभावादाकारा हर्षक्रोधभयादिषु।
भावेषु नोपलक्ष्यन्ते तद् गाम्भीर्यमितिस्मृतम्॥

---

१. दाक्ष्यं शौर्यमथोत्साहो नीचार्थेषु जुगुप्सनम्।
उत्तमैश्च गुणैः स्पर्धा यतः शोभेति सा स्मृता॥ ना० शा० २२.३४

२. नीचे घृणाधिके स्पर्धा शोभायां शौर्यदक्षते। दश० २.११

३. ना० शा० २२.३६

## नायिकाविमर्शः

भरतो धनञ्जयश्चोभौ शृङ्गारे कामोपभोगविलासे च परायणः प्रकृतिमेव प्रायो निदर्शयतः । नायिका शृङ्गारवृत्तौ प्राधान्यं भजते।

भरतानुसारेण कामोपभोगाय नायिकाः त्रिविधा भवन्ति—बाह्याः, बाह्याभ्यन्तरा, आभ्यन्तराश्च ।[1] बाह्या नायिका वेश्याः सन्ति प्रकरणे, प्रहसने, भाणे च प्रयोज्या । आभ्यन्तरास्तु अन्तःपुरे राजभोग्या नाटकोचिता भवन्ति। बाह्याभ्यन्तरा तु एकावरुद्धा वेश्या भवन्ति ।[2]

राज्ञो नायिका वेश्या न भवेत् किन्तु दिव्यवेशाङ्गना तस्य नायिका भवितुमर्हति, यथा विक्रमोर्वशीये। धनञ्जयस्य स्वीया साधारणस्त्री च, भरतस्य कुलजा, बाह्या च क्रमशः स्तः । बाह्याभ्यन्तरा धनञ्जयेन न दृष्टा ।

भरतोऽष्टविधनायिका अपश्यत् । तद्यथा, वासकसज्जिका, विरहोत्कण्ठिता स्वाधीनभर्तृका, कलहान्तरिता खण्डिता, विप्रलब्धा, प्रोषितभर्तृका, अभिसारिका च । एताः सर्वा विवाहस्य पश्चाद्वर्तिन्यो नायिकाः। विवाहात्पूर्वमेव रूपकेषु कामसमुत्पत्तिर्नाम यदभोष्टतमो विषयः कवीनां प्रेक्षकाणां च, स भरतेन सम्यक् पर्यालोचितः, किन्तु धनञ्जयेनैतद्दत्तावधानोऽयं प्रसङ्गः ।

भरतस्तावत् कविमार्गं प्रदर्शयितुकामो नायिकायाः पुरतो नायकादर्शं प्रस्तुतवान्—

रूपगुणादिसमेतं कलाविविज्ञान-यौवनोपेतम् ।
दृष्ट्वा पुरुषविशेषं नारी मदनातुरा भवति ॥

मदनातुराया वेश्यायाः कुलजायाश्च शरीरविकाराः कीदृशो भवन्तीति भरतेन सम्यग्वर्णितम् । तद्यथा नायकसमक्षं नायिकाविकाराः —

वेश्याविकाराः

ललिता चलपक्ष्मा च तथा च मुकुलेक्षणा ।
स्रस्तोत्तरपुटा चैव काम्या दृष्टिर्भवेदिह ॥

---

१ बाह्या चाभ्यन्तरा चैव स्याद् बाह्याभ्यन्तरापरा ।
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गना स्मृता ।
कृतशौचा तु या नारी सा बाह्याभ्यन्तरा स्मृता ॥ ना० शा० २२ १४

२ सा च वेश्या पुनर्भवा । ना० शा० २१ १५३ अधिकृत्य भारती

ईषत्-संरक्तगण्डस्तु सस्वेदलवचित्रितः ।
प्रस्पन्दमानरोमाञ्चो मुखरागो भवेदिह ॥
काम्येनाङ्गविकारेण सकटाक्षनिरीक्षितैः ।
तथाभरण-संस्पर्शैः कर्ण-कण्डूयनैरपि ॥
अङ्गुष्ठाग्रविलिखनैः स्तननाभिप्रदर्शनैः ।
नखनिस्तोदनाच्चैव केशसंयमनादपि ॥

ना० शा० २२.१६१-१६५

कुलजा-विकाराः

प्रहसन्ती च नेत्राभ्यां प्रततं च निरीक्षते ।
स्मयते सा निगूढं च वाचं चाधोमुखी वदेत् ॥
स्मितोत्तरा मन्दवाक्या स्वेदाकारनिगूहनी ।
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना ॥

ना० शा० २२.१६७-१६८

नायकसङ्गमलभमाना मदनातुरा नायिका दशास्थानगतं कामं प्रदर्शयति—अभिलाषः, चिन्तनम्, अनुस्मृतिः, गुणकीर्तनम्, उद्वेगः, विलापः, उन्मादः, व्याधिः जडता, मरणञ्च ।[1]

पूर्वोक्तमदनातुरा नायिका नायकं प्रति आत्मावस्थाप्रदर्शिनीं दूतीं प्रेषयति ।[2]

राज्ञां प्रच्छन्नकामिता

प्रच्छन्नकामितमेव शृङ्गारस्याभीप्सितमं प्रापणीयं मन्यते । तथा हि—

प्रच्छन्नकामितं राज्ञा कार्यं परिजनं प्रति ।
यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।
दुर्लभत्वं च यन्नार्याः सा कामस्य परा रतिः ॥

ना० शा० २२.२०७

अभिनवगुप्तानुसारेण राज्ञामिव प्रच्छन्नकामिता बहुव्यापिनी बभूव । तत्र ज्येष्ठा, पुनर्भूः, अवरुद्धा गणिका, कन्यका, प्रेष्या च राजकीयप्रणयपाशेऽवरुद्धा

---

१. ना० शा० २२.१७३-१८१

२. दूताः अपि विमृश्यन्त एतदर्थमिति न सर्वविन्निर्दिष्टम् । बहुषु भाणेषु नायिका-दूता विटाः सन्ति ।

आसन्।[1] अभिनवगुप्त स्पष्टयति—धर्मवृत्तिना राजा परिवार्यो द्वेष्या दुर्भगा अपि सेव्या इति। एतासु नायिकासु धनञ्जय केवलं कन्यकामूढा च वर्णयति।[2]

## अष्टविधा नायिकाः

नायकप्रणयाबद्धाना नायिकानामष्ट भेदा अवस्थापेक्षयाधोनिर्भिन्ना —

**स्वाधीनपतिका**

भरतानुसारत

> सुरतातिरसैर्बद्धो यस्या पार्श्वे तु नायकः।
> सान्द्रामोदगुणप्राप्ता भवेत् स्वाधीन-भर्तृका।। २२.२१५

धनञ्जयस्तु संक्षेपेणानुहरति भरतमस्मिन् प्रकरणे।

**वासकसज्जा**

वासक तु शयनगृहमस्ति। नायकस्य प्रणयमिलन सम्भावनामपेक्ष्य वासकस्य सज्जा ( मण्डनम् ) नायिका विदधाति। एवं व्यापृता नायिका वासकसज्जेत्य-भिधीयते। भरतस्ता परिभाषते—

> उचिते वासके या तु रतिसम्भोगलालसा।
> मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका।।
> ना० शा० २२.२१३

धनञ्जयस्तु भरत संक्षेपेणानुहरत्येव।

**विरहोत्कण्ठिता**

भरतानुसारतो वासकसज्जाया नायको यदि यथासमय नायाति तर्हि सा विरहोत्कण्ठिता भवति।

> वासके नागतः प्रियः।

धनञ्जयो भरतमेवानुहरति।

**खण्डिता**

भरतधनञ्जयौ ता नायिका खण्डिता वदतो यस्या रागणोऽन्यनायिका-सक्त्या सा न समन्छते।

---

१ इदं प्रकरण तात्कालिकी राजकार्यप्रवृत्ति प्रकटयति। आदर्शविमुखा एते राजानः समाजस्य पातनाय बभूवु यतो हि नाम समाजो राजानमेवानुवर्तते। यथा भरत आह—"यान् यान् प्रकुरुते राजा तास्तान् लोकोऽनुवर्तते। अत्र नेद विस्मरणीय यद् योरोप-देशेषु राज्ञा नागरिकाणा च प्रणय-परिधिरतिबृहद् बभूवेति तत्रत्यनाटकानामितिवृत्तैर्ज्ञायते।

२. अन्यस्त्री कन्यकोढा च। दश० २.२०

कलहान्तरिता

यस्या कलहकारिणी नायिका कलहानन्तरं तस्माद्विदूरा भवति आमर्षं च कुरुते। नायकस्तु ईर्ष्यावशीभूतस्ता न मिलति। ईदृशो नायिका कलहान्तरिता भवति। धनञ्जयस्तामनुशयभावापन्नामपि लक्षयते।

विप्रलब्धा

दूतद्वारेण समागमनार्थं प्रतिज्ञाय यदि नायको नागच्छेत् तर्हि नायिका विप्रलब्धा भवतीति भरतधनञ्जययोर्मतम्।

प्रोषितप्रिया

यस्या नायिकाया प्रणयी प्रवसति, सा यथानाम प्रोषितप्रिया भवति। भरतस्तस्या रूपं वर्णयति।

प्ररूढालककेशान्ता भवेत् प्रोषितभर्तृका। २२·२११

अभिसारिका

धनञ्जयस्याभिसारिका तु सक्षेपेण वर्णिता—

कामार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका। २.२७

भरतस्तावदभिसारिकाया विस्तृत लक्षण ब्रूते—

हित्वा लज्जां तु या श्लिष्टा मदेन मदनेन च।
अभिसारयते कान्तं सा भवेदभिसारिका॥

अभिनवगुप्तो व्याख्याति—अभिसर. सहाय'। तस्य व्यापारेण प्रियतममाक्रामति।

अभिसारिका तु वेश्या वा कुलजा वा प्रेष्या वा भवेत्। अभिसरणकाले तासा भावविशेषा भरतेन वर्णिताः —

वेश्या

समदा मृदुचेष्टा च तथा परिजनावृता।
नानाभरणचित्राङ्गी गच्छेद् वेश्याङ्गना शनैः॥ २२.२२७

कुलजा

संलीना स्वेषु गात्रेषु त्रस्ता विनमितानना।
अवगुण्ठनसंवीता गच्छेत्तु कुलजाङ्गना॥२२.२२८

प्रेष्या

मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना।
आविद्धगतिसंचारा गच्छेत् प्रेष्या समुद्धतम्॥ २२.२२९

सुप्त नायकं केन विधिना जागरयेदिति भरतेन प्रोक्तम्—

अलङ्कारेण कुलजा वेश्या गन्धैस्तु शीतलैः।
प्रेष्या तु वस्त्रव्यजनैः कुर्वीत प्रतिबोधनम्॥ २२.२३१

भरतो राजकीयनायिकानां परिगणनं समन्ततः प्रस्तौति। धनञ्जयस्तु तासामवहेलनामेव प्रदर्शयते। नाटकनाटिकादिषु महादेवीप्रभृति-नायिकानां स्थानं महत्त्वपूर्णं वर्तते, किन्तु धनञ्जयस्ता न परिभाषत इति त्रुटिरेव। एतत्प्रकरणं तु भरतानुसारेणावधेयम्।

नानाप्रकृतिलक्षणा नायिका धीरा, ललिता, उदात्ता, निभृता च राजकीया भवन्ति। एते भेदाश्चतुर्विधाना दिव्या नृपपत्नी कुलस्त्री-गणिकानां च भवन्ति। कुलजाङ्गना उदात्ता, निभृताश्च भवन्ति। गणिका शिल्पकारिका च ललितेऽप्युदात्ते च स्त।[1]

अन्तःपुरचारिणीस्त्रियः

भरतोऽन्तःपुरस्थनारीणां परिचयं सम्यक् प्रस्तौति। तद्यथा,

महादेवी तथा देव्यः स्वामिन्यः स्थापिता अपि।
भोगिन्यः शिल्पकारिण्यो नाटकीयाः सनर्तकाः॥
अनुचारिकाश्च विज्ञेयास्तथा च परिचारिकाः।
तथा संचारिकाश्चैव तथा प्रेषणकारिकाः॥
महत्तर्य प्रतीहार्यः कुमार्यः स्थविरा अपि।
आयुक्तिकाश्च नृपतेरयमन्तःपुरे जनः॥ २४ ३०-३२

एतासु महादेवी प्रभृति शिल्पकारिणीपर्यन्तं नायिका भवन्ति। एतासां वर्णनमधोविधं नाट्यशास्त्रे विद्यते—

अत्र मूर्धाभिषिक्ता या कुलशील-समन्विता।
गुणैर्युक्ता वयस्था च मध्यस्था क्रोधना तथा॥
मुक्तेर्ष्या नृपशीलज्ञा सुखदुःखसहा समा।
शान्तिस्वस्त्ययनैर्भर्तुः सततं मंगलैषिणी॥
शान्ता पतिव्रता धीरा चान्तःपुरहिते रता।
एभिर्गुणैस्तु संयुक्ता महादेवीत्युदाहृता॥

अभिनवगुप्तानुसारेण सर्वेषां मूर्धनि प्रधानस्थानेऽभिषिक्ता भवति महादेवी। सा मध्यस्थेति वयसि मध्यमे तिष्ठति। महादेवी तु शृङ्गारोचिता नातीव प्रतिभाति। सा महादेवी आभिमुख्य नायकस्य प्रयाति।

देवी

एभिरेव गुणैर्युक्तास्तत्सत्कारविवर्जिता.।
गर्विताश्चातिसौभाग्याः पतिसम्भोगतत्परा.॥

१. ना० शा० २४ २३-२६

शुचिर्नित्योज्ज्वलाकाराः प्रतिपक्षेऽभ्यसूयिकाः ।
वयोरूपगुणाढ्या यास्ता देव्य इति भाषिताः ॥ २४.३६, ३७

तत्र बहवो देव्यो नायिका बभूवुः ।

स्वामिनी

सेनापतेरमात्यानां भृत्यानामथवा पुनः ।
भवेयुस्तनया यास्तु प्रतिसम्मानवर्जिताः ॥
शीलरूपगुणैर्यास्तु सम्पन्ना नृपतेर्हिताः ।
स्वगुणैर्लब्धसम्मानाः स्वामिन्य इति ताः स्मृताः ॥

ना० शा० २४ ३८, ३९

रूप-यौवनशालिन्य. कर्कशा विभ्रमान्विताः ।

स्थापिता

रतिसम्भोग-कुशलाः प्रतिपक्षाभ्यसूयिकाः ॥
दक्षा भर्तुश्च चित्तज्ञा गन्धमाल्योज्ज्वलाः सदा ।
नृपतेश्छन्दवर्तिन्यो न ह्रीर्ष्यामानगर्विताः ॥
उत्थिताश्च प्रमत्ताश्च त्यक्तालस्या न निष्ठुराः ।
मान्यामान्यविशेषज्ञाः स्थापिता इति ताः स्मृताः ॥

ना० शा० २४.४०, ४२

भोगिनी

कुलशीललब्धपूजा मृदवो नाति चोद्भटाः ।
मध्यस्था निभृताः क्षान्ता भोगिन्य इति ताः स्मृता ॥

ना० शा० २४.४३

शिल्पकारिका

नानाकला-विशेषज्ञा नानाशिल्पविचक्षणाः ।
गन्धपुष्पविभागज्ञा लेख्यालेख्य-विकल्पिकाः ॥
शयनासनभागज्ञाश्चतुरा मधुरास्तथा ।
दक्षाः सौम्या स्फुटा श्लिष्टा निभृता शिल्पकारिका ॥

राज्ञोऽन्त-पुरेऽन्या बहवो नार्यो नियुक्ता आसन् । तथा हि —

नाटकीया नर्तकी च नाट्यनृत्याभिनयेन मनोरञ्जनार्थमासन् । अनुचारिका सततं राजानमनुचरतिस्म । शय्यापाली, छत्रधारी, व्यजनधारिणी, संवाहिका, गन्धयोक्त्री, प्रसाधिका, आभरणयोक्त्री, माल्यसंयोजिका च परिचारिका बभूवुः । राजकीय-कक्षासु, उपवनेषु, मन्दिर-प्रासादेषु सञ्चारिका वा यामकिनी वा रात्रौ

रक्षार्थमभवत्। परिचारिका प्रेषणकर्मणि नियुक्तासीत्। महत्तराया विशिष्टं स्थानमासीद् भरतानुसारेण—

सर्वान्त पुर-रक्षासु स्तुतिस्वस्त्ययनेन च।
या वृद्धिमभिनन्दन्ति ता विज्ञेया महत्तरा ॥ २४.५९

प्रतीहारी नाटकेषु सुप्रसिद्धैव वर्तते। तस्या कार्याणि भरतेन वर्णितानि—

सन्धि-विग्रह-सम्बद्ध-नानाचार-समुत्थितम्।
निवेदयन्ति या कार्यं प्रतिहार्यस्तु ता स्मृता ॥ २४.६०

अन्तःपुरे वृद्धा पूर्वराजाना नीतिपथस्य व्याख्यानाय नियुक्ता आसन्। तद्यथा—

पूर्वराजनयज्ञा या पूर्वराजाभिपूजिता।
पूर्वराजानुचरितास्ता वृद्धा इति संज्ञिता ॥ २४.६२

आयुक्तिकाना स्थानमन्त पुरधारिणीषु स्त्रीषु सविशेष वर्तते। तद्यथा—

भाण्डागारेष्वधिकृताश्चायुधाधिकृतास्तथा।
फलमूलौषधीनां च तथा चैवान्ववेक्षिका॥
गन्धाभरणवस्त्राणां माल्याना चैव चिन्तिका।
बह्वाश्रये तथा युक्ता ज्ञेया ह्यायुक्तिकास्तु ता ॥
ना० शा० २४.६२, ६४

## नायिकानां स्वभावजा भेदाः

उत्तमा, मध्यमा, अधमा च नारीणा त्रिविधा प्रकृतिर्भवति। भरतस्तु नायिकादीना भेदमुत्तमादिगुणे प्रस्तौति। तद्यथा,

सर्वासामेव नारीणां त्रिविधा प्रकृति स्मृता।
उत्तमा, मध्यमा, नीचा वेश्यानां तु स्वभावजा॥

उत्तमा

या विप्रियेऽपि तिष्ठन्तं प्रिय वदति नाप्रियम्।
न दोषरोषा च तथा कलासु च विचक्षणा॥
शीलशोभाकुलाधिक्यै पुरुषैर्या च काम्यते।
कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी॥
गृह्णाति कारणाद् रोषं विगतेर्ष्या ब्रवीति च।
कार्यकाल-विशेषज्ञा सुरूपा सा स्मृतोत्तमा॥ २३.३५.३८

न खलु कवयो नायिकानामेतान् गुणान् वर्णयितुं सदा समुत्सुका दृश्यन्ते इति महती त्रुटिस्तेषां निबन्धानामस्त्येव। नायिकानां कलासु वैचक्षण्यं, शीलं, कार्यकालविशेषज्ञत्वं च विरल-विरलमेव रूपकेषु परिस्फुरन्ति। प्रायशो नायिकानां रूपमेव नायकमाकर्षति। नैषा साधुरीतिर्लोकादर्शसमुपस्थापनापेक्षया।

मध्यमा

पुरुषैः काम्यते या तु तथा कामयते च तान्।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी॥
ईर्ष्यातुरा स्वनिभृता क्षीणक्रोधातिगर्विता।
क्षणप्रसादा या चैव सा नारी मध्यमा स्मृता॥ २३.३९,४०

अधमा

अस्थानकोपना या तु दुष्टशीलातिमानिनी।
चपला परुषा चैव दीर्घरोषाधमा स्मृता॥ २३.४१

## यौवन-भेदः

भरतो नारीणां विकासानुक्रमेण चतुरो यौवन-भेदान् वर्णयति। तत्र स प्रथमं नारीणां लावण्य-रूपादिकं वर्णयति, पश्चाच्च शृङ्गारं प्रति तासामुत्साहं चित्रयति। तद्यथा,

प्रथमयौवनम्

नेपथ्यरूपचेष्टागुणैन शृङ्गारमासाद्य।
पीनोरुगण्डजघनाधरस्तनं कर्कशं रतिमनोज्ञम्॥
शृङ्गार-समुत्साहं प्रथमं तद्यौवनं ज्ञेयम्॥ २३.४३
नात्यर्थं क्लेशसहा न कुप्यति न हृष्यति स्त्रीष्व।
सौम्यगुणेष्वसक्ता नारी नवयौवना ज्ञेया॥ २३.४८

दशरूपके धनञ्जयस्य मुग्धा नायिका भरतस्य प्रथमयौवनवतीव प्रतिभाति।
मुग्धा धनञ्जयानुसारेण—

नववयःकामा रतौ वामा मृदुः क्रुधि॥ २.१६

प्रथमयौवनं मुग्धाया भवति।

द्वितीय-यौवनम्

भरतानुसारेण—

गात्रं पूर्णावयवं पीनौ च पयोधरौ नतं मध्यम्।
कामस्य सारभूतं यौवनमेतद् द्वितीयं तु॥

द्वितीय-यौवन-भेदे कीदृश- स्वभावो भवति—

किंचित्करोति मानं किंचित् क्रोधं च मत्सरं चैव ।
क्रोधे च भवति तूष्णीं यौवन-भेदे द्वितीये तु ॥

ना० शा० २३ ४४, ४९

भरतस्य द्वितीय यौवन तु धनञ्जयस्य मध्यमाया स्यात् । तद्यथा,

मध्योद्यद्यौवनानङ्गा मोहान्तसुरत-क्षमा ॥ २.१६
धीरा सोत्प्रास-वक्रोक्त्या मध्या साधु कृतागसम् ।
खेदयेद्दयितं कोपादधीरा परुषाक्षरम् ॥ २.१७

तृतीयं यौवनम्

भरतस्य तृतीय यौवनं धनञ्जयस्य प्रगल्भाया अवस्था स्यात् । भरतानुसारेण तृतीय यौवन तु—

सर्वश्रीसंयुक्तं रतिकरणोत्पादनं रतिगुणाढ्यम् ।
कामाप्यायितशोभं यौवनमेतत् तृतीयं तु ॥
रतिसम्भोगे दक्षा प्रतिपक्षासूयिनी रतिगुणाढ्या ।
अनिभृतगर्वितचेष्टा नारी ज्ञेया तृतीये तु ॥ २३.४५.५०

धनञ्जयस्येदृशी तु प्रगल्भा भवति ।[1]

यौवनान्ध - स्मरोन्मत्ता प्रगल्भा दयिताङ्गके ।
विलीयमानेवानन्दाद् रतारम्भेऽप्यचेतना ॥ २.१८

चतुर्थ-यौवनम्

भरतस्य चतुर्थ-यौवन शृङ्गारस्यान्तिमावस्था भवति । तद्यथा—

नवयौवने व्यतीते तथा द्वितीये तृतीयके चापि ।
शृङ्गार-शत्रुभूतं यौवनमेतच्चतुर्थं तु ॥
अम्लानगण्डजघनाधरस्तन किञ्चिद्गतलावण्यम् ।
कामं प्रति नोच्छ्वासं यौवनमेतच्चतुर्थं तु ॥
चित्तग्रहण-समर्था कामाभिज्ञा त्वमत्सरोपेता ।
अविरहितमिच्छति सदा पुरुषं नारी चतुर्थे तु ॥

ना० शा० २३ ४६, ४७, ५१

इदं चतुर्थं यौवनं धनञ्जयेन न संगृहीतम् ।

---

१ प्रगल्भाया- कोपचेष्टा वर्णयन् धनञ्जय आह—

सावहित्थादरोदास्ते रतौ धीरेतरा क्रुधा ।
सन्तर्ज्य ताडयेन्मध्या मध्या धीरेव तं वदेत् ॥ २.१९

धनञ्जयस्तु नायिकाविशेषान् सूक्ष्मतरं पर्यालोचयति। नायिकानां कृतागसं नायकं प्रति तर्जनं, ताडन, परुषाक्षरप्रयोजनश्च विरल विरलमेव रूपकेषु प्रवर्तन्ते, किन्तु परवर्तिनाट्याचार्या सोत्साह तान्यधिकृत्य नायिका-प्रभेदान् प्रस्तुवन्ति। धनञ्जयस्तु इदं क्रोधोद्भव वर्तनं नायिकाना सम्यग्वर्णयति। नैतत्सर्वं भारतीये नाट्यशास्त्रे प्रकाशितम्।

## अन्यस्त्री

धनञ्जयानुसारेण तु कन्यका ऊढा चान्यस्त्रीति वक्तव्यम्। कन्यकास्तु गान्धर्व-विवाहरीत्या स्वीक्रियन्ते। ऊढाः पुनः भाणादिषु रूपकेषु नायिका भवन्ति। अभिनवगुप्तानुसारेणान्तःपुरस्य परिचारिका राज्ञः प्रच्छन्नकामितायाः प्रणयानुरागिण्यो नायिका अन्यस्त्रिय एव।

## साधारणस्त्री

साधारणस्त्रियो गणिका. सन्ति। ता द्विविधा भवन्ति—एकान्तावरुद्धा., सर्वभोग्याश्च। एकान्तावरुद्धा तु राज्ञामेव प्रणयिनी भवितुमर्हतीति प्रच्छन्न-कामिता-प्रकरणे निर्दिष्टम्। सर्वभोग्या-विषये धनञ्जयो विशदयति—

छन्नकाम - सुखार्थाज्ञस्वतन्त्राहंयुपण्डकान्।

रक्तेव रञ्जयेदाढ्यान्निःस्वान् मात्रा विवासयेत्॥ दश० २२.२

नायिकाया नायकस्य च परस्पर मिलन कथं भवेदिति प्रकरणे नायिकानां सहाया धनञ्जयेन परिगणिता —दूती, दासी, सखी, कारु., धात्रेयी, प्रति-वेशिका, लिङ्गिनी, शिल्पिनी च।

## योषिदलङ्काराः

नायकस्य यथा सात्त्विकगुणा भवन्ति, तथैव नायिकाया विंशतिः अलङ्काराः सत्त्वजा सात्त्विका वा सन्ति। तेषु भावो हावश्च हेला च त्रयः शारीरजा भवन्ति, शोभा, कान्ति, दीप्तिः, माधुर्यं प्रगल्भता, औदार्यम्, धैर्यञ्च सप्त भावा अयत्नजा भवन्ति। लीला, विलासो, विच्छित्तिर्विभ्रम, किलकिञ्चितम्, मोट्टा-यितम्, कुट्टमितम्, बिब्बोक, ललितम्, विहृतञ्च दश भावाः स्वभावजाः सन्ति। एतेषामभिनय. सात्त्विको भवति। ते हि यौवने उद्रिक्ता, बाल्येऽनुद्भिन्ना वार्धके तिरोभूता.।[1]

---

१. यावन्त एते तरुणीजनस्य भावा समं कुट्टमितादयोऽपि।
रात्रावदृश्यानिव तान् घटादीन् कामप्रदीपः प्रकटीकरोति।
ना० शा० २२.४ भारती।

एतेषां लक्षण विषये भरतस्यानुसरणमेव धनञ्जयस्य साधारणपद्धतिः।

अभिनवगुप्तानुसारेणैषामलङ्काराणां तावदेव महत्त्वं स्त्रीणां कृते भवति, यावद् ब्राह्मणानां कृत उपनयनस्य भवति।[1] अन्यच्च भरतानुसारेण—

अलङ्कारास्तु नाट्यज्ञैर्ज्ञेया भावरसाश्रयाः। ना० शा० २२.४

अर्थालङ्काराणां सन्निवेशेन भावानां रसानाञ्च योऽतिशयः समुत्पद्यते, तेन काव्यं रोचिष्णु जायते। एतेषामभिनयः सात्त्विक एव रसनिष्पत्तये सविशेषः।[2]

## नायिकाविधा

बहुविधा नायिका परवर्तिशास्त्राचार्यैः सन्दृष्टाः। तद्यथा सिंहभूपालः ३८४ भेदान् तासां गणयति—

स्वीया परकीया वेश्या त्रिविधा च वराङ्गना।
वैशिकेव षोडशधा ताश्चावस्थाभिरष्टाभिः॥
एकैकमष्टधा तासामुत्तमादिप्रभेदतः॥

रसार्णव० १५८, १५९

राज्ञी नृपस्यार्धाङ्गिनी धर्मपत्नी भवति। सा मन्त्रिपरिषदः सदस्या स्यात्।

राजपत्नी राज्ञी प्रायः प्रासादेषु प्रमदवनेषु, देवार्चनस्थलीषु वा विचरति। वैषम्यमापन्ना सा वनभूमिषु प्रचरन्ती दृश्येत।

राज्ञः परमैश्वर्यं राज्यं रक्षितुं च राज्ञी मन्त्रिभिः सह राज्याभ्युदयाय मन्त्रणां विधायात्मानं कञ्चित्कालं तपस्विनीकरोति स्वप्नवासवदत्ते प्रथमाङ्के। सर्वेषामात्मीयजनानां भर्त्सनां निन्दां वा सहमाना सा क्वचिद् राजरक्षणाय वैधव्यम्भजते।[3]

स्वकन्याया विवाहविषये तस्या मतं सङ्ग्रहणीयमेवेति प्रतिज्ञायौगन्धरायणस्य द्वितीयेऽङ्के विशदीकृतम्।

---

१ तत्परं ब्राह्मणस्योपनयनमिव भविष्यत्समस्तपुरुषार्थसम्पत्पीठबन्धत्वेन योषितां परमो ह्युत्सवो लोकोत्तरोऽलङ्कारः सातिशयमानन्द-स्थानं परं पवित्रमित्युपश्रूयते। ना० शा० २२.११ अधिकृत्य भारती।

२. अभिनवभारती खण्डे ३ पृष्ठ १५१

३. रामस्य मरणं मा भवेदिति कैकेयी तस्य वनवासं याचते, फलतो दशरथमरणाद् विधवा भवतीति प्रतिमानाटकस्य षष्ठाङ्के कैकेयी—जात, एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः न खलु राज्यलोभेन।

मालविकाग्निमित्रे धारिणी स्वपतेश्छिद्रमन्विष्यति। यथा—तथाहि राजकार्येषु ईदृशी उपायनिपुणता आर्यपुत्रस्य ततः शोभनं भवेत्। अहो अविनय आर्यपुत्रस्य।[1] सपत्नीं पत्यै नियोजयन्ति कास्विद् राज्यः।[2]

राज्ञः कल्याणाय राज्ञी व्रतोत्सवादीन्यनुतिष्ठति। धार्मिकव्रतोत्सवादिषु मनोविनोदनेषु च राज्ञी राज्ञा सह विराजतेतराम्। तद्यथा विक्रमोर्वशीये तृतीयेऽङ्के - देव, देवी विज्ञापयति—मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः। तत्र सन्निहितेन देवेन प्रतिपालयितुमिच्छामि, यावद्रोहिणीसंयोग इति।

राज्ञी राज्ञः प्रसादनाय तस्मै सपत्नीमपि प्रस्तावयति। मालविकाग्निमित्रे विक्रमोर्वशीये च ज्येष्ठा देव्यो राज्ञः कल्याणाय किं किं न साधयन्ति। विक्रमोर्वशीये देवी कथयति—अद्य प्रभृति या स्त्रियमार्यपुत्रः कामयते, या चार्यपुत्रस्य समागमप्रणयिनी तया सह प्रीतिबन्धेन मया वर्तितव्यम्। अन्यत्र प्रतिनायिका भूत्वा सा सापत्न्यं प्रतिबाधते।

वेणीसंहारे राज्ञी नायकस्य भाव्यनर्थसूचकं स्वप्नं दृष्ट्वा सूर्योपस्थानं विदधाति।

अनुपमैव राज्ञी द्रौपदी वेणीसंहारे। सा युधिष्ठिरं निर्दिशति—त्वमपि क्षात्रधर्ममनुबध्नन्नेव नाथस्य जीवितहरस्याभिमुखो भव।

विरलविरलैरेवोच्चकोटिका नायिका प्रकल्पिता संस्कृतनाटकेषु। भासस्यैकैव तादृशी नायिका वासवदत्ता नाटकस्य प्रथमाङ्क एव सर्वसहा, सर्वत्यागमयी विभाति। सा पञ्चमाङ्के स्मरति—महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः। तस्या उद्धुरे कन्धरे राज्यैश्वर्यस्य पुनर्निर्माणभरो मूलतो न्यस्तः सम्यगुह्यते। नाकरणीयं किञ्चिद्विद्यते तस्याः।

## प्रच्छन्नकाम्या नायिका

कालिदासीय—राज्यो नायकानुरागोत्सुका प्रेमपात्रियोद्वहनमेव जीवनस्य परं साफल्यं मन्यन्ते। मालविकाग्निमित्रे विक्रमोर्वशीये च नायिकानां सापत्न्यभयमुपरि वर्तते। ता निगूढप्रणयिनायकमनुयुयुजिरे।

प्रणयार्ता नायिका नायकाय प्रेमपत्रं लिखति। यथाभिज्ञाने शकुन्तला विक्रमोर्वशीये च उर्वशी। नायकस्य चित्रं मालतीमाधवे नायिका विरचयति।

---

१. मालविकाग्निमित्रे प्रथमेऽङ्के।

२. मालविकाग्निमित्रे ४.११

नायिका स्वमदनपरवशता सखीं चेटीं वा प्रति वर्णयति सूचयति वा सम्भोग्यजनसान्निध्यावाप्तये।

नाटकेषु नायकाना प्रच्छन्नकामिता सम्मता। तत्र प्रच्छन्नकामपथे बाधानां दुर्निवारता नायकाना नायिकानाञ्च मरणमेव शरणं विदधाति। यद्यपि वियोग-वैधुर्य-सन्तप्ता क्वापि नायिका मृतेति न दृश्यते, तथापि उत्तरीयवाससा, लतापाशेन वात्मानमुद्बध्य व्यापादयिष्यामीति दृश्यत एव।[१] परिजनाना समक्षमपि नायकाना परिष्वङ्गो दृश्यते नाटकेषु।

नायिकामिनवकान्तं नायकं किञ्चिदधिककालं दृष्टिपथे धारयितुमिव कृतक-बाधामुपकल्पयति। विक्रमोर्वशीये उर्वशी, अभिज्ञानशाकुन्तले शकुन्तला च तत्र-तत्र प्रथमेऽङ्के एव कुर्वन्ति।[२]

## विप्रलब्धा नायिका

विप्रलब्धा नायिका भृशं रोषवती भवति। अभिज्ञानशाकुन्तले आश्रम-कन्यका शकुन्तला शापवशाद् विप्रलब्धा दुष्यन्तं नायकं सरोषं निर्भर्त्स्यति[३]—

अनार्य, आत्मनो हृदयानुमानेन प्रेक्षसे। क इदानीमन्यो धर्मकञ्चुक-प्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते।

## गणिका

सर्वसाधारणरमणी सा गणिका नगरश्रीरेव स्वकीये बहुभिः प्रकोष्ठैर्मण्डिते महागेहे, प्रमदवनोद्यानेषु अभिसारस्थलीषु च विहरति। तस्या गुणगणशालिता रमणीयोत्कर्षं विदधाति। मृच्छकटिके गणिका वसन्तसेना पटीरं चारुदत्तं शिरसा प्रणमति। सा प्रतिदिनं पूजा निर्वर्तयति। न केवलं भूषणैरपि तु दयादाक्षिण्या-दिभिरात्मगुणैः सा नूनमेव रमणीरत्नम्। प्रणययाचकमनभीप्स्टं जनं सा पादेन ताडयति।[४] न धनेन न बलेन न च प्रधर्षणक्रमेण सा स्वायत्तत्तां जहाति। परस्वपमेव सत्याग्रहस्य तस्याः सद्वृत्तिषु द्रष्टुं शक्यते। मानसिकसौरभ

१. अविमारके कुरङ्गी, रत्नावल्यां सागरिका, नागानन्दे मलयवती च मरणोद्यता पाशबद्धा आत्मानं कुर्वन्ति।

२. 'लताविटपे एषैकावली वैजयन्ती मे लग्ना' इति उर्वशीवचनम्, अभिनवकुशसूचि-परिक्षतौ मे चरणौ, कुरवकशाखापरिलग्नञ्च मे वल्कलम्' इति शकुन्तलावचनं प्रमाणम्।

३. शकुन्तला—कथमनेन कितवेन विप्रलब्धास्मि।

४. मृच्छ० अष्टमेऽङ्के।

तस्या जीवनपथस्य परमोद्दिष्टं भवेत्।[1] स वेशभावस्य निन्दनीया स्थितिं सम्यग्बोधति।[2]

पुरा गणिकापि राज्ञः प्रेयसी भवितुमार्हत्।[3] अन्यत्र सा चेटोपदमलङ्करोति।[4]

## ऋषिका

अरुन्धती तूत्तररामचरिते ऋषिका भाविनी घटनां संकेतयति। तद्यथा—कल्याणोदर्कं भविष्यतीति।

तस्या भागीरथ्याः सम्पर्केण ज्ञातमासीद्रहस्यकर्णामृतं यत् सीतायाः पुत्रकद्वयं वाल्मीकेराश्रमे वर्धते।

ऋषिकाकल्पैव गौतमी शकुन्तलासाहाय्यमाचरत्यभिज्ञानशाकुन्तले।

## प्रच्छन्न-प्रव्राजिका

कतिपयरूपकेषु प्रच्छन्न-प्रव्राजिका नायकयोः प्रणय-पथं साधयितुं प्रयतमाना दृश्यते। तत्र मालविकाग्निमित्रे कौशिकी, मालतीमाधवे कामन्दकी च नायकयोः सहाये स्तः।[5] बहुविधैः कूटोपायापायैस्तेऽभीष्टं प्रतिपादयतः। तयोर्भूमिका पीठमर्दिकोचिता प्रवर्तते! कामन्दकी प्रतिजानीते—'प्रतापी राजनन्दनी' इति।

सात्मानं प्रकाशयति—

> बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्
> पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति।
> जनं विद्वानेकः सकलमतिसन्धाय कपटैः
> तटस्थः स्वानर्थान् घटयति च मौनं च भजते॥

पीठमर्दिकापि कामन्दकी प्रणयचारे चाणक्यवद् दीर्घदर्शिव्यापारवती वर्तते। तद्यथा—

---

१. शकारेण पुनः पुनर्मार्यमाणापि मरणासन्ना सा कथयति—नम आर्यचारुदत्ताय। मृच्छकटिकेऽष्टमेऽङ्के।
२. तत्सदृशं वेशभावस्य। मृच्छ० अष्टमेऽङ्के।
३. मृच्छकटिके मदनिका वसन्तसेनां पृच्छति—किं राजा राजवल्लभो वा सेव्यते।
४. मृच्छकटिके मदनिका गणिकासीत्। सा वसन्तसेनायाश्चेटी बभूव। तृतीयेऽङ्के।
५. कामन्दकी तु सौगतजरत्प्रव्राजिका। मालतीमा० प्रस्तावनात

वरेऽन्यस्मिन्दोषः पितरि विचिकित्सा च जनिता ।
पुरावृत्तोद्गारैरपि च कथिता कार्यपदवी ।
स्तुतं माहाभाग्यं यदभिजनतो यच्च गुणतः
प्रसङ्गाद् वत्सस्येत्यथ खलु विधेय. परिचयः ॥

कामन्दकी पीठमर्दिका सती कथयति मकरन्दम्—

तत्सर्वथा सगमनाय यत्न. प्राणव्ययेनापि मया विधेय ।

सैव पीठमर्दिका समादिशति—पर्यवष्टभ्यतामेतत्करालायतनम् ।

नाघोरघण्टादन्यस्मात् कर्मैतद्दारुणादभूत् । ५ ३३

वस्तुत सा प्रतिहतप्रज्ञाचक्षुर्विद्यते ।

## चेटी (परिचारिका)

चेटी तु परिचारिका दासी वा भवति । चिट् परप्रैष्ये ।[1] स्वप्नवासवदत्ते चेटी राजकन्यामाश्रमपदं नयति पथप्रदर्शनेन । सा राजकन्याविवाहविषयक-प्रवृत्तिं तापस्यै निवेदयति । चेटी केवलं दासी नासीदपितु राजकन्यायाः धन्यं कर्म दृष्ट्वा ता प्रशंसति—चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी । अहमप्यनुभूतसुखेति प्रेक्षे इति च तस्या अभिज्ञानसौष्ठव प्रकटयति । महतामपि विषये सा महत्त्वपूर्णं चिन्तयति—किन्तु खल्वपरा स्त्री तस्य हस्तं गमिष्यतीति चेटी कथयति । अत्रैव पद्मावती मनोऽभिलाष प्रकटयति—मम हृदयेनैव सह मन्त्रयति । सा द्वितीयाङ्के राजकुमार्या मुखमिव वदति—भर्तृदारिका तेन राज्ञा सह सम्बन्धं नेच्छति । अस्ति वत्सराज उदयनो नाम । तस्य गुणान् भर्तृदारिकाभिलषति । सा तृतीयेऽङ्के भर्तृदारिकाया कौतुकमालागुम्फन कारयति । तत्रैव वासवदत्तापि तया सह पद्मावत्या भाविभर्तुः सौन्दर्यविषयक किञ्चित् चर्चति । चतुर्थेऽङ्के सा पद्मावत्या पत्युरन्तिके गमन समर्थयति ।

चेटी शोभा समीक्षते सीताया वल्कलेन प्रतिमानाटकस्य प्रथमेऽङ्के ।[2] सा रामाभिषेकस्य सन्देश सीता सूचयति, तस्या आभरणानि च लभते ।

यच्छ्रुतं प्रजनैरवाच्यं तदपि चेटी परस्पर प्रतिबोधयति । चतुर्थेऽङ्के चेटी कैकेयीं भृश निन्दति—'राज्यलुब्धया भर्तृदारकस्य रामस्य राज्यविभ्रष्टं कुर्वत्याऽऽत्मनो वैधव्यमादिष्टम् । लोकोऽपि विनाशं गमितः । निर्घृणा खलु भर्त्री । पापकं कृतमिति । चेटीमुखेन साधारणलोकाना तद्विषयक मत व्यज्येतेति कवियोजना प्रतिभाति ।

---

१. चेटी—आर्य मैत्रेय, तिष्ठ त्वम् । अहमेवार्यां शुश्रूषयिष्यामि । मृच्छ॰

२ इमानि प्रहर्षितानि तनूरुहाणि मन्त्रयन्ते इति ।

चेटी दासीभूता नायिकायाः शयनासनादीनि कल्पयति ।

मृच्छकटिके वसन्तसेनाया गणिकायाश्चेटी मदनिका स्वयमेव गणिकासीत् ।[1] सा स्वामिन्या सह प्रणयात्मकरहोवार्तामपि करोति । कः कामयत इति सा नायिकायाः सखीव प्रतिभाति निम्नाङ्कितेन मिथः सम्भाषणेन—

वसन्तसेना—चेटि मदनिके, अपि सुसदृशीयं चित्राकृतिरार्यचारुदत्तस्य ।

मदनिका—सुसदृशी ।

वसन्तसेना—कथं त्वं जानासि ?

मदनिका—येनार्यायाः सुस्निग्धा दृष्टिरनुलग्ना ।

पञ्चमेऽङ्के चेटी वसन्तसेनया परिष्वज्यत इत्यनेन तस्याः सख्यं प्रकटति ।[2]

मृच्छकटिके चतुर्थेऽङ्के मदनिका चेटी स्वकीयस्य प्रणयवृत्तस्य नायिकारूपेण गृहीता । चेट्याः स्वतन्त्रं प्रणयवृत्तं कथेनाट्यकलायामनुत्तमा कृतिः ।

काचिदपरा चेटी वसन्तसेनायाः सकाशं विदूषकं नयति मार्गे तस्या गेहस्य विभूतीर्दर्शयति च ।

मृच्छकटिकस्य पञ्चमेऽङ्के चेटी गणिकाया वसन्तसेनायाः परामर्शदात्रीव चेष्टते । तद्यथा—

वसन्तसेना—(जनान्तिकम्) अत्र प्रविश्य किं मया भणितव्यम् ।

चेटी—द्यूतकर, अपि सुखस्ते प्रदोषः ।

सा स्वामिनी-पृष्टानां प्रश्नानामुत्तराणि अनाहूतापि विदूषकाय निवेदयति । तद्यथा—

विदूषकः (वसन्तसेनाम्)—अथ किं निमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके दुर्दिनान्धकार आगता भवती ।

चेटी—आर्य ऋजुको ब्राह्मणः ।

वसन्तसेना—ननु निपुण इति भण ।

चेटी—एषा खलु आर्या एवं प्रष्टुमागता—कियत्तस्या रत्नावल्या मूल्यमिति । सा खल्वार्ययात्मीयेति भणित्वा द्यूते हारिता । स च सभिको राजवार्ताहारी न ज्ञायते कुत्र गत इति । यावत्सोऽन्विष्यते तावदिदमेव गृहाण सुवर्णभाण्डम् ।

---

१. गणिकामदनिकार्थम् इत्यादि तृतीयेऽङ्के ।

२. अविमारकस्य तृतीयेऽङ्के कुरङ्गी नलिनिका परिष्वक्तुमाह्वयति । अत्रापि सख्यमेव चेट्याः प्रकटति । नागानन्दे प्रथमाङ्के चेटी सखीव व्यवहरति ।

अनेन प्रतिभोत्तरेण चेटी सोपपत्तिकं वैचक्षण्य-विदग्धभावश्यकतानुसारेणा-चरेदिति प्रतीयते ।

चेटी नायिकां प्रातःकाले प्रतिबोधयति । नापि सा स्वामिन्या आज्ञा सतत शिरसि धारयत्येव । बहुशः स्वविवेकेन तर्कयति । तद्यथा—

वसन्तसेना—एतां रत्नावलीं मम भगिन्या आर्याधूतायै समर्पय ।

चेटी—आर्ये, कोपिष्यति चारुदत्त आर्यायै तावत् ।

वसन्तसेना—गच्छ, न कोपिष्यति ।

सा स्वामिन्या दारकस्य योगक्षेमं वहति ।

चेटी स्वामिन्या सह भरणायोद्यता दृश्यते मृच्छकटिके । वेणीसंहारे द्वितीयेऽङ्के द्रौपद्याश्चेटी तस्याः प्रतिनिधिर्भूता दुर्योधनस्य राज्ञीं भानुमतीं प्रति कटूत्तरयति । षष्ठेऽङ्के सा द्रौपदीं समाश्वासयति ।

कतिपयचेट्यः शिल्पकलासु निपुणा बभूवुरिति विक्रमोर्वशीये विदूषक-वचनेन प्रमाणितम् । निपुणिका द्वितीयेऽङ्के स कथयति—भवति निपुणिके संगीत-व्यापारमुज्झित्वा कुत्र प्रस्थितासि ।

कतिपयपरिचारिकाः सुशिक्षिता बभूवुः । विक्रमोर्वशीये द्वितीयेऽङ्के निपुणिका देवीमुर्वशीपत्रं श्रावयति । वेणीसंहारे राज्ञीनिर्देशेन चेटी मुनिवेषधरं राक्षसं वीजयति ।

इयं चेटी विशेषस्थितिषु चारित्रिकमहिमानं स्वामिनामनुरूपं प्रकटयति । वेणीसंहारे बुद्धिमतिका नाम्नी चेटी यथानाममपि सहज सौहार्दमघोविघ्न प्रकटयति—

हा भगवन्तो लोकपालाः परित्रायध्वम् । एष खलु सोमवंशराजर्षी राजसूय-सन्तर्पितहव्यवाहः खाण्डवसन्तर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः । एषापि पाञ्चालराजतनया देवी वेदि-मध्यसम्भवा याज्ञसेनी । द्वावपि निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवतः । अनेन तस्या सुसंस्कृतिर्व्यज्यते ।

नागानन्दे प्रथमाङ्के प्रणयवती नायिका चेट्या अलकं सज्जयन्ती तया सह सख्यं द्योतयत्येव ।[१] सा सुत्कण्ठिताया नायिकायाः सखी एव नायकेन तस्य सङ्गमने तथैवायोजयति, यथा विदूषको नायकस्य नायिकया सङ्गमनाय बहु-विधानुपायान् रचयति । नायिकायाः प्रणय-पथे सा तां दृढमाश्वासयति तद-नुरूपाणि पूर्ववृत्तानि स्मारयति च ।

---

१. वीजयन्ती चेटी मलयवती सखि इति पदेन सम्बोधयति ।

कविः क्वचिच्चेट्या योगेन हास्यं भृशं प्रवर्तयति। नागानन्दे तृतीयेऽङ्के सा कथयति—

कथं मामिति कृत्वा मदपरवशेन शेखरकेणार्यात्रेयः प्रसाध्यते। तद्यावदलीककोपं कृत्वा द्वावप्येतौ परिहसिष्यामि। तस्मिन्नेवाङ्के चेटी विदूषकं वर्णयति। तद्यथा—नीलरसानुकारिणा तमालपल्लवरसेन तस्य मुखं चेट्या कालीक्रियते।

## दूती

चेटी क्वचिद् दूतीरूपेण महत्त्वं भजते।[1] सा तु पीठमर्दिका भवितुमर्हति। विविधोपायैः सा नायिका नायकप्रणयसरणौ प्रवर्तयति उत्साहयति च। मालविकाग्निमित्रे राज्ञा दूत्याः कर्मविशेषः सम्यक् परिभाषितः। तद्यथा—

मावज्ञानान्तरं प्रस्तुतेन प्रत्याख्याने हस्तयुक्तोत्तरेण।
वाक्येनेयं स्थापिता स्वे निवेशे स्थाने प्राणाः कामिनां दूत्यधीना॥ ३.१४

भरतानुसारेण नायकः कामार्तं आत्मावस्था-प्रदर्शिनीं दूतीं नायिकां प्रति प्रेषयति।[2] नायिकाया दूत्योऽविमारके सुविदिताः। मालविकाग्निमित्रे सा नायकस्य सन्देशं नायिकायै ददाति।

दूत्या वाग्वैदग्ध्यं मालविकाग्निमित्रे विलसति। तद्यथा—

बकुलावलिका (मालविकां प्रति)—अलक्तकरसमिव शोभते ते चरणम्। सर्वथा भर्तुरङ्कपरिवर्तिनी भव।

मुग्धे, भ्रमरसङ्गतो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसयितव्यः। विमर्दसुरभिर्बकुलावलिका खल्वहम्।[3]

कुलभोगसनाथित्वैः कृत्वाधिकविकत्थनम्।
न चाकामप्रवृत्तायाः क्रुद्धाया वापि संगमः॥

भरतानुसारेण सेयं दूती लडहा ( नितरां सौन्दर्यशालिनी ) भवति स्वभावतः संवृतमन्त्रा च ।[1]

नायकयोः प्रथमसमागमस्याभिसारस्थली दूत्या निर्धारितेति प्रतिभाति । सा स्थली—

> उत्सवे रात्रिसञ्चारे उद्याने मित्रवेश्मनि ।
> धात्रीगृहेषु सख्या वा तया चैव निमन्त्रणे ॥
> व्याधितव्यपदेशेन शून्यागार-निवेशने ।
> कार्यः समागमो नृणां स्त्रीभिः प्रथमसंगमे ॥
>
> ना शा. २६ १५, १७

दूती नायकयोः साम्मुख्यं विधाय तयोः साङ्गतिकमाचारविचारविशेषं प्रवर्तयितुकामा स्वयमेव मालविकाग्निमित्रे सव्यपदेशं दूरं गत्वापि तयोर्वैक्लव्यं निवारयति । तयोर्निर्मक्षिकं रहः प्रणयं प्रतिपादयितुं सा विदूषकं नियोजयति—आर्य गौतम अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।[2]

मालतीमाधवे दूती प्रणयपथे सन्तप्ताया नायिकाया विनोदस्थानमपि भवति । तया सह नायिका प्रणयिनमधिकृत्य किञ्चिद्रमणीयं चर्चति । ततः परं सा नायिकायाः पारिष्वङ्गमर्जति स्ववाग्वैदग्ध्येन ।

## सखी सहचरी वा

नायिकायाः साहाय्यमाचरन्त्यो नार्यस्तस्याः सख्यं गता दृश्यन्ते । साहाय्यमिदमुच्चावचं वर्तते । उच्चस्तरे सख्यं वासवदत्तायाः पद्मावत्या सह स्वप्नवासवदत्ते प्रवर्तते ।[3] सा नायिकया सह शयनाधिकारिणीति स्वप्नवासवदत्तस्य पञ्चमाङ्के सम्भावितम् ।

सखी नायिकायाः पूर्णं विस्रम्भं प्रणयप्रसङ्गेऽपि भजते । अविमारके धात्र्या सख्या च नायको राजभवनेऽभ्यन्तरीकृतो नायिकया सहवासं चिरं लभते । नलिनिका नायिकां सवाहयति । नायकस्तु अज्ञात एव तां परिष्वजते । सा तस्मिन्नवसरे नायिकाकर्णे कथयति एवमिव । अर्थात् नायकेन सह शेषे । सखी नायिकाभिसारं साधयति ।

---

१. लडहा संवृतमन्त्रा दूती त्वेभिर्गुणैः कार्या । ना. शा. २६ ११

२. राजशेखरानुसारेण स्वयं दूती दूतानां वरिष्ठा । बालरा० ५ १३, १४

३. हीनस्तरे सख्यं चेटयादीनां दासां प्रकरणे द्रष्टव्यम् ।

प्रतिनिधीभूय सखी नायिकाया मनोभावं नायकं प्रति चर्चति विक्रमोर्वशीयस्य द्वितीयेऽङ्के। नायकयोः प्रणयप्रवर्तनक्रियासु सखी दूती भवति। यथा विक्रमोर्वशीये चित्रलेखा नायकमुपसृत्योर्वश्याः सन्देशमुपनयति—तस्मिन् सुरारिसम्भवे दुर्गति महाराज एव मम शरणमासीत्। साहं साम्प्रतं तव दर्शनसमुत्थेन मदनेन बलवद् बाध्यमाना भूयोऽपि महाराजस्यानुकम्पनीया भवामीति।

राज्ञः प्रणयघटनसारं संवादं सख्यै सोपनयति कथयति चोर्वशीम्—प्रियतमस्य ते दूत्यस्मि संवृत्ता।

सखी पथप्रदर्शनं चेटीवत् प्रतिहारीवद्वा करोति विक्रमोर्वशीये द्वितीयाङ्के।[1]

सूक्ष्मेक्षिकया सखी किकर्तव्यविमूढां नायिकां प्रणयपथे पदे-पदे साधयति। तद्यथा विक्रमोर्वशीये तृतीयेऽङ्के—चित्रलेखा—(उर्वशी प्रति) अलमावेगेन। अन्तर्हिते इदानीमावाम्। विहितनियमवेषा राजर्षिमहिषी दृश्यते। तन्नैपेह चिरं स्थास्यति। राजा शास्ते च—

आनीयेत पदात्पदं चतुरया सख्या ममोपान्तिकम्। ३.१५

तदनु चित्रलेखा (सखी) उर्वशीं प्रणुदति—सखि उर्वशि इमं तावदस्य मनोरथं सम्पादय।

आश्रमकन्यका अप्यभिज्ञानशाकुन्तले परस्परं यौवनोचितं शृङ्गारितपरिहासेनात्मानमनुरञ्जयन्ति स्म। तथाहि

प्रियंवदा—अनसूये, जानासि किं निमित्तं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यति।

अनसूया - न खलु विभावयामि। कथय।

प्रियंवदा—यथा वनज्योत्स्नानुरूपेण पादपेन सङ्गता, अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति।

शकुन्तला एष नूनं तवात्मगतो मनोरथः।

अभिज्ञानशाकुन्तलेऽनुसूया लज्जालुशकुन्तलायाः प्रभवादिकथां नायकाय निवेदयति।

सखीनां मध्ये प्रणयिगताभिलाषेणास्वस्था नायिका प्रेमपरिधिं वर्णयति यतो हि नाम कालिदासानुसारेण स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति।

---

१. उर्वशी—(चित्रलेखां प्रति) तेनादिश्यतां मार्गो येन तत्र गच्छन्त्योरन्तरायो न भवेत्।

लज्जालुनायिकाया प्रणयनिवेदन सखी करोति। तद्यथाभिज्ञानशाकुन्तले—

प्रियवदा—त्वामुद्दिश्येदमवस्थान्तर भगवता मदनेनारोपिता। तदर्हसि अभ्युपपत्या जीवितमस्या अवलम्बितुम्।

नायिकाया भाविसुखमपि सखीना चिन्ताविषय। अभिज्ञानशाकुन्तलेऽनसूया दुष्यन्त प्रति निवेदयति—

यथेय नो प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय।

सख्यौ स्वेच्छया शकुन्तलार्थं चिन्तिते स्त। राजा ता स्मरिष्यति न वेति चिन्तानसूयाया। प्रियंवदा तस्या सौभाग्यदेवतार्चनार्थं पुष्पाणि चिनोति। अनसूया पुनर्दुष्यन्त स्मारयितु योजना विदधाति—'तदितोऽभिज्ञानमङ्गुलीयक तस्य विसृजाव' इति।

राज्ञ्या सखी वेणीसंहारे चर्चिता वर्तते। ता भानुमती दुर्योधनपत्नी नकुलेना॰ ह्वीना संहरणकथा श्रावयति।

## प्रतिहारी

अन्त पुरस्य द्वाररक्षिका प्रतिहारी प्रतिहाररक्षी वा।[१]

स्वप्नवासवदत्तस्य षष्ठेऽङ्के प्रतीहारी काञ्चनतोरणद्वारमशून्य कुरुते। विजयेति सज्ञया तस्या पुवद्भाव प्रतिभाति। सा पन्थान प्रदर्शयति आह्वयति चाभीष्टान् जनान् राजाज्ञया स्वप्नस्य षष्ठाङ्के। प्रतिहार उपस्थितान् जनान् राज्ञे निवेदयति सा। प्रतिज्ञायौगन्धरायणे सा रहस्यमपि राजरक्षासन्देशं राज॰ मातुर्गृहीत्वा यौगन्धरायण निवेदयति। मुद्राराक्षसे शोणोत्तरा चन्द्रगुप्तस्य सदेश चाणक्याय कथयति। प्रतिमानाटकस्य प्रथमाङ्के सा रामाभिषेकमधिकृत्य बहून् जनान् यथेष्टकार्येषु नियुङ्क्ते। सा वस्तुतो महाराजाज्ञा प्रसारयति महतामागमन सा राज्ञ निवेदयति।[२]

बहुय प्रतिहार्य॰ काञ्चनतोरणद्वारे देवीना चतुश्शालद्वारे वा नियुक्ता आसन्। प्रतिमानाटकस्य षष्ठाङ्के एका प्रतिहारी सुमन्त्रेण सहाभ्यन्तर प्रविशति, अपरा च भरतेन सह निर्गच्छति राजप्रासादात्।

---

१. प्रतिहारी तु चेटी भवतीति प्रतिमानाटकात् प्रतीयते। तत्र विजया चतुर्थस्याङ्कस्य प्रवेशके चेटी वर्तते। विजयैव तस्मिन्नाटके षष्ठस्याङ्कस्य प्रारम्भे प्रतिहारी सजाता।

२ प्रतिमानाटकस्य षष्ठेऽङ्के रामदर्शनानन्तर सुमन्त्रस्यागमन विजया निवेदयति भरताय।

यद्यनवधानेन कश्चिज्जनो राज्ञो वचनं न शृणोति, तदा प्रतिहारी तं साव-धानं करोति।[१]

अभ्यन्तरमागच्छद्भिर्बहिर्गच्छद्भिर्वा जनैः सह प्रतिहारी मार्गदर्शनाय बभूव।

कापटिकसविधानेषु प्रतिहारी सहाया भविष्यतीति विचार्य प्रागेव भाविकार्य-पद्धतिस्तस्यै निवेदिता।[२]

प्रतिहारी राज्याः सन्देशं राज्ञे निवेदयति। मालविकाग्निमित्रे पञ्चमेऽङ्के राज्ञे सा कथयति—देवो विज्ञापयति—तपनीयाशोकस्य कुसुमसहदर्शनेन समारम्भः सफलः क्रियतामिति।

प्रमदवने राज्ञे सन्देशस्य वाहिनी प्रतिहारी बभूव। अभिज्ञानशाकुन्तले सा द्वारदेशादमात्यपत्रं गृहीत्वा तदेव राजभवनस्य प्रमदवने रममाणाय दुष्यन्तायार्पयति।

प्रतिहार्या महत्त्वपूर्णभरं क्वचित् प्रतीयत एव। अभिज्ञानशाकुन्तले सा राजानं पृष्टा अपृष्टा वा विबोधयति। तद्यथा—

सुचरितनन्दिन ऋषयो देवं सभाजयितुमागतेति तर्कयामि। देव, प्रसन्नमुखवर्णा दृश्यन्ते। जानामि विस्रब्धकार्या ऋषयः।

देव, कुतूहलगर्भोपहितो न मे तर्कः प्रसरति। ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते।

बालरामायणे तृतीयेऽङ्के प्रतिहारी स्वयंवरसमारोहे राज्ञः परिचाययति।

## परिजनः परिवारो वा

राजकीयेऽन्तःपुरे बहुविधा जना परिजनाः परिवारा वेति सञ्ज्ञिताः। परिजनास्तु चेटी, दासी, सैरन्ध्री इत्यादयः सन्ति।

मालविकाग्निमित्रे परिजना बालिका इति सम्बोधिताः। तद्यथा—

देवी—बालिकाः, आर्यपुत्रवचनमनुतिष्ठत।

---

१. प्रतिमानाटके प्रतिहारी सुमन्त्रं कथयति—भर्तृदारकः खल्वार्यं पृच्छति।

२ मालविकाग्निमित्रस्य चतुर्थेऽङ्के।

परिजनः — तथा।[1]

विक्रमोर्वशीयस्य तृतीयेऽङ्के परिजना स्त्रिय रात्रौ रात्री विहारस्थले दीपिका धारयन्ति। काचिद् देवीमनु राजान सम्भावयति—जयतु जयतु भर्तेति।

## यवनी

यवनी परिजनेषु अन्यतमा धनुर्बाणो राज्ञे समर्पयति।[2] कैशिकीवृत्तिपरायणे नाटक एव भवतु नाम। वीरोचितनाटकेषु सात्त्वतीवृत्तिपरायणेषु कञ्चुकी नायकाय धनुरादिकमुपनयति।

बालरामायणे पुरुष. कश्चित् जनकाय धनु रानयति। परशुरामाय तस्य शिष्यो माठरो धनुर्ददाति।

## नायकपात्रयोर्भेदः

भूमिका प्रकृतिर्नायकश्चेति पदत्रय पर्यायवाचि। पात्रपदस्य वस्तुतो न तथात्वम्। महामहिमविष्णुरूपो रामायण-कथाया. प्रधानपुरुषो भूमिका वा प्रकृतिर्वा नायको वाभिधीयते। तस्य प्रतिरूपो य. कश्चिद् स्थितो रङ्गे रामवदाचरति स तु पात्रमेव। एतत्तु सुप्रमाणित सागरनन्दिना नाटकलक्षणरत्नकोशेऽधोविधम्—

ये विशन्ति च कार्यार्थं निष्क्रामन्ति च रङ्गतः।
ते सर्वे पात्रसञ्ज्ञाभिर्व्यपदेश्या प्रयोक्तृभि.॥ २५५

अनवधानवशात् परवर्तिन कतिपयनाट्यशास्त्रकारा अपि नायकपात्रयोरभेद मन्यन्ते। वस्तुत पात्र तु नर्तक', नट, प्रयोक्ता वा भवति।



---

१ विक्रमोर्वशीये परिजना दारिका इति सम्बोधितास्तृतीयेऽङ्के।

२. अभिज्ञाने षष्ठाङ्के विक्रमोर्वशीयस्य पञ्चमाङ्के च। यवनीग्रहणमेतदर्थं कालिदासस्य विलास प्रवणता द्योतयति। कालिदासो विलास इति।

# वृत्तिः

वृत्तेन समन्विता भवति वृत्ति । नाट्यप्रकरणे वृत्तीनां समुद्भवो भवतीति भरत आचष्टे—

> भारती सात्त्वती चैव कैशिक्यारभटी तथा ।
> चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम् ॥ ६.२४,२५
> सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः । १८.४

अभिनवगुप्तानुसारेण सर्वो हि संसारो वृत्ति चतुष्केण व्याप्तः ।[1]

अत्र वृत्तिस्तु पात्राणां नाट्यमधिकरोति । किमपि काय ( वृत्तम् ) पात्राणि नाट्य प्रसङ्गे केन विधिना—वाचिकाभिनयविशेषेण, सात्त्विकाभिनयविशेषेण, आङ्गिकाभिनयविशेषेण, आहार्यादिलालित्ययोजनाविशेषेण वा सम्पादयन्तीत्यनुसारेण क्रमशो भारती, सात्त्वती, आरभटी, कैशिकी च वृत्तयो विलसन्ति ।[2] एता वृत्तयः कविभिर्निदिश्यन्ते, एताश्च समाश्रित्य पात्रैरभिनयविधानं प्रयुज्यते । तद्यथा को नायकः कं रसमुद्दिश्य किं कथं च साधयतीति सन्धारणेन तन्नोत्थापिता वृत्तिः काव्यखण्डेषु प्रकर्षं लभते ।[3]

नाटकेषु नायकानां यद् वृत्तं वर्ण्यते तदाश्रित्य पात्राणां सन्ध्यङ्गप्रसङ्गे नाभिनयवृत्तं कल्प्यते ।[4] अभिनयवृत्तेषु वृत्तीनामुद्भवो वर्तते । वृत्तयोऽभिनयवृत्तानि

---

१. ना० शा० १८.४ अभिनव भारती

२. एकमेव कार्यं चतुर्विधाभिनयेनाभिनेतु शक्यम् । तथा हि—पार्वती-शिवोद्वाहो भारतीवृत्तिविशेषेण, सीतारामोद्वाह. सात्त्वती-वृत्तिविशेषेण, तारासोमोद्वाहः आरभटीवृत्तिविशेषेण, शकुन्तलादुष्यन्तयोर्विवाहः कैशिकीवृत्तिविशेषेण च प्रयुज्यन्ते । अभिनवगुप्तो विशदयति च—अभिनयोपकारिण्यो वृत्तय. । ना० शा० प्रथमभागे पृ० २६६ गा० ओ० सी०

३. ना० शा० २०.४२ अभिनव भारती

४. सात्त्विका व्यभिचारिवृत्तमभिनयवृत्ता चोपजीवन्ति ।
बहूनामिन्द्रियाणा प्रयमानुयोगादनु मानसिकविचारणा स्फुरति ।
ना० शा० ६.२२ अभिनव भारती

रसनिष्पत्तिदिशि प्रवर्तयन्ति। वृत्तिस्तु व्यापारः। कस्य व्यापारः? नायकाना (वस्तुतः पात्राणामभिनयप्रसङ्गे) व्यापारः। कीदृशो व्यापारः? मानसिको वाचिकः, आङ्गिकश्चेति। कस्मै प्रयोजनाय व्यापारः? रसनिष्पत्तये भवति व्यापारः। *अभिनवगुप्तो विशदयति—भारतीवाग्वृत्तिः। मनोव्यापाररूपा* सात्त्विकी सात्वती। भरा भटाः सोत्साहा अनलसा तेषामियमारभटी कायवृत्तिः। केशाः किंचिदप्यर्थं क्रियाजातमकुर्वन्तो देहशोभोपयोगिनः। तद्वत् सौन्दर्योपयोगी व्यापारः कैशिकीवृत्तिरिति तावन्मुख्यः क्रमः। ...एवं यत्किंचित्काल्लित्यं तत्सर्वं कैशिकीविजृम्भितम्।[1] कैशिकी भरतेन पुरस्कृताद्योविधम्—

> नृत्ताङ्गहारसम्पन्ना रसभावक्रियात्मिका।
> कैशिकीलक्षणेनैष्या शृङ्गाररस-सम्भवा॥

ना० शा० १.४४, ४५

अत एव सर्वासु वृत्तिषु कैशिकी सौन्दर्यमावर्जयति। सर्वा वृत्तयः सहधारिण्योऽपि कस्मिंश्चित्प्रकरणे भवितुमर्हन्ति। यस्या कस्या अपि प्राधान्येन तस्या प्रथमसत्तोत्तीयते।

भरतानुसारेणैकस्मिन्नेव कार्येऽपि नायकस्य प्रथमं भारती वृत्तिस्तदनु सात्वतीवृत्तिस्तदनु कैशिकीवृत्तिस्तदनु आरभटीवृत्तिरद्योविध विलसन्ति।

भारती

> तस्मावेतौ (मधुकैटभौ) निहन्म्यद्येत्युवाच वचनं हरिः।

सात्वती

> वल्गितैः शार्ङ्गधनुषस्तीव्रैर्दीप्ततरैरथ।
> सत्त्वाधिकैरसंभ्रान्तैः सात्वती तत्र निर्मिता॥

कैशिकी

> विचित्रैरङ्गहारैस्तु देवो लीलासमन्वितैः।
> सत्त्वाधिकैरसंभ्रान्तैः सात्त्वती तत्र निर्मिता॥

---

१. ना० शा० १ ४१ अधिकृत्य भारती
अभिनवगुप्तानुसारेण पाठ्यप्रधाना भारती, अभिनयप्रधाना सात्वती, अनुभावावेशमयरसप्रधानारभटी गीतवाद्योपरञ्जकप्रधाना कैशिकीवृत्तिः।
ना० शा० २० २४ अधिकृत्य भारती

आरभटी

संरम्भावेगबहुलैर्नानाचारी-समुत्थितैः ।
नियुद्धकरणैश्चित्रैर्ज्ञेयाऽऽरभटी ततः ॥ ना० शा० २०.९,१४

अनेनोदाहरणेन भारती वाचिकाभिनयप्रधाना, सात्त्वती सात्त्विकाभिनय प्रधाना कैशिकी आहार्याभिनयप्रधाना, आरभटी आङ्गिकाभिनयप्रधाना प्रदर्शिताः ।

भारतीवृत्तिस्तु रीतिरिति मत प्रतिपादयन् शृङ्गारप्रकाशे राघवन् स्खलन्निव प्रतिभाति यतो हि नाम भरतानुसारेण—

कार्यहेतोर्मया ब्रह्मन् भारतीयं विनिर्मिता । ना० शा० २०.८

अर्थात् 'कार्यद्वारको वृत्तीनां नाट्योपयोग'।[१] रीतीना कार्यहेतुत्व न भवति। भारतीवृत्तेर्वाक्चेष्टात्वात्. प्रतिपादिताभिनवगुप्तेन ।[२]

## भारती

पाठ्यप्रधाना भारतीवृत्ति.।[३] तत्र श्रव्यस्य सूच्यस्य च प्राधान्यं वर्तते । वर्णनो• पेना भारती भाति सर्वत्र। वाक्चेष्टा-प्रधानाया भारतीवृत्तेः श्रेष्ठता प्रति- पादिताभिनवगुप्तेन—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः।
वाक्यपदीयस्य १.१२४, १२७ वृत्तौ

कायिक मानसिकं च चेष्टाद्वयं वाचिकीमिश्चेष्टाभिव्याप्यते ।[४] वस्तुतः सर्वासा वृत्तीनां कृते भारतीवृत्तिरधिकरणस्वरूपा भवत्येव । वचनद्वारेण तासां प्रकटन सम्भवति। कवेः प्रतिभायाः सर्वोच्चविलासः विशुद्ध-भारती-प्रकरणेषु प्रतिफलति । शेषाणा वृत्तीनां प्रकरणेषु नटप्रतिभाविलासः प्रतिफलति । भारती- प्रकर्षस्योदाहरणं भासस्य पञ्चरात्रे द्वितीयाङ्केऽभिमन्यु-बृहन्नला-भीम-युधिष्ठिर• विराटेश्वराणां संवादे प्रकटति। तथा हि—

---

१. तत्रैवाभिनवभारती । अन्यत्र स विशदयति—सर्वेव क्रियावृत्तिचतुष्टयव्याप्ता । ना० शा० २०.१६ अधिकृत्य भारती ।

२. ना० शा० २०.२६ अधिकृत्य भारती ।

३. ना. शा. २०. २३ अधिकृत्य भारती

४. ना०. शा. २०. २६ अधिकृत्यभारती

अभिमन्यु —

अलमात्मस्तवं कर्तुं नास्माकमुचित कुले।
हतेषु हि शरान् पश्य नाम नान्यद् भविष्यति ॥

इत्यर्जुनं प्रति २.५०

मा तावद् भो

बाहुरक्षौहिणी यस्य निर्व्याजो यस्य विक्रमः।
किं भवान् मध्यमस्तातस्तस्यैतत् सदृशं वचः ॥

इति भीमं प्रति २.५६

भारतीवृत्तौ पुरुषस्य वाणी प्रकर्षं लभते यतो हि नाम पुरुषो वाणी-प्रयोगेण कार्यं साधयति। स्त्री तु सौन्दर्योद्बोधकभावभङ्गीभि प्रभावं जनयति, कार्यं च साधयतीति कैशिकीवृत्तौ तस्या. प्राधान्य प्रस्फुटति।[1] तत्र स्त्रिय स्युर्नाम भारतीवृत्तिप्रकरणे, किन्तु तासा वाच प्राधान्य न स्यात्।[2]

## सात्त्वती

सात्त्वती अभिनयप्रधाना मानसीवृत्तिर्भवति।[3] तत्र प्रकरणेषु सात्त्विक-भावाना प्रदर्शन प्राधान्यं भजते गौणत्व अन्या वृत्तय सहचरन्ति च। इय वृत्तिः शृङ्गारकरुणनिर्वेदेष्वपि दृश्यते किन्तु तस्या प्राभवो वीराद्भुतरौद्रेषु सातिशयं परिस्फुरति।[4]

मानसिकविचाराणामौदात्त्य सात्त्वतीवृत्त्या प्रतिफलति। ते सन्ति शौर्यत्याग-दयार्जवादय आत्मगुणा उत्साहस्य विषयीभूताः।[5] सत्त्व वस्तुतश्चित्तवृत्ति.[6]।

---

१. पुरुष-प्रयोज्या, स्त्रीवर्जिता' भवतीति भारती ना. शा. २०. २६ अधिकृत्य

२ ना. शा २० २६ अधिकृत्य भारती।

३. ना. शा. २०.२३ अधिकृत्य भारती। चित्तवृत्तिप्रधान चेद नाट्यम्'। ना. शा १३ ३७ ३८ अधिकृत्य भारतो तदेव समर्थयति।

४. ना शा २०.४२ अधिकृत्य भारती

५ अभिनवगुप्तानुसारेण सात्वतो गुणो मानसो व्यापार.। सत् सत्त्व प्रकाश. तद्विद्यते यत्र तत्सत्त्व मन, तस्मिन् भव। विप्रदासानुसारेण—सत् संवेदनमस्त्य-स्मिन्निति सत्त्व मनोऽस्य वा। कारिका ३७६

६. ना. शा. भाग २ पृ १३४

अभिनवगुप्तानुसारेण सति धर्मप्राधान्ये सात्वती अस्ति

भरतानुसारेण सात्वतीवृत्तौ रौद्ररसः, उद्धतपुरुषप्रायस्त्वं परस्पराधर्षणं चोद्दिष्टानीति[2] असमञ्जसमेव प्रतिभाति यतो हि नाम तेषु सत्वस्याभावो वर्तत एव। धनञ्जयः समर्थयति—

विशोका सात्त्वती सत्त्वशौर्यत्यागदयार्जवैः ॥ २.५३

सत्त्वशौर्यत्यागदयार्जवादिभी रौद्र औद्धत्यमाधर्षणं न न संगच्छन्ते।

सात्वतीवृत्तावङ्कुराभिनयः ( दृष्टिकर्म ) विलसति।

सात्त्वत्यामङ्कुरः स्थितः। संगीतचन्द्रे कारिका ३७६

## आरभटी

अनुभावाद्यावेशमयरसप्रधाना आरभटी।[3] तत्राङ्गिकाभिनया दृश्या भवन्ति बहुशो नाट्यनिर्देशेन। आरभट्या प्रथमोपयोगोऽन्यायनिवारणाय भवति। यथा वेणीसंहारे दुर्योधनदुःशासनादीनामन्यायरोधः प्रपञ्चितः। अन्यायात् क्रोधो जायते। सात्त्वत्या वीरस्य यो विलासः परिलक्ष्यते, तत्र शौर्य-त्याग-दयार्जवा-दीनि प्रभवन्ति। नायकस्योदात्त्यं प्रकर्षयितुं तस्योत्साहो वर्ण्यते। इयं तु धीरोदात्तानां वृत्तिः। उदात्तानां क्रोध ईषदेव क्वचित् स्फुरति। क्रोधे सत्यपि यदि पात्राणां मानसिकौदात्त्यं तेषां पराक्रमेषु विलसति तर्हि सात्त्वती वृत्तिः प्राधान्यं भजते।

आरभटीवृत्तौ शाखाभिनयः ( करप्रधान-व्यापारः ) विलसति।[4]

## कैशिकी

बाहुल्येन गीतवाद्योपरञ्जकप्रधाना भवति कैशिकी।[5] नाट्येतरमनोरञ्ज-नानि भूयो भूयो विलसन्ति कैशिकीप्रयोगेषु। अभिनवगुप्तानुसारेण तत्र हास-प्रधानता वर्तते। सौन्दर्यं नाम कैशिकीवृत्तेर्लक्ष्यम्। अन्यत्र कैशिकीसौन्दर्ययो-परस्परमविनाभावः। वस्तुतः कैशिकी तु शृङ्गारप्रधाननाट्यस्य मौलिभूतं तत्त्व-मुद्भावयति।[6] तत्र नास्ति फलं प्रति काचित् ( साक्षात् ) क्रिया।[7] स्त्रीणां

---

१. ना. शा. १३ ३८ अधिकृत्य भारती

२. ना. शा. २०.४ वीराद्भुतरौद्ररसा, उद्धतपुरुषप्राया, परस्पराधर्षणकृता च।

३. ना० शा० २०.२३ अधिकृत्य भारती। आरभटास्तु क्रोधोद्वेगादिगुणविशिष्टाः।

४ आरभट्या स्थिता शाखा। करप्रधानो व्यापारस्तेषु शाखेति कीर्त्यते। संगीतचन्द्रे ३७७

५. ना० शा० २०.२३ अधिकृत्य भारती।

६. सकलप्रयोगप्राणभूतकैशिकी। अभिनवगुप्तानुसारेण—समवकारादावपि च सौन्दर्या-त्मकं वैचित्र्यं कैशिकीविजृम्भ एव। पृ० ८६

७ अकुर्वतो क्रिया काचिच्छोभामात्रोपयोगिनाम्। संगीतचन्द्रे कारिका ३७४

( प्रसाधनहावभावप्रदर्शनादीनां ) व्यापाराणां प्राधान्यं कैशिकीवृत्तौ दर्शनीयम्।[1] तद्यथा भरतेन परिभाषितम्—

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता
कामोपभोगप्रभवोपचारा तां कैशिकीवृत्तिमुदाहरन्ति ॥ २२.५३

'नर्म, नर्मस्फिञ्ज, नर्मस्फोट, नर्मगर्भ' इति कैशिक्या चत्वारि अङ्गानि मूलतो नर्म (हासकराणि) सन्ति शृङ्गारस्य विकासोन्मुखविविधदशानां परिचायकानि।

## वृत्तीनां भेदाः

वृत्तीनां भेदा अधोविध प्रकल्पिताः —

भारत्या — प्ररोचना, आमुखम्, वीथी, प्रहसनं च।

कैशिक्या — नर्म, नर्मस्फिञ्ज, नर्मस्फोट, नर्मगर्भ।

सात्वत्या — सल्लापक, उत्थापकः, सांघात्यक, परिवर्तकः।

आरभट्या — संक्षिप्ति, सम्फेट, वस्तूत्थापनम् अवपात।

वस्तुतो नैमे भेदा वृत्तीनामिति बोधयताभिनवगुप्तो विशदयति—भेदा न सन्ति प्रकाराः। त्रैलोक्यव्यापिन्या हि भारत्या कश्चिदंशः प्ररोचनारूप, एवमामुखस्वभाव इत्यादि। तदनुसारेण भेदा अङ्गत्वमागता इत्यनेन 'अंशत्व प्राप्ता' इति प्रतिफलति।[2]

## वृत्तयो नायकगुणाश्च

नायकगुणा प्रायशो वृत्तिभो रूप्यन्ते। वृत्तिशो गुणानां श्लेषणमधोविध परिचीयते—

सात्वती—शोभा, विलास, माधुर्यं, स्थैर्यं, गाम्भीर्यं च।

आरभटी—तेज।

कैशिकी—लालित्यम्।

---

१ वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते॥
तत्राक्षिभ्रूविकाराढ्य शृङ्गाराकारसूचकः।
सग्रीवारेचको ज्ञेयो हावस्थितसमुत्थितः॥ २१.१०

२ ना० शा० २०.२७ अधिकृत्य भारती

प्रो० सिद्धेश्वर चट्टोपाध्याय समाख्याख्याति—

It may be pointed out here that Vṛttyaṅgas are neither limbs nor subdivisions of Vṛttis. They are varieties, forms through which a particular Vṛtti can be manifested Nāṭakalakṣaṇa ratnakośa P. 202

## वृत्तेरनुबन्धाः

| वृत्तिः | रसा: भरतमतम् | रसा: धनञ्जयमतम् | रीतिः | अभिनय | देश प्रसक्ति[1] | नायकः |
|---|---|---|---|---|---|---|
| भारती | बीभत्स, करुणः | सर्वे रसाः | वैदर्भी, गौडी, पाञ्चाली | वाचिक | सर्वत्र | सर्वे नायकाः पुरुषा विशेषत. |
| कैशिकी | शृङ्गार, हास्य | शृङ्गार, | वैदर्भी | चतुरमधुरललिताङ्गहारा-भिनय नृत्तनृत्तगीतवाद्या | दक्षिण अवन्ती पाञ्चाल | धीरललितः स्त्रियो विशेषत |
| सात्वती | वीर, अद्भुत, रौद्रः | वीरः | पाञ्चाली | सात्त्विकोऽङ्गाभिनय | अवन्ती | धीरोदात्तः |
| आरभटी | रौद्र, भयानकः | रौद्र, बीभत्सः | गौडी | आङ्गिक (व्यायाम) उद्धताङ्गहारा वाताभिनय. | पाञ्चालः | धीरोद्धत. |

भरतानुसारेण नाटके प्रकरणे च सर्वा वृत्तयो प्रसङ्गानुसारेण विलसन्तु । शेषेषु रूपकेषु कैशिकीवृत्ते प्राधान्यं न स्यात् ।

१. अभिनवगुप्तानुसारेण येषु देशेषु यो वृत्तिप्रकार उक्तः स येषु रूपकेषु नाटकादीनामन्यतमेषु भवति, तानि रूपकाणि तेष्विति तद्देशगतजनपदव्यापारेण कर्तव्यानि कविना नटेन च । ना. शा. १३.२१ अधिकृत्य भारती । दाक्षिणात्येषु शृङ्गार-प्रचुरतया कैशिक्या सम्भव । पश्चिमेऽप्यावन्त्येव संगृहीता । एवं सात्वि । सति धर्मप्राधान्ये सात्वती अस्ति । प्राच्येषु तु स्वभावतया डम्बर-प्राधान्यात् भारत्यारभट्योर्योगः । उत्तरभूमौ यद्यपि प्राधान्याद् भारत्यारभटीयोग, तथापि कैशिकीलेशात् शृङ्गारमयप्रयोगसहिष्णवो जनाः । ना. शा. १३.३७ भारती । बहुषु देशेषु प्रवृत्तिद्वयं प्रवर्तते । पाञ्चालमध्यमाया तु सात्वत्यारभटी स्पृहा । ना. शा. १३.४०

## प्रधानवृत्तेः प्रभावः

नाटकेषु काचित् प्रधाना वृत्ती राजते। यथाभिज्ञानशाकुन्तले कैशिकीवृत्ति। तस्यानुरोधेन नायिकोपलब्धिः, शृङ्गाररसो धीरललितो नायको दुष्यन्तोऽत्र वर्णिताः। अस्मिन्नाटके कैशिक्या प्रभावोऽवान्तरवृत्तेषु, अङ्गरसेषु, प्रधानेतर-नायकादिषु वर्तते इति विवेच्यते।

प्रथमाङ्को मृगयादृश्येन प्रारभ्यते। तत्र सारङ्गस्य मृगया क्रियते कैशिक्या अनुरोधेन। यदि नाम नाटके सात्वती वारभटी वा वृत्तिर्भवेत्, तर्हि सिंहस्य मृगयां कविर्निबध्नीयात्। सोऽयं मृगः

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः

इत्यत्र ग्रीवाभङ्गाभिरामता कैशिक्या अनुरोधेन लक्ष्यीक्रियते।

अन्यच्च तत्रैव—

शकुन्तला (ससम्भ्रमम्) अहो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते।

राजा—(सस्पृहं विलोक्य)

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमती
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती॥

इत्यस्मिन् व्यतिकरे मधुकरस्य प्रणयिनायकता नायिकाया अधरपानं च कैशिक्या अनुरोधेन गृहीते।

कैशिक्या अनुरोधेनैव गजाक्रमणं श्रव्यमेव श्लोकमेकं सक्षेपेण विषयीकरोति यतो हि नाम प्रकरणमिदमारभटीवृत्तिकं विस्तरेण प्रपञ्चं नार्हति-प्रसंगेऽस्मिन्।

चतुर्थाङ्कात् प्राग् दुर्वाससः शापकथा कैशिक्या अनुरोधेनऽनुभावविहीनं विष्कम्भकेण सूचितम्। शापस्तु आरभटीमाश्रयति, या कैशिक्या प्रतिरोधिनी वृत्तिः। सप्तमाङ्के दुष्यन्तेन दानवानां प्रणाशः कतिपयैरेव श्लोकैरनुभाव-विहीनं सन्दर्भितम् यतो हि नाम युद्धादिसाहसपराक्रमा कैशिकी न पोषयन्ति।

कैशिक्या भावरसादीनां वासनमभिज्ञानस्य पञ्चमेऽङ्के निदर्शितं कालिदासेन। तत्र शकुन्तलायाश्चिन्ता[1], असूया[2], दैन्य[3], शङ्का[4], निर्वेद[5],

१ ईहितानाप्तेः। २. दौर्जन्यमन्युजा दोषोक्त्यवते।
३. दौर्गत्याद्यैः। ४ अनर्थप्रतिभाशक्ना।
५ आपदि स्वावमाननम्।

अमर्ष[1], विषादश्च[2] सन्ति। इमे भावाः कविकौशलेन कैशिकीवृत्तिप्रवाहे निमग्ना इव प्रत्यायनीकृता। तद्यथा प्रथमं तावद् दुष्यन्तस्यौदात्यं परेषां वचनैः प्रमाणितम्—

१. भवन्ति नम्रास्तरवः फलागमैः
२. महाभागः कामं नरपतिरभिन्नस्थितिरहो।
३. स्वसुखनिरामिलाषः खिद्यसे लोकहेतोः।
४. प्रजाः प्रजाः स्वा इव तन्त्रयित्वा।

राजा विष्दो पृच्छति—अथ भगवाँल्लोकानुग्रहाय कुशली काश्यप।

एतादृशस्य नायकस्य सपर्केण कैशिकीविरुद्धा भावा न प्रभवन्ति मनागेव प्रभवन्ति वा। अपरं च शकुन्तलाया अघोवचनेन कैशिकीविरुद्धा अर्था अपवाहिता एव। सा निवेदयति—एकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सनिहितमासीत्। तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वयायं तावत् प्रथम पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन। न पुनस्तेऽपरिचयाद् हस्ताभ्याशमुपगतः। पश्चात्तस्मिन्नेव मया गृहीते सलिले अनेन कृत प्रणय। तदा त्वमित्थं प्रहसितोऽसि—सर्वः सगन्धेषु विश्वसिति। द्वावप्यत्रारण्यका इति।[3]

प्रधाननायकेतरभूमिकाभिज्ञाने कैशिकीवृत्तिपरायणा वर्तते। तत्र प्रथमचतुरङ्केषु प्रियंवदानुसूये कैशिकीमूर्तिमत्या इति विपश्चिता माविदितम्। चतुरिका-परभृतिका हंसपदिका-प्रतीहारी-सानुमतीत्यादयः कैशिकीवृत्तिं निर्भरन्ति।

## पञ्चमी वृत्तिः

चतस्रो वृत्तयो भरतानुसारेण प्रपाञ्चिता। अस्ति काचित् पञ्चमी वृत्तिरिति विषये उद्भटसम्प्रदायस्य विशेषो धनञ्जयेन निर्दिष्टः। यथोक्तम्—

पञ्चमीं वृत्तिमौद्भटाः प्रतिजानते। २.१६

अभिनवगुप्तो निर्दिशति—शकलागर्भमतानुसारिणो मूर्छादावात्मसंवित्तिलक्षणा पञ्चमी वृत्तिः सकलकार्यनिवृत्त्यनुमेया मूर्छाकर्मानुभावेन च फलेनावच्छिन्नामात्मव्यापाररूपां मन्यन्ते न च परिस्पन्द एवैको व्यापार इति मनसि कृत्य तन्मतं भावाना ग्राह्यग्रहण स्वभावत्व मुपपादयद्भिः भट्टलोल्लट-प्रभृतिभिः पराकृतमिति न फलवृत्तिर्वा कदाचिदिति चतस्र एव वृत्तयः।[4]

---

१. अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता।
२. प्रारब्धकार्या सिद्ध्यादेर्विषाद सत्त्वसंक्षयः।
३. अभिज्ञा० ४.२१/२२
४ अभिनवभारती द्वितीये खण्डे पृष्ठं ४५२

परवर्तियुगे ब्राह्मीवृत्तेः कल्पना समजायत। अनया वृत्त्या शान्तरसस्य सन्धानमपेक्ष्यते। तथोक्तं सङ्गीतमञ्जर्याम्—

केचिद् ब्राह्मीं तु वृत्तिं तु शान्ताद्भुतरसोदयाम्।

भरतकोशे हरिपालस्य मतमुद्धृतम्—

ब्राह्मी नाम भवेद् वृत्तिर्ब्रह्मशान्ताद्भुताश्रया।
ब्राह्मी ब्रह्मोद्भवा तत्र शेषा नारायणोद्भवा॥

## वृत्तिविधानम्

किमपि वृत्तमितिवृत्तं वा रसानुरोधेन कविः काव्य-क्रियायै विचिनोति। काव्ये तस्य वृत्तस्य प्रपञ्चो नेतिहासकर्त्रा ज्ञानगौरवार्जन-पद्धत्या भवितुमर्हति अपि तु रससार सपुरयालमभिलक्ष्य वृत्तं तु सूत्रमिव गृहीत्वा कविः सविधान-रूपाणि सन्ध्यन्तर-सन्ध्यङ्ग-वीथ्यङ्गादीनि वैचित्र्यमयानि विविधानि पुष्पाणीव सङ्ग्रथयते। तत्रैकविंशति सन्ध्यन्तराणां त्रिषष्टि सन्ध्यङ्गानां द्वादश वीथ्यङ्गानां कवेः पुरतो विलसन्ति। एतेषु कानि कानि सन्ध्यन्तराणि सन्ध्यङ्गानि वीथ्यङ्गानि च ग्रन्थनीयानीत्युपपत्तये वृत्तीनां विधानं पुरस्कृतम्।

यदि नाम वीररसो युद्धवृत्तं च वर्तते तत्र सात्त्वती आरभटी च द्वयोर्वृत्त्योर-वसरो भवति। तदनु विभावाश्रयादीन् विचार्य स विनिर्णयति यदत्र सात्वती आरभटी वा प्रभवेत्। रामरावणयुद्धे रामस्योत्तमप्रकृतिमुद्दिश्य कविस्तत्र सात्वतीं वृत्तिं स्वीकरोति। इमामेव सात्वतीमनुरुध्य सन्ध्यङ्गादीनि स प्रचिनुते।

यद्यपि सर्वासां वृत्तीनां परस्परं सामञ्जस्यं सहचारिता वा वर्तते एव तथापि बाहुल्येन किमपि काव्यं वृत्तिविशेषेणाभिख्यां लभते। तथा हि— अभिज्ञानशाकुन्तले कैशिकी वृत्तिर्विलसति। अस्मिन् नाटके यदि नाम सात्वती-वृत्तेरारभटी वृत्तेर्वा प्रकरणानि समायान्ति तर्हि संक्षेपेण तानि वर्ण्यन्ते। तद्यथा दुष्यन्तेन दानवगणस्य पराजयः। तत्र युद्धं रङ्गपीठे दृश्यं नास्त्येव। केवलं श्रव्य-विधिना मातलिवचनेन तद् संक्षिप्तं वर्णितम्।[1] अपरञ्चारभटीवृत्तिपरा दुर्वाससः शापघटना सूचनयैव विष्कम्भकेण नेपथ्यवचनेन चोपक्षिप्यते। मातलिना कृता विदूषकस्य दुर्दशापि नेपथ्येन सूचिता।

कैशिकीवृत्तिकेषु काव्येषु यत्किञ्चित् कविः सामाजिकेभ्यो दर्शयति, तत्तु प्रायशो मधुरं सुन्दरं रोचकमेव पक्षं प्रकाशयति न विपरीतम्। तथा लोकरक्षक-स्वरूपं तपस्विनाम्—

---

१. अभि० ३ ७, ५

एतास्तपस्विकन्यका स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते । अथवा सप्तमेऽङ्के—अहो उदाररमणीया पृथ्वी ।

## वृत्तेः प्रसङ्गाः

नाटके या वृत्तिः प्रधाना, तत्सम्बन्धिकार्याणि दृश्येन श्रव्येण चाङ्कभागे निवेशनीयानि । शेषाणि तु अर्थोपक्षेपकेण, इतरेण वा सूच्यविधिना सामाजिकेभ्यो विज्ञापनीयानि ।

वृत्तीनां रसैः सम्बन्धो वर्तते । तेषां रसानां स्वपक्षीया विरोधिनश्च रसा भवन्त्येव । तर्हि कस्यचित् काव्यस्य या वृत्तिस्तामनुरुध्य रसा निबन्धनीया अथवा काव्ये यो रसोऽपेक्ष्यते तस्यानुरोधेन वृत्तय समीयन्ते ।

एवमेव रसानुरूपाणां वृत्तीनां रीतिभिः प्रदेशैश्च[१] यथायथं सामञ्जस्यमवधारणीयम् ।

कैशिकीवृत्तेः सन्ध्यङ्गानि–विलोभनम्, प्राप्ति, विधानम्, विलासः, विधूतम् शमः, नर्म, नर्मद्युति पर्युपासनम्, पुष्पम्, प्रसादनम्, समहः छलनमिति ।

आरभटी-वृत्तेः सन्ध्यङ्गानि—विद्रव, निरोधनम् वज्रम्, अभूताहरणम्, अधिबलम्, तोटकम्, उद्वेग, आक्षेप, वज्रम्, संभ्रम, युति, निरोधनम्, विचलनम् सम्फेट ।

सात्वतीवृत्तेः सन्ध्यङ्गानि—शक्ति परिभाव, भेद, व्यवसाय, उपगूहनमिति विरोधशमनम् ।

कैशिकीवृत्तेः सन्ध्यन्तराणि–प्रदानम्, प्रत्युत्पन्नमतित्वम्, गोत्रस्खलितमिति ।

आरभटीवृत्ते सन्ध्यन्तराणि—वध, दण्ड, माया, क्रोध, साहसम् भयम्, भेद इति ।

सात्वतीवृत्ते सन्ध्यन्तराणि–ओजः, प्रत्युत्पन्नमतित्वम्, हेत्ववधारणमिति ।

भारतीवृत्तेरेव सर्वाणि वीथ्यङ्गानि भवन्ति ।

वृत्त्यननुरूपा भूमिका रङ्गे परिहरणीया । अभिज्ञाने कैशिकीवृत्ति प्रधाना । सा तु सौन्दर्यशालिनी । तत्रासुन्दरस्य दुर्वाससो रङ्गे प्रवेशो न भवेदिति नेपथ्यादेव तस्य वचनं श्राव्यते ।

कथं कथाशा अर्थोपक्षेपकेषु निवेशमर्हन्तीत्यवधारणेऽपि वृत्तिविधानस्य विचारणा भवेन्नाम ।

---

१. तेन काश्मीरदेशगतनायकनाटिकानुचिता । तस्या कैशिकीप्राधान्ये दाक्षिणात्योचितत्वात् देशानौचित्ये तच्चेष्टितव्यावर्तनेन प्रतीतिविघातादसमयत्वाभाव; । ना. शा. १३.५९ अधिकृत्य भारती ।

# प्रवृत्तिः

प्रवृत्तयश्चेष्टापरतन्त्रेभ्यो वृत्तिभ्यो भिन्ना भवन्ति। वस्तुतो वृत्तीनां प्रभावेणापि प्रवृत्तिवैशिष्ट्यं क्वचित् प्रतिफलति। यथा राजस्थानीयः कश्चिन्नायको राजस्थानीयं वेषं धारयति। तस्य वेषः कैशिकीवृत्ति-प्रसङ्गेन विशिष्ट एव भवति। तस्मात् पृथगेव सात्वती वृत्तिप्रसङ्गेन। अत एव वृत्तिरपि प्रवृत्तिं नियमयतीति द्वयोरन्तरमवधेयम्।

पात्राणां प्रवृत्तिस्तेषां देशवयोऽवस्था-प्रतिष्ठानुरूपा प्रवर्तते। प्रवृत्त्या तेषां भाषा, वेषः, वृत्तिः, आचारः, वार्ता, रीतिश्चावधार्यन्ते।[1] प्रवृत्तिदृष्ट्या भारतस्य चतुर्भागाः प्रकल्पिताः—उत्तरं, दक्षिणं, पूर्वं, पश्चिमं च भारतम्। एतेषु सन्निविष्टा देशा आचार्येण पृथक् कृता नामिताश्च। तथापि सांस्कृतिककेन्द्राणि तेषां प्रथितनामानि सन्ति। यथा पश्चिमभारतस्य अवन्ती। तत्रत्या प्रवृत्तिः आवन्तकी।[2] पूर्वभारतस्योड्रमागधी[3] उत्तरभारतस्य पाञ्चालमध्यमा।[4] दक्षिणापथस्य दाक्षिणात्या प्रवृत्तिः।

भरतानुसारेण पृथिव्यां नानादेश-वेषभाषाचारवार्ताः ख्यापयतीति प्रवृत्तिः। अर्थात् पात्रस्य प्रवृत्तयः तस्य सज्जा (वेषालङ्कार-प्रसाधनादीनि)—समुदाचारभाषादि चाधिकृत्य प्रवर्तन्ते। सिंहभूपालो रसार्णवसुधाकरे भरतमतं समर्थयति तत्तद्देशोचिता भाषाक्रियावेषाः प्रवृत्तयः। वेषस्त्वस्मिन् प्रसङ्गे न केवलं वस्त्रादिकमपितु आभरणानि धनुरादिकमस्त्रशस्त्रादिकमपि बोधयति।

तत्तद्देशीया नायका रङ्गे प्रवृत्तिव्यपेक्षया वैशिष्ट्यं दर्शयन्तु। अभिनयप्रसङ्गेन प्रवृत्तिवैशिष्ट्यं सार्थकं भवतु नाम किन्तु कवीनां कृतिषु तामेव

---

१ अभिनवगुप्तानुसारेण—प्रवृत्तिः देशविशेषगता वेषभाषासमाचारवैचित्र्यप्रसिद्धिः उच्यते। ना. शा. १३.३८ अधिकृत्यभारती।

२. ना. शा. १३.४१–४२ तत्र सात्वती-कैशिकी वृत्ती।

३ तत्र भारत्यारभट्योर्योग। ना. शा. १३.३७ अधिकृत्य भारती।

४ तत्र सात्वती, आरभटी च वृत्ती ना. शा. १३.४०।

शौरसेनीं प्राकृतभाषां मालविकाग्निमित्र आवान्तिको विदूषको वदति, यामभिज्ञानशाकुन्तले हस्तिनापुरीयो विदूषकोऽभिज्ञानशाकुन्तले वदति।[1] एकस्मिन्नेव श्वासे पात्र शौरसेन्या गद्यं महाराष्ट्र्या पद्यं वदति इत्यपि देशविचारं न्यूनयति।

### वयोऽधीना प्रवृत्तिः

बालाना युवकानां वृद्धाना च वेषास्तु परस्परं भिन्ना भवन्ति। भाषा अपि तेषां विभिन्नाः स्यु। नाटकेषु बालकाः प्राकृतं वदन्ति। यथाभिज्ञाने भरतः मृच्छकटिके रोहसेनश्च प्राकृतं वदत।

### कर्माधीना प्रवृत्तिः

स्त्रियः साधारणतः प्राकृत वदन्ति, किन्तु श्रेष्ठकर्म तासां मुखादपि संस्कृतेन वर्ण्यते। पञ्चरात्रे प्राकृतं वदन्ती बृहन्नला विराटेश्वरेणादिश्यते—कर्जं स्वित कर्म। संस्कृतमभिधीयताम्। अन्यच्च—युद्धार्थमन्यो वेषो भवति, विहारार्थं तु विशिष्ट एव वेष

### औदार्याधीना प्रवृत्तिः

मृच्छकटिके चन्दनकः साधारणतः प्राकृतभाषी वर्तते किन्तु 'अभय शरणागतस्येति वाक्य भावसदाशयं संस्कृतेन वदति।

### पद्याधीना प्रवृत्तिः

मृच्छकटिके वसन्तसेना साधारणतः प्राकृतं वदति किन्तु पद्यं सा संस्कृतेन वदति सर्वत्र।

### अवस्थाधीना प्रवृत्तिः

अवस्था तु भावं रसं च द्योतयति। अन्यत्र अवस्था दर्शव। यथा उन्मत्तो यौगन्धरायणः प्रतिज्ञायौगन्धरायणे प्राकृत वदति। स्वभावतः कृतकपात्राणा वेषभूषादिकं विपर्ययेण विशिष्यते। वियोगापन्ना शकुन्तला एकवेणीधरास्ति ऽभिज्ञाने सप्तमाङ्के।

---

१. 'येषु देशेषु या कार्या प्रवृत्ति परिकीर्तिता। ना. शा. १३ ५६। इति देशगतभाषा विषयका नियमा संशोधनमर्हन्ति।

अभिनवगुप्तानुसारेण कैशिकी तु दक्षिणात्याना विशेष इति। एतदनुसृत्योत्तर-भारतीयेषु नाटकेषु कैशिकीवृत्ति प्राधान्य न भजेत। किन्त्वभिज्ञाने उत्तरभारतीये नाटके कैशिकी अनुत्तमा विलसति।

### रूढ्यधीना प्रवृत्तिः

किमपि पात्रं गद्यं शौरसेनी-प्राकृतेन पद्यं च महाराष्ट्रीप्राकृतेन वदति। यथा कर्पूरमञ्जर्याम्। भाषाविषयकेयं प्रवृत्तिर्देशाश्रया नास्ति। अत्र रूढिरेव भाषावैभिन्न्यकारणं वर्तते।

### स्थानाधीना प्रवृत्तिः

स्थानानि विशिष्टविभूत्यधिष्ठानविशिष्टानि सन्ति। अत एव समादरमर्हन्ति। यथा अभिज्ञानशाकुन्तले कण्वाधिष्ठितमाश्रमं प्रविशन् राजा विनीतवेषो भवति।[1]

### प्रयोजनाधीना प्रवृत्तिः

अभिज्ञानशाकुन्तले शकुन्तला पतिगृहागमनाय विशिष्टं वेषाभरणादि धारयतीति नाटकेऽस्मिन् चतुर्थेऽङ्के सम्यग्वर्णितम्।

### आश्रमाधीना प्रवृत्तिः

ब्रह्मचारिगृहस्थादीनां वेषः तेषामाश्रमोचितो भवति। यथा कुमारसम्भवे-अजिनाषाढधरो जटिलः शिवो मौञ्जीधारिणी, वल्कलबन्धिनी च पार्वती। अभिज्ञाने च पिनद्धवल्कला शकुन्तला। तत्रैव पञ्चमाङ्के शार्ङ्गरव —'जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव।'

### व्यवसायाधीना प्रवृत्तिः

व्यावसायिकानां जनानां स्वव्यवसायानुरूपं भाषावेषादिकं भवति। यथाभिज्ञाने मत्स्यजीविनो वेषादि भाषा च। हर्षचरिते पुनर्वार्ताहरस्य चीरचीरिकादि वेषविन्यासक्रमेण।

### जात्यधीना प्रवृत्ति.

तद्यथा महाभारते प्रोक्तम्—ब्राह्मणस्य हृदये मधु भवति, जिह्वायां च क्षुरः इति।[2]

### देशाधीना प्रवृत्तिः

तद्यथा मृच्छकटिके चन्दनको प्रमाणयति—वयं दाक्षिणात्या अव्यक्तभाषिणो म्लेच्छजातीनामनेकदेशभाषाभिज्ञा यथेष्टं मन्त्रयाम दृष्टो दृष्टा वा आर्यः-आर्या वा।

---

१ दुष्यन्त.—(अवतीर्य) सूत, विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम। इदं तावद् गृह्यताम्। (सूतस्याभरणानि धनुश्चोपनीय)।

२. शृङ्गारप्रकाशे जातिरन्यथा परिभाषिता द्वादशे प्रकाशे।

तत्तद्देशीया नायका रङ्गे प्रवृत्तिव्यपेक्षया वैशिष्ट्यं दर्शयन्तु। अभिनय-प्रसङ्गेन प्रवृत्तिवैशिष्ट्य भरतेन सूचितम् वृत्तिप्रवृत्त्यो सम्बन्धः —

येषु देशेषु या कार्या प्रवृत्तिः परिकीर्तिता।
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञाः प्रयोजयेत् ॥ १३.५५

लिङ्गाधीना प्रवृत्तिः

तद्यथा कालिदासोऽभिज्ञानशाकुन्तले दुष्यन्तमुखेन—'स्त्रीणामशिक्षित-पटुत्वम्' इत्यादि।

मैत्राधीना प्रवृत्तिः

शृङ्गारप्रकाशे द्वादशप्रकाश इयं प्रवृत्ति साधनमिति हेतोर्भवतीति निम्नोदाहरेण निरूपिता—

वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणं
हस्तस्वस्तिकदानमंशुकविधिर्मातुद्रयो मण्डनम्।
उत्तंसः शितिकण्ठपिच्छलतिकावेषोऽयमल्पैर्दिनैः
यस्यारातिवधूजनेन शबरीसंवासत शिक्षितः॥

अत्र शबरीसंवासतो वेषविशेषः। शबरीसंवास एव मैत्रम्। मैत्रं तु मैत्रो मित्रवर्गो वा।[1]

भोज. चतुर्विंशति प्रवृत्तिहेतून् लक्षयते—

देशः, कालः, पात्रम्, वय, अवस्था, शक्ति साधनम्, अभिप्रायः, व्यत्यासः, विपरिणाम., निमित्तम्, अभिगमः, संग्रामः विहार, उपहारः, छद्म, छद्म, आश्रमः, जातिः, व्यक्ति, विभवः।[2]

प्रवृत्ति विज्ञाय प्रेक्षकस्तस्या हेतुमनुमाति। अर्थात् कस्यचित्पात्रस्य वेषं दृष्ट्वा तस्य देशः, वयः, व्यवसाय., अवस्था, शक्ति, कार्यार्थं, जातिराश्रम इत्यादि ज्ञातुं शक्यन्ते।

वृत्तिवद् प्रवृत्त्यनुसारेण नायकादीनां वैशिष्ट्य-चित्रणेन नाटकानां नाट्यानां च रमणीयता सोत्कर्षं विलसति।

---

१. प्रो० राघवन् 'Bhoja's Sr̥ṅgāra Prakāśa नामके ग्रन्थे साधन-व्याख्याने लिखति—Sādhana seems to be the decorative material available इयं व्याख्या चिन्त्यंवास्ति। साधनं तु मैत्र, मित्राणां समवायः, मैत्री चेति Apte महोदयस्य मानियरविलियम्स महोदयस्य च कोशयो

२. एतेषु व्यत्यासः 'आभरणधारणे विपर्ययं व्यनक्ति। विपरिणामस्तु आभरणीकरण-मेव। अभिगमस्त्वभिसरणमेव।

## पूर्वरङ्गः, प्रस्तावना, नान्दी च

रङ्गस्तु कथासम्बन्धिनाट्याभिनयः। तेन प्रेक्षकाणां रञ्जनमभीष्टम्।[1] नाट्यारम्भात् प्राक् तस्य भूमिका नानाविधिना वाद्य-गीत-नृत्य-पाठ्य-विलासेन सर्ववैचित्र्यमुपादीयते। अस्या भूमिकायाः स्वरूपं चतुर्विधं वर्तते—

(१) नाट्योपयोगिनां भाण्डानां वादक-गायक-नर्तक-पाठकानां च यथास्थानं सन्निवेशनं तेषां नाट्यविषयकः पूर्वाभ्यासश्च।[2]

(२) भाविनाट्यस्य विघ्नोपशान्तये देवतपूजनं, देवानां परितोषणं च।[3]

(३) नाटकस्य तस्य कर्तुर्नाट्यसभायास्तस्याध्यक्षस्य तदवसरस्य च प्रशंसनं नाटकीयानां विवरणं च।[4]

(४) भाविकाव्यार्थनाट्यस्य बीजाधानञ्च। समस्तः पूर्वरङ्गस्तस्य गर्भो यस्मान्नाट्यं जायते वर्धते च।[5]

इदं यावत् पूर्वरङ्ग इति भरतेन कथितम्—

> प्रस्ताव्यैवं तु निष्क्रामेत् काव्यप्रस्तावकस्ततः।
> एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि॥ ५.१६९

अत एव पूर्वरङ्गानन्तरं नाट्यारम्भः।

---

१. रज्यतेऽनेनेति रङ्गो नाट्यम्। ना. शा. १ १३१ भारती।

२ प्रत्याहारावतरणारम्भाश्रावणा-वक्त्रपाणि-परिघट्टनासङ्घोटना-शारित-नामकानि पूर्वरङ्गाङ्गानि क्रमशः प्रवर्त्यन्ते। एतेषां पूर्वगानत्वमुपपेयम्।

३. आश्रावणया दानवाः, परिघट्टनया राक्षसाः, सङ्घट्टनया गुह्यकाः, मार्गासारितेन यक्षा इति निर्गीतकेन, वर्धमानेन रुद्रः, उत्थापनेन, ब्रह्मा, परिवर्तनेन लोकपालाः, नान्द्या चन्द्रमाः, अवकृष्टया नागाः पितरश्च रङ्गद्वारेण विष्णुः, चार्या उमा, महाचार्या भूतगणा इति गीतकेन पूर्वरङ्गेण प्रीयन्ते।

४. चार्यां कविनाम कीर्तनम्, त्रिगतेन कथानिका, प्ररोचनया काव्यप्रख्यापनं च विधीयन्ते। ना. शा. ५ १६१-१६२, १३४, २८, २९।

५ इदमामुखं प्रस्तावना वा प्रथितमेव। पूर्वरङ्गस्तु प्रयोगस्य गर्भस्थानीयः।
ना. शा. १३ ३७ अभिनवस्य भारती।

## पूर्वरङ्गीया प्रस्तावना

पूर्वरङ्गस्य सर्वाण्यङ्गानि नाट्यकथया वासितानि भवन्ति, नाटकस्य तस्य कर्तुश्च प्रशंसनं प्रस्तावना रूपेण कतिपयपूर्वरङ्गाङ्गेषु सविशेषं भवति। तद्यथा भारतीये नाट्यशास्त्रे।

चारी

कुर्यादनन्तरं चारीं देवब्राह्मणशंसिनीम्। ५.१६४
प्रसाद्य रङ्गं विधिवत् कवेर्नाम च कीर्तयेत्॥ ५.१६५

अत्र कविनामकीर्तनम्

त्रिगतम्

विदूषकस्त्वेकपदां सूत्रधारस्मितावहाम्।
असम्बद्धकथाप्रायां कुर्यात् कथानिकां ततः॥ ५.११४
विदूषकः सूत्रधारस्तथा वै पारिपार्श्वकः।
यत्र कुर्वन्ति सञ्जल्पं तच्चापि त्रिगतं मतम्॥ ५.२७

अभिनवगुप्तोऽत्र स्पष्टयति - सजल्पो भविष्यन्नाटकादिविषयः। स एव काव्योपक्षेपस्त्रिषु समायत्तत्वात् त्रिगतशब्देनोक्तः।

प्ररोचना

उपक्षेपेण काव्यस्य हेतु युक्तिसमाश्रया।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना॥ ५.३६
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना॥ २०.२

काव्योपक्षेपो नाटकीया प्रस्तावनामत्र निर्दिशति।

उपर्युक्तपूर्वरंगीया प्रस्तावना चारीत्रिगतप्ररोचनाद्वारेण तु विशिष्टैव। सामान्या प्रस्तावनापि शेषेषु पूर्वरंगाङ्गेषु व्यञ्जनाद्वारेण विलसत्येवेति सम्बोधयत्यभिनवगुप्त.। तद्यथा—"उत्थापनाङ्ग–विवरणे"।

अत्र च वैचित्र्यार्थं समुचितमात्रमित्यादि प्रवृत्तिमपि भाविरूपकोचितं काव्यमपि पठ्यमानं केचिदिच्छन्ति। तथा हि सति "पाठ्यगेयकृतैस्तथा" इति न संकोचितं भविष्यति। युक्त चैतत्। तथ हि रमणीयाद्युपकरणभूत-शयन-विरचनादौ प्रतिपादुकस्तम्भयूपयस्त्रादिष्वपि तदुचितनायक-युगलादिप्राय-विचित्रादियोगो युद्धोचित सन्नाहकद्भुटादौ च कातरजनभयभावन नृसिंहगरुडा-

१. ना० शा० ५.८

दिरचनकृतयोगस्तथैव ह्यतिरमणीये नाट्ये भविष्यति, यदुपरञ्जकवर्गढौकनादौ। एतदपि सुकुमारतदुत्तगीतपाठ्याभिनययोगेनैव कार्यम् ।[1]

रङ्गद्वारनामके पूर्वरङ्गाङ्गे नाट्योत्थापन क्रियते ।[2] तदपि प्रस्तावनैव ।

अत एव काव्योपक्षेपात्मिकी प्ररोचनान्ता प्रस्तावनेयम् । अपरतः सूत्रधारे विनिर्गते काव्यस्य स्थापनामुखीय प्रस्तावनाद्वारेण क्रियते ।[3]

पूर्वरङ्गीया प्रस्तावना सूत्रधारेण विधीयते । नान्दी पाठानन्तरं सूत्रधारो निष्क्रामति । तस्य स्थाने स्थापक प्रविशति । ध्रुवाया प्रभृति प्ररोचनान्ते पूर्वरङ्गीय-प्रस्तावना विदधाति ।[4]

धारीतः प्ररोचनां यावत् सामान्यप्रस्तावना भवति । तदनन्तरं विशिष्ट-प्रस्तावनामुखेन सम्पाद्यते ॥

## आमुखीया प्रस्तावना

आमुखीया प्रस्तावना तु आमुखमित्यभिधीयते । भरतानुसारेणैव काव्य-प्रस्थापनाश्रया प्रस्तावनास्ति । इय काव्यप्रस्तावकेन (स्थापकेन) सम्पाद्यते[5] ।

उद्घात्यक-कथोद्घात-प्रयोगातिशय-प्रवृत्तकावलगितानीति वीथ्यङ्गेषु किमप्येकमप्यवलम्ब्यामुख प्रस्तावना वा विलसति ।[6]

अभिनवगुप्तानुसारेण—उद्घात्यकमवलगितं च भाविकाव्यार्थप्रस्तावनेति ।[7]

आमुखीया प्रस्तावना स्थापकेन सम्पाद्यते । वस्तुत. स पूर्वरङ्गस्य नान्द्या अनन्तर प्ररोचना यावत् सर्वाणि अङ्गानि विधत्ते ।[8]

---

१ ना० शा० ५ २२ अधिकृत्याभिनवभारती ।

२. उत्थापनाङ्गे सामान्येन नाट्यमुत्थापितम् । रङ्गद्वारे रूपकविशेषेण । रङ्गद्वारमना-ग्रेय भागङ्गाभिनयात्मकम् । ना० शा० ५ २६

३. पूर्वरङ्ग विधायादौ सूत्रधारे विनिर्गते ।
तद्वदपर. कश्चित् काव्यार्थं स्थापयेन्नट. ॥—दशरूपक ३-२
उपक्षेप. सक्षेपेण व्यञ्जनया वा भवति । स्थापना विस्तरेण पदार्थेन क्रियते ।

४. ना० शा० ५ १५२—१६१ ।    ५ ना० शा० ५ १६६—१६९ ।

६. उद्घात्यक: कथोद्घात प्रयोगातिशयस्तथा ।
प्रवृत्तकावलगिते पञ्चाङ्गान्यामुखस्य तु ॥ २०.३३
एषामन्यतम श्लिष्ट योजयित्वार्थयुक्तिभि ।
पात्रग्रन्थैरसम्बाध प्रकुर्यादामुख तत ॥२०.३७

७. ना० शा० २०.२० अधिकृत्य भारती ।    ८. ना० शा० ५.१६६–१६९ ।

पूर्वरङ्गस्तु महासामान्यवचनानुसारेणामुख यावत्, मध्यमसामान्यवचनेन प्ररोचनां यावद, विशिष्टवचनेन च महाचारी यावद् विस्तीर्णो ज्ञेय ।

पूर्वरङ्गीय-प्रस्तावनाया रचयिता स्थापको भवति ।[1] आमुखीय-प्रस्तावना कविना निबध्यते ।[2] पूर्वरंगीया प्रस्तावना सामान्या प्रस्तावना भवति, आमुखीया प्रस्तावना विशिष्टैव ।

पूर्वरङ्गीय-प्रस्तावनायामष्टौविधा चर्चा विद्यते—

(१) प्रयोगाभिनयस्य देशकालौ[3] (२) प्रेक्षक-परिषत्प्रशंसा[4] (३) कवि-प्रशंसा[5] (४) नाट्यप्रबन्ध-प्रशंसा ।[6] (५) सूत्रधाराय कविना प्रयोगार्थं कृति-समर्पणम् ।[7] (६) कविभी राज्ञे नाटकस्योपायनीकरणम् राज्ञाश्च तस्याभिनयाय सूत्रधारस्याभ्यर्थनम्[8] (७) सूत्रधारस्य प्रयोगसाफल्यचिन्ता[9] (८) नाटकीयानां मिथः स्पर्धा[10] (९) पात्रक्लृप्ति.[11] (१०) नाट्यकथा-प्रतिरूपिणी कल्पितकथा[12] च । आमुखीयप्रस्तावनया कथामुखमाक्षिप्यते ।

## नान्दी

नाट्यशास्त्रे प्रथमनाट्यप्रयोगस्येदृशं वर्णनं विद्यते—

आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥५.२४

---

१. पूर्वरङ्गाङ्गेभ्यः कविरुदासीन । स्थापक एव स्वतन्त्रो निर्माता । ना० शा० ५ १०८ अधिकृत्य भारती । अन्यत्रापि
तत्र प्रस्तावना न तावद् रूपकाङ्गम् तत्कृतव्यापारतयेतिवृत्तानुप्रवेशात् । ना० शा० १९.६६ अधिकृत्य भारती ।

२ एवं च यदा स्थापकोऽपि सूत्रधारगुणाकारो रामादिवदेव प्रयुज्यते, तदेव कविकृतमामुखं भवति । ना० शा० २०.३१ अधिकृत्य भारती ।

३. प्रियदर्शिकायाम्, कुशकुमुद्वतीये । ४. प्रियदर्शिकायाम्, नलचरिते ।

५. मृच्छकटिके अभिज्ञाने प्रियदर्शिकायाम्, तापसवत्सराजे, नलचरिते, अद्भुत दर्पणे, कुशकुमुद्वतीये ।

६. प्रियदर्शिकायाम् ।

७. कंसवधे, कुशकुमुद्वतीये, कृष्णभक्तिचन्द्रिकायाम् ।

८. धर्मविजये, कंसवधे, सेवन्तिकापरिणये ।

९. अभिज्ञानशाकुन्तले, कंसवधे । १०. रघुनाथविलासे ।

११. तापसवत्सराजे, नलचरिते, मदनभूषणभाणे, कान्तिमतीशाहराजीये, अभिनवराघवे ।

१२. नागानन्दे ।

पितामहः—महानयं प्रयोगस्य समयः प्रत्युपस्थितः ।
अयं ध्वजमहः श्रीमान् महेन्द्रस्य प्रवर्तते ॥
अत्रेदानीमयं वेदो नाट्यसंज्ञः प्रयुज्यताम् ।
भरतः— ततस्तस्मिन् ध्वजमहे निहतासुरदानवे ।
प्रहृष्टामरसंकीर्णे महेन्द्रविजयोत्सवे ।
पूर्वं कृता मया नान्दी ह्याशीर्वचन-संयुता ॥१.५४—५६

अनेन प्रकरणेनेदं स्पष्टमेव यत् तस्मिन्नवसरे नान्दी 'आशीर्वाद-संयुता' कृता ।[1] तत प्राक् पुराणतर रूप नान्द्याः किंविधमासीदिति भरतेन नाट्य-शास्त्रेऽन्यत्र दर्शितम्—

आवाहे च विवाहे च यज्ञे नृपतिमंगले ।
नान्दीशब्दमुपश्रुत्य हिंस्रा नश्यन्ति चैव हि ॥
पाठ्य नाट्यं तथा गेयं चित्रवादित्रमेव च ।
वेदमन्त्रार्थवचनैः समं ह्येतद् भविष्यति ॥ ३६.२४, २५

अनेन स्पष्टं प्रतिभाति यत् पूर्वं नान्द्या पाठ्य नाट्य गेयं, वादित्रं चासन् ।

पुरातनकालात् प्रचरितायाः नान्द्याः भेरी तूर्यनिर्घोषस्य प्राधान्यमासीत् । सेयं नान्दी भरतेन साशीर्वादा कृता नाट्यप्रयोगार्थम् । कोशेषु नान्दी तु तूर्यघोषोऽपि बोधिता ।[2] रंगराजानुसारेण एकदा द्वादशमृदङ्गघोषो नान्दी । काव्यार्थ-प्रयोगात् पूर्वमेव पूर्वरङ्गाङ्गानीति बहुविध नृत्तगीत-नाट्य-पाठ्यात्मक मांगलिकं कार्यजातं भरतेन प्रवर्तितम् । तेषु नान्दी सर्वोत्कृष्टं स्थानं भजते स्वकीयेनाशीर्वाद-रूपेण मांगल्य-वैपुल्येन । तद्यथा—

नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा ।
जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च ॥
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ।
प्रशास्त्विमां महाराजः पृथिवीं च ससागराम् ॥
राष्ट्रं प्रवर्धतां चैव रङ्गस्याशा समृद्ध्यतु ।
प्रेक्षाकर्तुर्महान् धर्मो भवतु ब्रह्मभाषितः ॥

---

१. अन्यत्रापि नाट्यशास्त्रे भरत स्पष्टयति—यन्नाट्यार्थमाशीर्वादो नान्द्या योजितः । तद्यथा—

आशीर्वचन-संयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥१.२४

२. शब्दकल्पद्रुमानुसारेण नान्दी तु भेरी । मानियर-विलियम्स-महोदयस्य Sanskrit-English-Dictionary नामके कोशे नान्दी तु द्वादशतूर्यनिर्घोषोऽस्ति ।

काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥ ५.१०५-१०८

अभिनवगुप्तोऽत्र सङ्केतयति—नान्दी पठति—नमोऽस्त्वित्यादि देवता इत्यन्तम् ।

इय नान्दी साधारण्येन सर्वेषां रूपकाणाम्प्रयोगात्प्राक् पूर्वरङ्गेषु योजनीया सूत्रधारेण । वस्तुतः सर्वरूपकोचितेय नान्दी ।

नान्दीश्लोको वा रङ्गद्वारं वा

भरतानुसारेण 'नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभ तथा' इत्यारभ्य 'इज्यया चानया नित्य प्रीयन्ता देवता' इति यावत् नान्दी विलसति । अत्र प्रश्न समुदेति—'या सृष्टिः स्रष्टुराद्या इत्यादि अभिज्ञानशाकुन्तले, वेदान्तेषु यमाहुरेकपुरुषम्' इत्यादि विक्रमोर्वशीये, एकैश्वर्ये स्थितोऽपि प्रणतबहुफले' इत्यादि मालविकाग्निमित्रे नान्दी उताहो किञ्चिदपरमेव पूर्वरङ्गाङ्गम् ?

पूर्वोक्तश्लोकेषु नान्दीलक्षणस्यायोगात् नान्दी तत्र नास्तीति साहित्यदर्पणकारेण विश्वनाथेन प्रागेव समुन्मेषितम् । तद्यथा—

एतन्नान्दीति कस्यचिन्मतानुसारेणोक्तम् । वस्तुतस्तु पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम् इत्यन्ये । यदुक्तम्—

'यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्' ॥ इति

कालिदासादिमहाकविप्रबन्धेषु च—

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥

एवमादिषु नान्दीलक्षणायोगात् । उक्तञ्च रङ्गद्वारमारभ्य कविः कुर्यात्-इत्यादि । अत एव प्राक्तनपुस्तकेषु 'नान्दन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु' —इत्यादि श्लोकलिखनं दृश्यते ।[1] यच्च पश्चात् 'नान्द्यन्ते सूत्रधारः' इति

१. भासनाटकेष्वियं स्थितिर्वर्तते । यथा हि मध्यमव्यायोगे—पायाद् स वो सुरवधूहृदयावसादः
प्रतिमानाटके—सीताभवः पातु सुमन्त्रतुष्टः सुग्रीवरामः सहलक्ष्मणश्च ।
स्वप्नवासवदत्ते—उदयनवेन्दुसवर्णावासवदत्ताबलौबलस्य त्वाम् इत्यादिभ्यः प्रागेव—'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इति लिखितम् ।

लिखनं तस्यायमभिप्रायः—नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् । इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्राय ।

प्रसङ्गेऽस्मिन् रङ्गद्वारस्य लक्षण समीक्षणीयम् । भरतानुसारेण तु रङ्गद्वारमद्योविध भवति—

तत श्लोकं पठेदेक गम्भीरस्वरसंयुतम् ।
देवस्तोत्र पुरस्कृत्य यस्य पूजा प्रवर्तते ॥
राज्ञो वा यत्र भक्तिः स्यादथवा ब्रह्मणस्तवम् ।
गदित्वा जर्जरश्लोक रङ्गद्वारे च यत्स्मृतम् ॥ ५.११३, ११४
यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते ।
रङ्गद्वारमतो ज्ञेय वागङ्गाभिनयात्मकम् ॥ ५.२६

लक्षणमिद 'वेदान्तेषु यमाहुरेकपुरुषम्' इत्यादि पद्ये सम्यग्रूपेण घटते ।

नान्दी पूर्वरङ्ग-पर्याय

नाट्यशास्त्र एव नान्दी पूर्वरङ्गस्य पर्याय इति निगदितम् । तथाहि—

देवतासुरमानन्द्य यस्माल्लोकश्च नन्दति ।
तस्मादय प्रयोगस्तु नान्दीनामा भविष्यति ॥३६.२१

श्लोकेऽस्मिन् 'अय प्रयोग' तु पूर्वरङ्गस्थानीय । इति ३६.१५—श्लोके भरतेन प्राक्कलितमेव ।

शारदातनयो भावप्रकाशने पूर्वोक्तं भारतीय नान्दी–विषयकं महासामान्याधंकमभिप्रायं समर्थयति । तद्यथा—

या पूर्वरङ्गसम्बन्धाद् द्वाविंशत्यङ्गवर्तिनी ।
सभ्यानानन्दयतीत्येवं सापि नान्दीति कीर्त्यते ॥७.१००

अभिनवगुप्तोऽपि 'नान्द्यन्त इति पूर्वरङ्गान्त.' इति ब्रुवन् नान्द्या पूर्वरङ्गस्य च पर्यायः क्वचित् सम्भवतीत्येव प्रकटयति ।[1]

---

१. नान्द्यन्त इति पूर्वरङ्गान्त इति अभिनवभारती चतुर्थभागे पृ० ९०२
अपरश्च—'नान्द्याख्य मुख्य मगल सकलपूर्वरङ्गाङ्गोपलक्षणमिति केचित् । ना शा. १.२६ अधिकृत्य भारती । शारदातनय स्पष्टयतितराम्—
प्ररोचनान्तो नान्द्यन्त. प्रत्याहारादि कथ्यते । भाव प्र० ७.१२८

शारदातनयो नान्द्याः पूर्वरङ्गस्य च पर्यायमपरविघ्नमप्यधोलिखित-कारिकया प्रस्तौति—

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥

भावप्रकाशने ७.१८५.

अत एव 'नान्द्यन्ते सूत्रधारः' इति वचनमात्रेण ततः प्राक् श्लोको नान्दी न भवति। श्लोके तस्मिन् नान्दीलक्षणं घटते न वेति परीक्षणीयम्।

निष्कृष्टार्थो विलसति—

१. भरतात् प्राङ् नान्दी यज्ञविवाह-युद्धादिमाङ्गलिककार्याणां समारम्भसूचकः तूर्यनिर्घोषपुरस्सरो हर्षजननं उपक्रम आसीत्।

२. नाट्यप्रयोगे भरतेन सा नान्दी आशीर्वादश्लोकैः संयुता विहिता। इमे श्लोका एव नान्दीति प्रायोवादोऽपूर्णं सत्यम्।

३. नाट्यप्रयोगे पौरस्त्य-नान्द्याः प्रपञ्च एव पूर्वरङ्ग। स प्रपञ्चः पूर्वरङ्गस्य प्रत्याहारादि अन्तर्यवनिकाङ्गरूपेण गीतादि बहिर्यवनिकाङ्गरूपेण च विलसति।

४. नाट्यशास्त्रीय सन्दर्भेषु कतिपयस्थलेषु पूर्वरङ्गस्थानीयत्वेन पूर्वरङ्गस्य पर्यायरूपेण वा नान्दीपदं प्रयुक्तं दृश्यते।

५ नान्दीश्लोकानां सर्वोत्कृष्ट आदर्श—'नमोऽस्तु सर्वदेवेभ्यः' इत्यादि पद्यानि सन्ति।]

# अङ्कः

नाटकस्य कथावस्तुन पाञ्चविध्यमुपनयदृशा वर्त्तते—सूच्यम्, श्रव्यम्, दृश्यम्, श्रव्य-दृश्यम्, ऊह्यं च। एतेषु सूच्य तु प्रायशोऽर्थोपक्षेपकै पुरस्क्रियते। तत्र प्रवेशका विष्कम्भकाश्च प्रायोऽङ्कात् पूर्वं निवेश्यन्ते, अङ्कमध्येऽपि क्वचित्तयो-रवस्थानं दृश्यत एव, शेषा अर्थोपक्षेपका—चूलिका, अङ्कास्यम्, अङ्कावतारश्चाङ्क-भागेषु यथायोग निवेश्यन्ते।

अभिनवगुप्तानुसारेण केवल नाटकप्रकरणडिमेषु नैकाङ्का भवन्ति, अन्य-विधेषु रूपकेषु एक एवाङ्क, स्यात्।[1]

नाटकस्यारम्भ प्रायशोऽङ्कादेव प्रवर्तते। तदीय वृत्तमङ्केषु, अर्थोपक्षेप-केषु च विभक्तमेव प्रदर्श्यते। तत्रैकस्मिन्नङ्क एकदिवसपर्यन्त वृत्त ग्रहणीयम्। यदि कस्यचिदेकस्य दिनस्य वृत्तमेकस्मिन्नङ्के न समाप्यते, तर्हि तदधिक वृत्तम-पराङ्के वर्णनीयमथवा प्रवेशक-विष्कम्भकाभ्या सूचनीयमिति भारतीय विधानम्।[2] साधारणत प्रत्यवस्थमेकोऽङ्को भवेत्।[3] भरतोऽङ्क परिभाषते—

यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः। १८.१६

अभिनवगुप्तोऽङ्कं स्पष्टतम परिभाषते। तद्यथा, अवान्तरवस्तु समाप्तौ विश्रान्तये ये विच्छेदा अङ्का इति।[4]

नाटकेष्वङ्कारम्भ एव सन्धेरवस्थायाश्च प्रारम्भ प्राय स्यात्, अङ्कान्ते च

---

१. ना० शा० ( गा० ओ० सी० ) द्वितीय भागे पृष्ठम् ४३०।

२ अस्मै प्रयोजनाय नैकदिवसीया कथा एक दिवसीया प्रक्रियते। तद्यथा वेणीसंहारस्य तृतीयाङ्कस्य कथा द्रोणाचार्यस्य मरणदिवसादारभ्यते। अङ्कान्ते च दु शासनो हन्यते भीमेनेत्येत्सर्वं नैकदिवसाना वृत्तम्। तथैव बालरामायणेऽष्टमाङ्के नैकदिवसाना वृत्त वर्णितम्।

३. इतिवृत्तस्य बिन्दुसूत्रस्यूतस्य प्रारम्भाद्यवस्थापञ्चकचारिणः यदा प्रारम्भावस्था पूर्णत्वमेति तदाङ्कच्छेदो बिन्दुद्वारानुसन्धीयमानद्वितीयाङ्काभिधेयरूपो विधेयः। एव प्रयत्नाद्यवस्थाचतुष्टयेऽपि वाच्यमिति पञ्च तावदङ्का इति मुख्य. कल्प.। ना० शा० १८.१३ अधिकृत्य भारती।

४ ना० शा० १८ ११ अधिकृत्य भारती।

पुनरङ्कस्य सन्निवेशान्तो भवेत्। तत्र प्रायशः पञ्चभ्योऽप्यधिकतरा अङ्का नाटके भवन्ति।

प्रथमाङ्कात् पूर्वमामुखे विष्कम्भके, प्रथमाङ्कस्यादिभागे वा कथाप्रवेश एव पूर्ववृत्तस्य नायकादीनां भूमिकानां च परिचयो दीयते क्वचित्। यथा महावीरचरितस्यामुखे—

नटः—कृतप्रसादा पारिषदाः। किन्त्वपूर्वत्वात् प्रबन्धस्य कथाप्रवेशं समारम्भे श्रोतुमिच्छन्ति।

सूत्रधारः—स तु भगवान् दीक्षिष्यमाणः कौशिको विश्वामित्र इत्यारभ्य।

कुशध्वजो नाम स एष राजा सीतोर्मिलाभ्यां सहितोऽभ्युपैति।

इति यावत्।

विष्कम्भके—मालतीमाधवस्य प्रथमाङ्कात् प्राग् विष्कम्भके कामन्दक्यवलोकितयोः संवादेन नायकानां पूर्ववृत्तस्य च परिचयः।

प्रथमाङ्कस्यादौ—यथा मुद्राराक्षसे चाणक्यस्यैकोक्त्या भूमिकायाः पूर्ववृत्तस्य च परिचयः।

दशरूपके निगदितम्—'प्रत्यक्षनेतृचरितोऽङ्कः'। ३.३०

अत्र नेता तु मध्यमसामान्यवचनमेव मुख्यनायक-नायिका-प्रतिनायकोपनायकादीन् व्यनक्ति। उत्तररामचरितस्य चतुर्थाङ्कस्यादौ जनकः, कौशल्या, अरुन्धती च भूमिकाः वर्तन्ते। नैते विशिष्टवचनेन नायकाः सन्ति। अङ्के क्वचिदनायकजना एव भवन्ति। यथा मृच्छकटिकस्य द्वितीयाङ्के बहुलांशे केवलं द्यूतकरा एव भूमिकाः।

भरतः समर्थयति—

ये नायका निगदितास्तेषां प्रत्यक्षचरितसम्भोगः।
नानावस्थोपेतः कार्यस्त्वङ्कोऽविकृष्टस्तु[1]॥ १८.१७

किं नामाङ्के नायकानां प्रत्यक्षमेव चरितं भवति, उताहो चरितं श्रव्यमपि अङ्के स्यात्। तत्र निर्विघ्नं सूच्यं श्रव्यं नाट्यनिर्देशेनापि दृश्यं च वर्तत एवेत्यस्माकं मतम्। तथा हि—वेणीसंहारस्य चतुर्थाङ्के सुन्दरको दुर्योधनं कथयति यद् वृषसेनार्जुनयोर्घोरं युद्धमभवत्। तत्र वृषसेनो मृत इति श्रव्यमेव।

---

१. अङ्कस्तावत् कार्यस्य (Act) पर्याय एव सञ्जातः। तथा अभिनवगुप्तेन चर्चितम्—कार्यशब्देनाङ्क उच्यते। ना० शा० १८-८० अधिकृत्य भाष्ये।

तत्रैव प्रवेशानन्तरं प्रथम सुन्दरको युद्धमनु संग्रामभूमेः परिचयं प्रवेशकेन ददाति। तत् सूच्यमेव।[1] अन्यत्राकाशवाण्या नेपथ्येन आकाशे वेति रीत्या सूच्यं भवति।

मुद्राराक्षसे द्वितीयाङ्के राक्षसः (विराधगुप्तं प्रति)—सखे वर्णय कुसुमपुर-वृत्तान्तम्।' अतः प्रभृति अङ्कान्तं यावत् विराधस्य वक्तव्यं श्रव्यमेव। यथा वा प्रथमाङ्के तत्रैव चाणक्यः (चारं प्रति)—अङ्गुलिमुद्राधिगमं विस्तरेण श्रोतु-मिच्छामि। ततः प्रारभ्य चारवचनं यावत्। एवमेवान्येषु रूपकेष्वपि दृश्यते भरतस्य धनञ्जयस्य चैतद् विधानं न वास्तविकं यदङ्के दृश्यमेव भवति।

भरतानुसारेणाङ्कान्ते कस्यचिदर्थस्य समाप्तिः स्यात्, तस्य बीजस्य परिणतिर्जायेत। तत्रैव बिन्दुर्भवति, येनापराङ्कस्य कथा प्रवर्तते।[2]

दृश्य-विभाजनमङ्कानां मुद्रितनाटकेषु न निर्दिष्टम्, यद्यपि पुरातनकालतो-ऽङ्कानां दृश्यविभाजनमवर्तत। धर्माभ्युदय नामकमेकाङ्कं रूपकं पञ्चदृश्येषु विभक्तम्। मृच्छकटिकस्य द्वितीयेऽङ्के प्रथमदृश्ये वसन्तसेनामदनिका चेटी च सलपन्ति। द्वितीये दृश्ये संवाहकः माथुरः, द्यूतकरो दर्दुरकश्च विवदन्ति। तृतीये दृश्ये संवाहको वसन्तसेना मदनिका च सलपन्ति। तत्रैव माथुरः कालान्तरे समायाति। यथा वा वेणीसंहारस्य तृतीयोऽङ्कस्त्रिभिर्दृश्यैरधोविधं विभक्तः—

प्रथमं दृश्यम्—अङ्कारम्भादश्वत्थाम सूत-कृपाणां संवादं यावत्।

द्वितीयं दृश्यम्—कर्णदुर्योधनयोः प्रवेशानन्तरं संवादः।

तृतीयं दृश्यम्—कर्णदुर्योधनाश्वत्थामकृपाणां संवादः।

दृश्यानुसारेण केवलं पात्राणि वार्ताविषयश्च विपरिवर्तन्ते, रङ्गव्यवस्था-स्त्वङ्कान्तं यावत् समरूपा स्यात्। पात्राणां कक्ष्यापरिवर्तनं दृश्यानुसारेण-भवतु नाम। यथावश्यकं दृश्यविभाजनाय रङ्गस्य विविधकक्ष्या उपयुक्ता आसन्।

केषाञ्चिदङ्कानां नामानि नायकानामभिधानेन वस्तुनो वा संज्ञया प्रख्यापि-तानि, इति सागरनन्दिनोऽनुसन्धानम्। यथा उत्तररामचरिते छायाङ्क इति।

## पात्रसंख्या

रङ्गे द्विविधानि पात्राणि भवन्ति—कार्यव्यापृताः, कार्यरहिताश्च। कार्यरहिताः साधारणजना रङ्गपीठे प्रतीक्षन्ते पुनः कार्यावसरम्। रङ्गस्थ-

१. अङ्कमध्ये प्रवेशका भवन्तीति प्रागेव प्रतिपादितम्।

२. यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः॥ १८.३८

पात्राणामधिकतमा संख्या विंशतिप्राया महावीरचरितस्य सप्तमेऽङ्के[1] वर्तते तेषां सहावस्थानं चास्ति ।

अभिनवगुप्तो नाटकस्याङ्के पात्रसंख्यां विवेचयति । तद्यथा—यदि च प्रत्यक्षप्रयोज्यं तत्र पञ्चकार्यपुरुषाः । यदि वा चत्वारः प्रकरीपताकादिरूपाः तेषां च परिवारस्वभावात्तावन्त एवेति । यदि प्रकर्षस्तदा दशाष्टौ वा रङ्गे प्रविष्टा भवन्ति । ततोऽधिकेषु त्वभिनयचतुष्टय सम्यगविभावनीयं स्यात् । देवयात्रा परिदृश्यमानजनसमाजवत् इति भरतस्याधोलिखितकारिकाया व्याख्या–

ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः । १८.४१

अङ्के तावत् त्रीणि चत्वारि वा पात्राणि भवेयुरिति धनञ्जयनिर्देशः । तद्यथा, 'पात्रैस्त्रिचतुरैरङ्कम्' इत्यादि ।[2] इमे कार्यपुरुषाः । एषां व्यापाराः फलोन्मुखा महत्त्वपूर्णाः । व्यक्तिरिक्ता एव भवन्ति शोभार्थं भृत्यादयः । अभिज्ञाने द्वितीयाङ्के षष्ठाङ्के च दुष्यन्तस्य यवन्यः ।

भाणे त्वेकमेव पात्र भवति । मुद्राराक्षसस्य षष्ठेऽङ्के राक्षसः पुरुषश्चेति पात्रद्वय न्यूनतमं वर्तते । तत्र न तृतीयं पात्रं वर्तते ।

अङ्कस्तु आसन्ननायको भवेदिति धनंजयमतम् ।[3]

अत्र नायक इति मध्यम-सामान्य-वचनम् । नायकेन प्रधाननायकः, पताका-नायकः, प्रतिनायकाः, नायिका वा ग्रहणीया । भरतानुसारेण तु—

नायकदेवीगुरुजनपुरोहितामात्यसार्थवाहानाम् ।
नैकरसान्तरविहितो ह्यङ्क इति स वेदितव्यः ॥ १८.१८

एतां कारिका विशदयन्नभिनवगुप्ता व्याख्यति—नायका मुख्याः पताकादयो देव्यो महादेवी-भोगिनीप्रभृतयः, गुरुजनो मातृपितृभ्रोत्रियाचार्यादिः, सार्थवाहोऽत्र सेनापतिः इतिवृत्तवशाद् वणिगेव वा । एषां सम्बन्धी अङ्क एतदर्थाभिधायकः ।

प्रकारम्भे क्वचिदेतान् विहाय केवलमन्ये पुरुषाः कथाप्रवेशं निवेदयितुं कञ्चित्कालं भवन्तु नाम, किन्तु साधारणतोऽङ्कस्याधिकांशभागे नायका वर्तन्ते एव, यतो हि नाम तेषामेव कथा सभ्यानामाकर्षणं विदध्यात् ।

---

१. भासनाटकस्य बहुभूमिकविशेषणं प्रथितमेव । तत्र बालचरितनाटके ३७ पात्राणि ।

२. दश० ३.३७

३. एतत् भरतस्याधोलिखित-कारिकामनुहरति—

ये नायका निगदितास्तेषां प्रत्यक्षचरितसम्भोगः ।
नानावस्थोपेतः कार्यस्त्वङ्कोऽविप्रकृष्टस्तु ॥ १८.१७

अङ्कस्य केन्द्रीभूतनायकोऽङ्कस्य मध्ये निष्क्रामेत्। अनायका एवान्यानि साधारणपात्राणि प्रविशन्ति निष्कामन्ति च कार्यापेक्षया, किन्तु मुख्यनायकस्यायमेव महिमा यद् रङ्गाद् बहिस्तस्य कार्यं सम्प्रति न विद्यते।[1]

अङ्कान्ते सर्वाणि पात्राणि यवनिकातिरोधानेन निष्क्रामन्ति।[2]

## अङ्कान्तविधानम्

अङ्कान्तविधानं तु सर्वैचित्र्यं कल्प्यते प्रायशः। अवान्तरकार्यस्य समापनेन स्वाभाविको भवति अङ्कान्त। नैष सर्वत्र सम्भवः। अत एव अङ्कान्ताय स्वाभाविकीकृतयोजनाद्योविधाः सन्ति—

१. मध्याह्नः, सायाह्न प्रभातकालो वा समायात इति सूचनया। यथा स्वप्नवासवदत्ते प्रथमाङ्कान्त –खगा वासोपेता सलिलमवगाढो मुनिजन' इत्यनेन।

२. नायकस्य कार्यार्थमन्यत्रगमनापेक्षया। यथा, प्रतिज्ञायौगन्धरायणे प्रथमाङ्कान्तः प्रतिहारी–आर्यं भर्तृमाताह इच्छामि मे पुत्रक प्रेक्षितुमिति।

३. नायकेन सम्पादनीयस्यापरस्य कस्यचित् कार्यस्य सूचनया। यथा स्वप्नस्य चतुर्थाङ्कान्तः —

विदूषको राजानं निवेदयति—उचित तत्र भवतो मगधराजस्यापराह्णकाले भवन्तोऽग्रत. कृत्वा सुहृज्जन-दर्शनम्। तदुत्तिष्ठतु तावद् भवान्।

४. नायकस्य किंकर्तव्यविमूढत्वेन कार्यविश्रान्त्या। यथाभिज्ञाने पञ्चमाङ्कान्त राजा—वेत्रवति, पर्याकुलोस्मि। शयनभूमिमार्गमादेशय। समन्वितरूपेण नैकविधानैरपि केचिदङ्काः समाप्तिं नीयन्ते।

## रसयोजना

भरतस्तु नाटकेऽङ्को नैकरसान्तरविहीनो भवेदिति निर्दिशति।[3] अर्थादङ्के बहवो रसा भवेयु। तत्रैवाभिनवगुप्तो व्याचष्टे देवीयोगे शृङ्गारो नायकयोगे वीर इत्येवमन्यदुत्प्रेक्ष्यम्। अन्यत्र भरत समर्थयति—

अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान्॥ १८.१४
नृपतीना यच्चरितं नानारसभावचेष्टित बहुधा॥ १८.१२

सर्वेषु रूपकेषु अन्तिमाङ्के निर्वहणेऽद्भुतरसो भवेत्।

---

१. अनायकपुरुषस्त्वविच्छिन्न एवाङ्के निष्क्रामति। तस्य सव्यपदेशनिष्क्रमणविवरणम्-नाट्यशास्त्रोक्तानुसन्धाने द्रष्टव्यम् १४१-१४५ ना शा. १८.३२ अधिकृत्य भारती।

२. ना० शा० १८ २३ अधिकृत्य भारती।

३. ना० शा० १८.१-

## कार्य-सातत्यम्

कस्मिंश्चिदङ्के तस्य कार्यकालावधौ सततं कार्य-संलग्नता नितान्तमपेक्षितैव । सर्वाणि तानि कार्याणि नायकं तेनानुबद्धांश्च नायकान् वाश्रित्य प्रवर्तेरन्नित्यामिति आदर्शो नियमो न सर्वथा प्रतिपालितः । तद्यथा मृच्छकटिकस्य द्वितीयेऽङ्के चारुदत्तः प्रधाननायकः । किन्तु तत्रैव संवाहकवृत्तं, कर्णपूरकपराक्रमश्च वर्णिते । नैतेषु प्रधानकार्यविषयको निरन्तरो विकासः । चारुदत्तस्य नामैवेतस्ततः प्रकटति । क्वचिदवान्तरकथावैचित्र्यमुद्दिश्य कार्यसातत्यमवहेलयति कविः ।

## अन्तिमेऽङ्के पूर्ववृत्तानां सारसंग्रहः

अभिनवगुप्तः समीक्षते—साररूपाश्च पदार्थाः पर्यन्ते कर्तव्याः ।[1]

अन्तिमेऽङ्के नाटकस्य शेषाङ्कानां कथोपक्षिप्यते । तद्यथाभिज्ञानशाकुन्तले—

राजा—भगवन्, इमामाज्ञाकरीं वो गान्धर्वेण विवाह-विधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत् सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढपूर्वामिमां तद्दुहितरमवगतोऽहम् । तच्चित्रमिव मे प्रतिभाति ।

मारीच—वत्स, अलमात्मापराधशङ्कया । सम्मोहोऽपि त्वय्युपपन्नः । श्रूयताम् । यदैवाप्सरस्तीर्थावतरणात् प्रत्याख्यानवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति । [redacted] चायमङ्गुलीयकदर्शनावसानः ।

शकुन्तला—.........अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां सन्दिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति ।

मारीचः—वत्स कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः ।

राजा—अत्र खलु मे वंशप्रतिष्ठा ।[2]

मारीच—यथा भाविनमेनं चक्रवर्तिनमवगच्छतु भवान् ।

---

१. ना० शा० १८.४२ अधिकृत्य भारती ।

२. अनेन वाक्येन वैखानसवचनानुगृहीतमघोविषबीजं पुनरुच्यते—पुत्रमेवं गुणोपेतं चक्रवर्तिनमाप्नुहि । १.१२

**उत्तररामचरिते**

सप्तमेऽङ्के गङ्गाया अधोवचनं रामस्याद्या प्रतिज्ञां पुरस्करोति—

इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः ।
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ॥

तदनु कुशलवयोः शस्त्रप्राप्तिर्भवति । सा तु प्रथमाङ्के चित्रदर्शनकाले रामेण प्रतिज्ञातमासीत् ।[1] अत्र पुनर्गङ्गा कथयति—

जगत्पते रामभद्र स्मर्यतामालेख्यदर्शने मां प्रत्यात्मवचनम्—सा त्वमम्ब स्नुषायामरुन्धतीव शिवानुध्यानपरा भवेति तदनृणास्मि । तथैव वसुन्धरापि तदन्वनृणा भवति ।

तृतीयाङ्के रामेण कथितमासीत्—

'अस्ति चेदानीमश्वमेधसहधर्मचारिणी मे हिरण्मयी प्रतिकृतिः ।'

एतदेव सप्तमेऽङ्के पुनरुच्यते—

अरुन्धती—जगत्पते रामभद्र

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।
हिरण्मय्याः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे ॥७.२०

तदनु—

रामलक्ष्मणौ—'दिष्ट्या तथैवैतत्' ।

इति वचनं पञ्चमषष्ठाङ्कयोर्लवकुशपरिज्ञानप्रकरणमनुहरति ।

**उद्देश्यम्**—

अन्तिमेऽङ्के शेषाङ्कानां कथाया उपक्षेपेण समग्रनाट्यकथाविलास एककाले रसोद्भावकतां यातीति महदुद्देश्यमस्या योजनायाः ।

## अंकादौ नायकस्य मनोवृत्तिः

यथा कस्यचिदङ्कस्य कथानुरूपिणी रङ्गसज्जाहार्यादिका क्रियते, तथैव प्रमुखनायकस्याङ्कादौ मानसिकस्थितेरङ्कविषयिणी पूर्वपीठिका कविना

---

१. अत्र नायको मध्यमसामान्यवचनः । तदनुसृत्य नायकस्तु प्रधाननायकः (कार्यनायकः, फलनायकश्च), तस्य नायिका, प्रतिनायकः, उपनायकः, अनुनायकश्च भवति मध्यमसामान्यवचनेन । अपरेऽपि केचिन्महत्त्वपूर्णनायकास्तत्र भवन्तु नामान्तिमेऽङ्के ।

प्रस्तूयते। तथाहि—अभिज्ञाने प्रथमाङ्के मृगयादृश्यानन्तरमाङ्किकयाया आरम्भ एव मुख्यनायकस्याङ्कोचितमानसिकस्थितिरधोविध चित्रिता—

राजा—( परिक्रम्यावलोक्य च ) इदमाश्रमद्वारम्। यावत् प्रविशामि। ( प्रविश्य, निमित्तं सूचयन् )।

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र॥

'अत्र स्फुरति च बाहुः' इत्येतस्य फलं प्रीतिसुन्दरीनायिकाफलप्राप्ति-दुष्यन्तस्य मानसे प्रतिफलति। अतः परं शकुन्तला-मिलन-प्रकरणं प्रारभ्यते। तत्र शकुन्तलाया मानसिकस्थितेः पूर्वपीठिका तस्या वचनेन अस्ति—मे सोदर-स्नेह एतेषु ( वृक्षकेषु )।

द्वितीयाङ्कस्य नायको दुष्यन्तः शकुन्तलामिलनोपायं विचिन्तयन् विदूषकं स्वमनोगतं वक्ति—

न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥२.११

चिन्तय तावत् केनापदेशेन सकृदप्याश्रमे गच्छाम।

इत्येतस्या आङ्किककथायाः कृते नायकस्य मानसिकपूर्वपीठिकाधोविधमुप-कल्पिताङ्कादौ—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते॥२.१
सर्वं तत् किल मत्परायणमहो कामः स्वतां पश्यति॥२.२

## अन्तिमेऽङ्के नायकानां सम्पातः

अभिज्ञानशाकुन्तले अन्तिमेऽङ्के

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान्।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत् समागतम्॥

एवमेव प्रायः सर्वेषु नाटकेषु अन्तिमेऽङ्के कवयः कार्यवशात् पृथग्भूतानामपि महत्त्वपूर्णपात्राणां सामग्र्यं संविधान-सौकर्येण व्यवस्थापयन्ति। अपरेष्वङ्केषु तेषां सत्या रङ्गे द्विता पञ्चधा वा भवति।

यदि नाम कश्चिन्महत्त्वपूर्णो नायको न समच्छते, स स्वयंत एव संविधानसौकर्येण।' तद्यथा

भासनाटकेषु

स्वप्नवासवदत्तस्यान्तिमेऽङ्के—

१. उदयनो नायकः

२. पद्मावती अभिनवनायिका राजपत्नी

३. यौगन्धरायण. नायकामात्य

४. आवन्तिका (वासवदत्ता) प्रथमा नायिका राजपत्नी

इति नायका क्रमश आगत्य सम्मिलन्ति। एतान् व्यतिरिच्य नास्ति कश्चिन्मध्यमसामान्यवचनानुसारेण नायकोऽवशिष्टः।

अविमारकस्यान्तिमेऽङ्के क्रमश सर्वे नायका अधोलिखिताः समायान्ति—

| | |
|---|---|
| १. कुन्तिभोजो नायिकाया पिता | ४. सुदर्शना—नायकस्य माता |
| २. सौवीरराजः नायकस्य पिता | ५. अविमारक.—नायकः |
| ३. भूतिक —कुन्तिभोजस्यामात्य | ६. कुरङ्गी—नायिका |

## अङ्कपूर्त्यर्थ-योजनाः

अङ्कस्यायामस्तु नातिदीर्घो नाति लघुर्वा भवत्विति कविना प्रयतनीयम्। यदि नाम कस्यचिदेकस्य दिनस्य कथा दीर्घा भवति, तर्हि सा कथाङ्कद्वयेन द्विधा विभज्यते। अनेन विधिना दीर्घत्वमङ्कस्यापास्तं स्यात्। लघुत्वं तु कविर्विधिद्वयेन परिहरति—

१. वर्णनात्मकश्लोकाना समावेशेन।

२. गौणत एव मुख्यकथानुपयुक्ताना संविधानकाना समावेशेन च[1]।

वर्णनयोजना

मृच्छकटिकस्य पञ्चमाङ्को दुर्दिन इति संज्ञितः। अस्मिन्नङ्के तु मुख्यकथेदम्मात्रं वर्तते यद् वसन्तसेना चारुदत्तगृहमागत्य त मिलति। एतस्य लघुकायस्य विवरणेनाङ्कोदरं न पूर्यत इति समीक्ष्य कविर्दुर्दिनस्य वर्णनानि भूयिष्ठं सन्निवेशयति। तत्र चारुदत्त उन्मत्तकाल्दुर्दिनमित्युक्त्वाङ्कारम्भ एव श्लोकषट्कं पठति। तदनु वसन्तसेनासकाशात् चेटश्चारुदत्त-समीपमायाति। विदूषकेण पूर्वमेव दत्ता वसन्तसेनाया आगमनसूचना स पुनरपि ददाति नायकाय।[2]

१ संविधानक मु मुख्यकथाधाराद्दूरस्थानपेक्षिता घटना। A strange act, An unusual occurence. V. S. Apte, Skt Eng Dictionary.

२ सर्वथानावश्यकोऽय कथांश. संविधानक-सन्धानस्योदाहरण प्रस्तौति।

तदनु वसन्तसेनायास्तस्या विटस्य चारुदत्तस्य च वर्षावर्णनमधोविद्यैः श्लोकै-र्विस्तारं लभते—

वसन्तसेना—५. १५, १६, १८, २०, २३, २५, २६, २८, ३२

विटः— ५. १३, १४, १७, १९, २१, २२, २४, २७, ३३, ३५

चारुदत्त —५. १-४, २८, ४४, ५२

त्रयस्त्रिंशत् श्लोका वर्षाभिषिक्ता विलसन्ति। प्रयोजनं तु स्पष्टमेव पञ्चमाङ्कोदरपूरणमिति।

उत्तररामचरित ईदृशी स्थितिर्विद्यते द्वितीयेऽङ्के। अत्र त्रयोदशश्लोक यावत् शम्बूकवधवृत्तान्तोऽभिहितः। तदनु त्रिंशत्तमश्लोक यावदङ्कस्या-याम दीर्घयितुं दण्डकारण्यभागा:, जनस्थानम्, महारण्यानि, गिरयः, गोदावरी, सरित्सङ्गमाश्च वर्णितानि, न वृत्तानुरोधेनापितु रामोचितमङ्कविस्तार प्रवर्तयितुमेवेयं योजना।

संविधानकयोजना

अभिज्ञानशाकुन्तलस्य चतुर्थाङ्को वर्णनात्मकैः श्लोकैरेव सर्वोत्कृष्टत्वं भजते। तत्र कथावस्तु स्वल्पमात्र एव कण्वेन शकुन्तला गौतमीशार्ङ्ग-रवशारद्वतै साधं पतिगृहं प्रति प्रस्थाप्यते इति। कालिदासोऽङ्कमिमं वर्णनेन सम्पूरयितुमधोलिखितानि मुख्यकथयासम्पृक्तानीव संविधानकानि योजयति—

१. शकुन्तलाप्रसाधनाय वनस्पतीनामाभरणादिक-प्रसाधनसामग्रीदानम्।
२. तपोवनस्थ देवतानां तरूणामाशीर्वचनम्।
३. पशुपक्षिणो वियोगेन सन्तप्यन्ते।
४. वनज्योत्स्नाया आमन्त्रणम्।
५. गर्भमन्थर-मृगवध्वा भाविप्रसव-निवेदनार्थं शकुन्तलाया' प्रार्थना।
६. श्यामाकमुष्टिपरिवर्धितस्य मृगशिशो. शकुन्तला-निवसनसञ्जनम्, तस्य समाश्वासन च।
७. नलिनीपत्रान्तरित सहचरमपश्यन्ती, चक्रवाकी आरौतीति लक्षणम्।
८. दुष्यन्ताय कण्वस्य सन्देश: ४.१७
९. शकुन्तलानुशासनम्। ४.१८
१०. कण्वस्य प्रास्थानिक-मङ्गलवचनम्।

अभिनयकालावधिर्गतिवृत्ताशकालावधिसाम्यमपेक्षते महाकवीनां सन्दर्भेषु। तद्यथाभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के सूर्योदय' प्रारभ्यते युगान्तरेऽधिरूढे रवौ समाप्ति याति च। एतत्कालानुरूपोऽभिनयः पूर्वोक्तं संविधानकबाहुल्यं विना न सम्भवेदिति तस्यौचित्यं नाट्यविधिमनुहरति।

मालविकाग्निमित्रस्य द्वितीयाङ्के मुख्यकथावस्तु तु मालविकायाः गीतनृत्या-नन्तरमेव समाप्यते किन्तु ततः परं विदूषकस्य—भवति, तिष्ठ। किमपि वो विस्मृतः क्रमभेदः। तं तावत् प्रक्ष्यामीत्यारभ्याङ्कान्तं यावत् संविधानकमङ्कोदर-पूर्त्यर्थमेव श्लिष्टम्, यतो हि नामानेन संविधानकेन विनाङ्कस्तु हीनायाम प्रतिभायात्।

उच्चकोटिकपात्राणां कृते रङ्गपीठे नाचिरमवस्थानं यथायोग्यं पदानुकूलमवेदितवर्णन-संविधानादिभिः क्रियते। तद्यथाभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के मातलिः प्रविशति रङ्गम्। स इन्द्रस्य सारथिः सन् यदि नाम तस्य सन्देशस्य श्रावणमात्रं स्वकार्यं सम्पादयेत् तर्हि मातलेरनुभावोचितः रङ्गपीठे पर्याप्तकाला-वस्थानं न भवेत्। अत एव कविरघोनिम्नमभिनवकथांशसन्निवेशोचित्यं बिभर्ति—

(१) मातलिर्विदूषकमाक्रामति।[1]
(२) राज्ञो विदूषकस्य रक्षणोपाय।
(३) विदूषकस्यार्तनाद।
(४) इन्द्रसन्देश-श्रावणम्।[2]

## कार्यस्थल्या आयामो वैविध्यं च

कस्यचिदङ्कस्य कार्याणि यदि नाम परस्परं दूरस्थेष्वपि प्रदेशेषु कृतानि सन्ति तर्हि सर्वाणि तानि परस्परं दूरस्थान्यपि स्थानानि रङ्गे दर्शनीयानि भवन्ति। स्वल्पकाल एकाहे वा दूरदूरतरं गमनं भारतीयकल्पनाजगति सम्भावितमेव। देवा देवर्षयोऽवतारपुरुषा रावणतुल्यैरादयः विमानाधिकारिणश्चैकाहे त्रिलोकमपि विचरितुं समर्थाः सन्तीति पुराणवादो नाटकादिषु काव्येषु वर्णितः। अभिज्ञान-

---

१ एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम्॥ अभि० ६ २७

२ मातलिः—अस्ति। कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः।
राजा—अस्ति। श्रुतपूर्वं मया नारदात्।
मातलिः—सख्युस्ते स किल शतक्रतोरवध्य
तस्य त्वं रणशिरसि स्मृतो निहन्ता।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति
स्तन्नैशं तिमिरमपाकरोति चन्द्रः॥ अभि० ६ ३०

शाकुन्तले दुष्यन्त इन्द्रलोकाद् मारीचाश्रमं यावद् विमानेनावगाहते। अस्मिन्नन्तराल आकाशगङ्गाप्रदेश. ग्रहनक्षत्रलोकः परिवाहवायुलोकश्च, किम्पुरुषपर्वतलोकश्च सन्ति। तत्र दैर्घ्येण विस्तारेण च महोच्छ्र्योऽपि महिमानं भजते।

अभिषेकनाटके भारतीयसमुद्रतटाल्लङ्कां यावत् प्रदेशश्चतुर्थेऽङ्के रङ्गपीठे दर्शित.। बालचरिते मथुरातो गोकुलं यावत् प्रदेशः प्रथमाङ्के रङ्गपीठपरिधौ सन्निवेशित। अन्तरालेऽस्मिन् यमुनानदी तस्या दक्षिणवामभागयोरेकयोजनं यावद् विस्तृता भूमिर्गृहीता।

वेणीसंहारस्य चतुर्थेऽङ्के समग्रं कुरुक्षेत्रमेव रङ्गपीठ वर्तते। इतोऽप्यधिक बालरामायणे दशमेऽङ्के रङ्गपीठ लङ्कातः प्रभृति हिमालयमयोध्या च यावत् सम्पूर्णं भारतमेव सङ्कलित राजशेखरेण। वस्तुत एकस्मिन्नेव रङ्गपीठेऽनेकदृश्यानां कृते बहूना स्थलीनामवस्थितिः कल्पनीया। यथा मृच्छकटिकस्य दशमेऽङ्के—

श्मशान-दृश्य तदनु महाराजप्रासाद दक्षिणेन धूताया अग्निप्रवेशदृश्यम्। प्रथमतो द्वितीयाभिगमन परिक्रमणमात्रेण सम्भवतीत्यसौ नाट्यनिर्देशेन स्पष्टमेव—

( इति सर्वे परिक्रामन्ति )

चारुदत्त. ( आकर्ण्य सहसोपसृत्य )

कार्यस्थली-वैचित्र्यम्

नाटकेषु कार्यस्थल्या महत्त्वं वर्तते। कवयो नैकशः पात्रमुख उपमानादीनि निकटस्थवस्तुभ्यो निदधाति। स्थलविशेषस्य वर्णनीयानि वस्तूनि कविर्नाटके सन्निवेशयतीति काव्यगौरवदृशा स्थली-चयने कवेरवधानं स्पृहणीयम्।[1]

नाटकीयकार्याणि त्वङ्केषु पृथक्-पृथग् गृह्यन्ते। तत्र किमपि कार्यं नायकस्य गमनागमनयोर्दीर्घत्वमपेक्षेत। यथाभिज्ञानशाकुन्तलस्य सप्तमेऽङ्के दुष्यन्तो महेन्द्रलोकाद् मारीचाश्रमं यावत् उड्डीयते। सहस्रक्रोशपर्यन्ता यात्रा वर्णनवैचित्र्येण सामाजिकाननुरञ्जयत्येव। अथ दीर्घायामो यात्राया. सर्वश. कार्यस्थली नास्त्येव। अङ्केऽस्मिन् मुख्यं कार्यं शकुन्तलया दुष्यन्तस्य मिलनमेव

---

१. गङ्गायमुना-सङ्गमेऽवस्थिता प्रतिष्ठानपुरी कार्यस्थली विद्यते विक्रमोर्वशीयस्य तृतीयाङ्कस्य। तत्राधोविधरलोक. स्थानबलेन प्रवर्तते—

न तथा नन्दयसि मा सख्या विरहिता तया।
सङ्गमे दृष्टपूर्वेव यमुना गङ्गया विना॥ ३.१४

मृच्छकटिके ५.११/१२ विदूषकचेट्यो. संलापे वाटिकास्थली-विशेषणमुत्प्रेक्षितम्।

मारीचाश्रम एव सम्पाद्यते। अत एव कार्यस्थली मारीचाश्रम एव। तथैव भासस्य बालचरितस्य प्रथमाङ्के वसुदेवो मथुरातो गोकुलं यावद्यमुना विगाह्य गच्छति। तत्र गोकुले वटवृक्षस्याधो नन्देन सह कार्यं सम्पादयति। अत्र वटवृक्ष एव प्रधानकार्यस्य सम्पादनभूमि कार्यस्थली वर्तते।

भरतेन नाट्यशास्त्रे कक्ष्या विभागप्रकरणे या कार्यस्थली वर्णिता तदनुसारेण त्रैलोक्ये सर्वेषु स्थानेषु दिव्यादिव्यादीनां पात्राणां कार्याणि नाटकेषु दर्शनीयानि सन्ति। यथा—

कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च।
उद्यानारामसरितस्त्वाश्रमा अटवी तथा॥
पृथ्वी सागराश्चैव त्रैलोक्यं सचराचरम्।
वर्षाणि सप्तद्वीपाश्च पर्वता विविधास्तथा॥
अलोकश्चैव लोकश्च रसातलमथापि च।
दैत्यनागालयाश्चैव गृहाणि भवनानि च॥
यत्र वार्ता प्रवर्तेत तत्र कक्ष्या प्रवर्तयेत॥ १३ ४-७

## वृत्तस्य कार्यकालस्य संकेतः

नाटकेषु कस्मिंश्चिदङ्के एकस्य दिनस्यैव कथा वितन्यते। तत्रापि दिनस्य कस्मिन् भागे कस्यचिदङ्कस्यामुकांश सम्पद्यत इत्यपि सूचना पूर्वमेवावश्यकी। कालसूचना साधारणतो गौणरीत्या कार्यते। यथा—

अभिज्ञानशाकुन्तले

वैखानसौ—राजन् समिदाहरणाय प्रस्थिता वयम्।

इत्यनेन अपराह्णं सूच्यते, यतो हि नामाग्नौ समिदाधानं प्रातः सायं क्रियते। अत्र सायाह्नसमिदाधानमेव विवक्षितम्। एतस्मा अपराह्णे वैखानसौ समिदाहरणाय गतौ।

प्रथमाङ्कस्य कार्यततीनामन्तः सन्ध्यायां भवति। तद्धि निम्नाङ्कितेन श्लोकेन सूचितम्—

तुरगखुरहतस्था हि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु।
पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमेषु॥ १ २८

द्वितीयाङ्के कार्यं दिनस्य प्रथमचरणे आरभ्यत इति विदूषकवचनेन प्रकटति। विदूषकः प्रवेशके कथयति—

अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्। का गतिः यावत्तं कृताचारपरिक्रमं पश्यामि।[1]

तृतीयाङ्कस्यारम्भो मध्याह्ने भवतीति राज्ञोऽत्रोवचनेन सूचितम्—

( सूर्यमवलोक्य ) इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनी-तीरेषु ससखीजना शकुन्तला गमयति। तत्रैव तावद् गच्छामि।

तृतीयाङ्कस्यान्तः सायं भवतीति 'चक्रवाकवधूः आमन्त्रयस्व सहचरम्। उपस्थिता रजनीति' पताकास्थानकेन भवति। अपरं च तत्रैव गौतमी कथयति—

( शकुन्तलामभ्युद्य ) 'वत्से परिणतो दिवसः।'

चतुर्थाङ्कस्यारम्भः प्रभातवेलायां भवतीति अनसूया-वचनेन भवति—

ननु प्रभाता रजनी। तत् लघु प्रतिबुध्ये।

प्रियंवदा—( प्रविश्य सहर्षम् ) सखि त्वरस्व। शकुन्तलायाः प्रस्थान-कौतुकं निर्वर्तयितुम्।

प्रियंवदा—एषा सूर्योदय एव शिखामज्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति। उपसर्पाव एनाम्।

पञ्चमाङ्कस्यारम्भो मध्याह्ने भवति, यदा राजा धर्मकार्याणि सम्पाद्य धर्मा-सनादुत्थितः। वैतालिकवचसापि मध्याह्नः सूचितः। तद्यथा—

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम्॥ ५.७

षष्ठाङ्कस्यारम्भः प्रभात एव भवतीति तत्र सानुमत्या अधोवचनेन प्रतिभाति—

निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत् साधुजनस्या-भिषेककाल इति साम्प्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि।

सप्तमाङ्कस्य घटना-स्थले लौकिककालक्रमस्य दिवारात्रादे, प्रातः-मध्याह्न-सायाह्नादेश्च कलना नाभवत्। तद्यथा मातलिना वर्णितम् –

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः।

---

१. कृत आचारस्य स्नानादेः परिक्रमो येन तं पश्यामि।

तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ७.६

द्वितीयहरिविक्रमपदमयाविध व्याख्यात ज्योतिर्विद्भिर्वामनपुराणे—

महीं महोग्रं सहिता महार्णवाञ्
जहार रत्नाकरपत्तनैर्युताम् ॥
भुव सनाक त्रिदशाधिवासं
सोमार्कऋक्षैरभिनन्दित नभ ।
देवो द्वितीयेन जहार वेगात्
क्रमेण देवप्रियमोप्सुरीश्वर. ॥

एतत्सर्वं निस्तमस्कमिति पदेन स्पष्टमेव। नासीत्तमस्तत्र। अतएव कालिदासेन कालत्रयनिर्भिन्ने लोके यच्चरित तस्य कालज्ञापन विनैव नाट्यायितमभिज्ञानशाकुन्तले।

## रूपकेषु वर्ज्यानि दृश्यानि

रङ्गे किं दर्शनीय किं चादर्शनीयमिति वितर्क। भरतानुसारेणाद्भुततत्त्वानि प्रथम दर्शनीयानि। कानि च तानि तत्त्वानि—क्रोध प्रसादश्शोका:, शापोत्सर्ग., विद्रवो विवाहश्च रञ्जका सन्ति। अभिनवगुप्तानुसारतोऽन्यान्यपि रञ्जकतत्त्वानि तत्र स्यु।

अदर्शनीयानि तु बहून्येव परिगणितानि। यथा भारतीये नाट्यशास्त्रे—

युद्धं राज्यभ्रंशो मरण नगरावरोधनं चैव।
प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि॥ १८.३८

युद्धं त्वभिनेयमिति भरतेनान्यत्र प्रतिपादितम्।[1]

रङ्गे युद्धमभवदिति भरतस्याधोलिखितकारिका प्रमाणयन्ति—

आकाशिक्यः स्मृता ह्येता ललिताङ्गक्रियात्मिकाः।
धनुर्वज्रासिशस्त्राणा प्रयोक्तव्या विमोक्षणे॥[2] १०.४६

---

१. नानाप्रहरणमोक्षै. शिर कबन्धभुजकर्तनैश्चैव।
एभिश्चार्थविशेषैरस्याभिनयः प्रयोक्तव्य. ॥ना० शा० ६.६५
अथवा योगशिक्षाभिर्विद्या मायाकृतेन वा।
शस्त्रमोक्ष प्रकर्तव्यो रङ्गमध्ये प्रयोक्तृभि. ॥ना० शा० २१.२२५
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभि।
न्यायाश्चैवात्र विज्ञेयाश्चत्वार शस्त्रमोक्षणे ॥ना. शा. १०.७१। अत्रेपि द्रष्टव्यम्

२. रङ्गीययुद्धे आकाशिकी चारी प्रयोक्तव्येति।

एताश्चार्यो मया प्रोक्ता ललिताङ्गक्रियात्मिकाः ।
स्थानान्यासां प्रवक्ष्यामि सर्वशास्त्रविमोक्षणे ॥[1] १०.५०
धनुर्वज्रासिशस्त्राणां प्रयोक्तव्या विमोक्षणे ।
न भेद्यं नापि च च्छेद्यं न चापि रुधिरस्रुतिः ॥१०.८६
रङ्गे प्रहरणे कार्यो न चापि व्यक्तघातनम् ।
संज्ञामात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः ॥१०.८७
नृत्ते युद्धे नियुद्धे च तथा गतिपरिक्रमे ।
गतिप्रचारे वक्ष्यामि युद्धचारी विकल्पनम् ॥४.५६
चारीभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः । १०.५

अनेन स्पष्टं प्रतिभाति यद् युद्धविषये नाट्यशास्त्राचार्याणां मतद्वैविध्यमासीत् । धनञ्जयो रङ्गे युद्धं वर्जयति ।[2] अभिनवगुप्तानुसारेणाङ्गहारप्रयोगः शस्त्रादियुद्धे बाहुयुद्धे चाङ्गप्रयोगसौष्ठवार्थमपि कृत- ।[3]

रङ्गे युद्धदृश्यं समर्थयन् वेमभूपाल' कथयति—

यद्वा शिक्षाविशेषेण विद्यया मायया यवा ।
शस्त्रमोक्षो विधातव्यो रङ्गमध्ये प्रयोक्तृभिः ॥

भरतकोशे पृष्ठ ८७१

अभिनवगुप्तस्तावदपरेषा मतमुद्धरति यत् मरण क्वचित् प्रयोज्यं भवति । किन्तु स स्पष्टतया व्याकरोति—मृतस्य कथ निष्क्रमणं, कथं वावस्थानं, ततो नाट्योपयोगिसमस्तनृत्त-गानादिक्रियाविलोप, सामाजिकानां विरसताप्रतिपत्तिरिति तु सर्वत्र मरण समानम् । तस्माद् रङ्गे मरणमप्रयोज्यमेव ।[4]

अन्यत्र च भरतो मरणं वर्जनीय दृश्यं न मन्यते ।[5] धनञ्जयोऽपि मरणदृश्यं न वर्जयति । साहित्यदर्पणे विश्वनाथोऽङ्के मरणं वर्जयति ।

अभिनवगुप्तस्य पूर्वोक्तं मतं न साधुसम्मतमित्यस्माकं समीक्षा, यतो हि नाम स्वयमेव भरतेन रङ्गे मरणाभिनयस्य निर्देशाः स्पष्टीकृता अधोविधम्—

नानाभावोपगतं मरणाभिनये बहुकीर्तितं तु ।
विक्षिप्तहस्तपादैर्निभृतैः सस्रस्तया कार्यम् ॥

---

१. तत्र वैष्णवं समपाद, वैशाख मण्डलं, प्रत्यालीढमालीढं च स्थानानि । ना० शा० १०.५१ । एतानि रङ्गेऽपि युद्धोचितानि सन्ति ।

२. दश० ३.३४

३. ना० शा० ४.५५ अधिकृत्य भारती ।

४. ना० शा० १८.३८ अधिकृत्य भारती । ५. ना० शा० ७.८६-९० ।

व्याधिप्लुते च मरणं विषण्णगात्रैस्तु सम्प्रयोक्तव्यम् ।
हिक्काश्वासोपेतं तथा पराधीन-संचारम् ॥
विषपीतेऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम् ।
विषवेगसम्प्रयुक्तं विस्फुरिताङ्गक्रियोपेतम् ॥

२५ १००–१०२

विरलविरलमपि मरणदृश्यं नाटकेषु प्राप्यत एव । बालचरितेऽरिष्टचाणूर-मुष्टिककंसादीनां मरणदृश्यमस्ति। दशरथस्य मृत्यु प्रतिमानाटकस्य द्वितीयेऽङ्के वालिनो मृत्युरभिषेकनाटकस्य प्रथमेऽङ्के दुर्योधनस्य मृत्युः ऊरुभङ्गस्यान्तिमे भागे भासेन निर्दर्शितम्, किन्तु नान्यत्र मरणदृश्यं प्रसिद्धनाटकेषु दृश्यते ।

भरतानुसारेणान्यानि कानिचिद् रङ्गवर्ज्यानि अङ्केऽदर्शनीयानि स्युः ।

न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता ।
केनचिद् वचनार्थेन अङ्कच्छेदो विधीयते ॥२२.२९५
यद्वा शयीतार्थवशादेकाकी सहितोऽपि वा ।
चुम्बनालिङ्गनं चैव तथा गुह्यं च यद् भवेत् ॥२२.२९६
दन्तच्छेद्यं नखच्छेद्यं नीवीस्रंसनमेव च ।
स्तनान्तरविमर्दं च रङ्गमध्ये न कारयेत् ॥२२.२९७
भोजनं सलिलक्रीडा तथा लज्जाकरं च यत् ।
एवंविधं भवेद्यद्यत्तत्तद्रङ्गे न कारयेत् ॥२२.२९८
पितापुत्रस्नुषाश्वश्रू-दृश्यं यस्मात् नाटकम् ।
तस्मादेव तानि सर्वाणि वर्जनीयानि यत्नतः ॥२२.२९९
नाम्बरग्रहणं रङ्गे न स्नानं न विलेपनम् ।
नाञ्जनं नाङ्गरागश्च केशसंयमनं तथा ॥
नाप्रावृत्ता नैकवस्त्रा न रागमधरस्य तु ।
उत्तमा मध्यमा वापि कुर्वीत प्रमदा क्वचित् ॥२२.२४०-२४१

एतानि वर्ज्यानि कविभिर्नाटकादिषु सर्वथा न परित्यक्तानि ।[1]

१. कौमुदी-महोत्सवस्य पञ्चमाङ्के नायको नायिका परिष्वजते । तापसवत्सराजस्य षष्ठाङ्के विदूषको दासी काञ्चनमालामालिङ्गते । तपतीसंवरणस्य षष्ठाङ्के राजा नायिकामालिङ्गते । पारिजातमञ्जर्या प्रथमाङ्के राजा नायिका पारिजातमञ्जरीं च परिष्वजते । प्रद्युम्नाभ्युदयस्य तृतीयाङ्के नायकयो परिष्वजनं दृश्यम् । मृच्छकटिके नायको विदूषकस्योपस्थितो नायिकां परिष्वजते ।

भारतीये नाट्यशास्त्र एव कामशास्त्रप्रकरणमिवाद्योविधर्मभिनेयं विधत्ते—

गृहीतायाथ केशान्ते हस्ते वस्त्रेऽथवा पुनः।
हुं मुञ्चेत्युपसर्पन्त्या वाच्यः स्पर्शालसं प्रियः ॥२२.२८४

अमुच्यमाने केशान्ते संजातस्वेदलेशया।
हं हु मुञ्चापसर्पेति वाच्यः स्पर्शालसाङ्गया ॥२२.२८६

अक्ष्णोः संवरणे कार्यं पृष्ठतश्चोपगूहनम्।
नार्यास्त्वपहृते वस्त्रे दीपच्छादनमेव च ॥२२.२८९

उत्थाप्यालिङ्गयेच्चैव नायिका नायकं ततः।
रतिभोगगता हृष्टा शयनाभिमुखी व्रजेत् ॥२२.२९१

एतद्गीतविधानेन सुकुमारेण योजयेत्।
यथा शृङ्गारसंयुक्तं रतिसम्भोगकारणम् ॥२२.२९२

इदं मतं तु प्राचीनतरं प्रतिभाति। तत् तु नाट्यशास्त्रे संगृहीतम्। एतेषां वर्जनं तु परवर्तिभिः सुसंस्कृतैः सुरुचिपरायणैश्च ऋषिकल्पैराचार्यैः समर्थितम्।

नैतानि वर्ज्यानि नाटकादिषु नाट्यशास्त्रीयाकरग्रन्थेषु च सर्वथा परित्यक्तानीति निम्नाङ्कितसन्दर्भेषु परिलक्ष्यते –

| वर्ज्यानि | प्रयोगसन्दर्भाः |
| --- | --- |
| शयनम् | स्वप्नवासवदत्ते, मृच्छकटिके षष्ठेऽङ्के उत्तररामचरिते; मालतीमाधवे षष्ठेऽङ्के। |
| आलिङ्गनम् | मृच्छकटिके मालतीमाधवे ६ ११/१२ अविमारके ५.१४। |
| अम्बरग्रहणम् | अभिज्ञाने ४.७ ८। |
| अलंकारग्रहणम् | अभिज्ञाने चतुर्थेऽङ्के, मुद्राराक्षसे पञ्चमेऽङ्के, मृच्छकटिके षष्ठाङ्के। |
| दूराध्वा | बालचरिते प्रथमाङ्के। |

इमानि वर्ज्यानि केवलमङ्केषु दृश्यानि न भवेयुः। अङ्केऽपि श्रव्यसूच्यविधानैस्तानि प्रेक्षकेभ्य उपनीयन्ते। यथा वेणीसंहारे वृषसेनस्य युद्धं मरणं च।

## रूपकलक्षणम्

महारसं महाभोगमुदात्तवचनान्वितम् ।
महापुरुषसञ्चारं साध्वाचारजनप्रियम् ॥
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ।
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्कर्म न वा योगो नाट्येऽस्मिन् यन्न दृश्यते ॥

नाο शाο १९.१४०-१४३

इति प्रेक्षकाणा कृते भरतेन नाटकस्य प्ररोचना निबद्धा ।

अभिनवगुप्तानुसारेण ज्येष्ठ रूपक नाटकादि भवति चतुर्वर्गोपायोपदेशि । मध्यम रूपकं भाणादी रञ्जनाफल ।[1]

दशविधेषु रूपकेषु नाटकं प्रकरणं च प्राथम्यं भजेते । तयोरपि नाटकं प्रकरणादपि प्रधानं, कथावस्तुन प्रसिद्धत्वात् । प्रकरणे या कल्पनावस्तु सम्भावना, सापि प्रसिद्ध्युपजीविनी भवति । अभिनवगुप्तानुसारेण नाटकस्योत्कर्ष इतिहासादिप्रमाण-वस्तुसिद्धप्रदर्शकत्वेन प्रतीत. ।

### नाटकम्

भरतानुसारेण प्रख्यातवस्तु-विषय नाटकं भवति । अर्थान्नाटकस्य वस्तु-विषय. प्रख्यातो भवति । तद् वस्तु नाटकयोग्य विधातु प्रतिसंस्क्रियतेऽभिनव-कथान्तरयोगेन, प्रख्यातवस्तुनि संशोधनेन, परिवर्तनेन, परिवर्धनेन च । प्रख्यातं तूपजीव्यमेव भारतादिकमिति अभिनवगुप्तमतम् । अत्रादिशब्देन वैदिकसंहिता:, ब्राह्मणारण्यकोपनिषद पुराणोपपुराणानि आदिकाव्य रामायणञ्च गृह्यन्ते । एतेषां स्वत प्रामाण्यमित्यस्माकं मतम् ।

नायकः

नाटकस्य प्रधान नायक उदात्त स्यादिति भारतीयं मतमभिनवगुप्तो विशदयति । तद्यथा —उदात्त इति वीररसयोग्य उक्त । तेन धीरललित-धीरप्रशान्त-धीरोद्धत-धीरोदात्ताश्चत्वारोऽपि गृह्यन्ते ।[2] वस्तुत. प्राकरणिकदृष्ट्या कथा-

---

१. नाο शाο ९.१७३ अधिकृत्य भारती ।

२. नाο शाο १८.१० अधिकृत्य भारती ।

वस्तुविषयीभूतस्य नाटकचरितस्य नायक उदात्तादिचतुर्विधो भवितुमर्हति, शाश्वतदृष्ट्या पुनर्नायको भवेदुदात्त एव।

अभिनवगुप्तस्य पूर्वोक्तं मत सोदाहरणं निदर्शनीयम्। अभिज्ञानशाकुन्तलेऽङ्गी नायको दुष्यन्तो नाटकीयाधिकारिक-वृत्तस्य परिप्रेक्ष्ये धीरललितोऽस्ति, परिणयात्मकेतिवृत्तत्वात् किन्तु साकल्येन यदि तस्य जीवनचरितमालोच्यते, सोऽन्यथा वीररसयोग्यो धीरोदात्त एव। वीरोचितचरित-सम्पादनस्य तस्य योग्यता प्रमाणितैव।[1] प्रसिद्धनाटकेषु न केवलं धीरोदात्ता एव नायका अपितु अपरविधा अपि सन्त्येव। स्वप्नवासवदत्तस्य नायक उदयनो मुद्राराक्षसस्य च चन्द्रगुप्तो धीरललितौ। धनञ्जयादयः परवर्तिनाट्याचार्या धीरोदात्तमेव नाटकस्य नायकं स्वीकुर्वन्तीति विशुद्धमभिप्रायं सम्यङ् न व्यनक्ति।[2]

नाटकस्य नायको भवितुं कोऽर्हतीति विषये भरतस्य मतं विद्यते—

राजर्षिवंश्य-चरितं तथैव दिव्याश्रयोपेतम्।
नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा॥ १८.१०,१२

अनेन स्पष्टं प्रतिभाति भरतानुसारेण राजान एव नाटकस्य नायकपदं प्रथममर्हन्ति।

देवा अपि नायका भवितुं न योग्या इत्यभिनवगुप्तेन भारतीयमतमनुसृत्य प्रतिपादितम्।[3] स विशदयति—'यदि मुख्यत्वेनैव देवचरितं वर्ण्यते, तत्तावद्-विप्रलम्भकरुणाद्भुतभयानकरसोचितं चेन्निबध्यते, तन्मानुषचरितमेव सम्पद्यते, प्रत्युत देवानामधिपाधानं प्रसिद्धिविघातकम्। तत्र चोक्तो दोषः। विप्रलम्भाद्यभावे तु का तत्र विचित्रता रञ्जनाया एतत्प्रमाणत्वात्। अत एव हृदय-संवादोऽपि देवचरिते दुर्लभ.। न च तेषां दुःखमस्ति, यत्प्रतीकारोपाये व्युत्पादनं स्यात्।' अभिनवगुप्तस्यायं प्रपञ्चस्तथ्यहीन एव। यतो हि नाम विप्रलम्भं विनापि मुद्राराक्षसवेणीसंहारादीनि उत्तमानि नाटकानि सन्त्येव। देवानामपि दुःखं भवत्येव। इन्द्रवृत्रप्रकरणे तत्तु स्पष्टं खलु। असुरैः पराजिता देवा दुःखं

१. दुष्यन्तोऽभिज्ञाने वरमित्त्वस्य इति प्रथितः। अपरं च—
आशंसन्ते सुरयुवतयो बद्धवैरा हि दैत्यै—
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे॥२.१६
सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृतदानवकण्टकम्।
तव शरैरधुना नतपर्वभिः पुरुषकेसरिणश्च पुरा नखैः॥ ७
२. अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान्। दश० ३.२२।
३. दिव्याश्रयोपेतम् (नाटकम्) ना० शा० १८.१०

नान्वभवन्निति असत्। लक्ष्यनाटकेषु देवा अपि नायका अपवादरूपेण दृश्यन्त एव। नागानन्दे नायको जीमूतवाहनो विद्याधरो देव एव।[1] तथापि देवाना निमेषराहित्यादिनाभिनेय दृष्टिकर्मस्वक्षमत्वात्तेषा नाटके परिहारं समर्थयति। अभिनये दृष्टिकर्माणि भूयो महत्त्वं भजन्त इति सर्वसम्मतमेव।

धनञ्जयस्तु दिव्यं नायकं नाटकोचित निर्धारयति। यथा,

प्रख्यातवंशो राजर्षिदिव्यो वा यत्र नायकः[2]। ३.२३

अत्र राजर्षि. कश्चिदसाधारणो राजापि स्यात्।

वर्तमानो राजापि नायको न स्यादिति निर्धारयन् अभिनवगुप्तो विशदयति—न च वर्तमानचरितानुकारो युक्तः। विनेयाना तत्र रागद्वेषमध्यस्थतादिना तन्मयीभावाभावे प्रीतेरभावेन व्युत्पत्तेरभावात्। वर्तमानचरिते च धर्मादिकर्म-फलसम्बन्धस्य अप्रत्यक्षत्वे प्रयोगवैयर्थ्यम्।[3]

नाटकलक्षणरत्नकोशे सागरनन्दी भावप्रकाशने शारदातनयश्च वर्तमानमपि राजानं प्रयोजनवशात् नायकपदार्हं मन्येते।[4] नेतरसाधु।

भूतं नाटयति लोकवृत्तान्तमिति भरतवचनेन वर्तमाननायको न ग्राह्य.।

नाटके प्रधाननायको राजा भवेदिति पूर्वोक्तेन राजर्षिवंशचरितमित्यादि[5] श्लोकेन स्पष्टमेव किन्तु राजर्षिवंशचरितमेव केवलं नाटकस्य सर्वस्वं नास्ति। भरतानुसारेण तत्र—

देवतानामृषीणां च राज्ञा चोत्कृष्टमेधसाम्
पूर्ववृत्तानुचरितं नाटक नाम तद् भवेत्॥ ११.१४५

अर्थात् नाटके राजर्षिचरितेन देवानामृषीणा च चरितेन सयुक्तं भवेत्। यथाभिज्ञानशाकुन्तले कण्वस्य, काश्यपस्य च चरित वर्तते, इन्द्रादीनामपि देवानामप्सरसां कृतित्व तत्र सप्रसङ्गं निबद्धमेव। यदि नाम कस्मिंश्चिन्नाटके देवर्षीणा चरितं प्रसङ्गतो न समायाति, तर्हि तेषा स्थाने महापुरुषा ग्रहणीयाः सन्तीति भरतस्याग्रेवचनेन प्रमाण्यते—

महापुरुष-सञ्चारं साध्वाचार-जनप्रियम्॥ ना० शा० २१.१४०

---

१. अभिनवगुप्तानुसारेण 'पिशाचादिब्रह्मान्ता देवयोनय.। ना० शा० १३.१८ अधिकृत्य भारती।

२. अत्र प्रख्यातग्रहण प्रकर्षद्योतकमिति अभिनव श्:।

३. ना० शा० १ १८ अधिकृत्य भारती।

४. भावप्रकाशने ७ ११२

५. ना० शा० १८.१०।

वृत्तम्

**राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम् ॥ १८.१०**
**नानाविभूतिभिर्युक्तमृद्धिविलासादिभिर्गुणैश्चैव ॥ १८.११**
**नृपतीनां यच्चरितं नानारसभावचेष्टितैर्बहुधा ।**
**सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम ॥ १८.१२**

अत्र नृपतिचरिते सुखं दुःखं चोभे वर्णनीये इति महत्त्वपूर्णम्। नृपतीनां चरितं प्रह्लीभावदायकं भवति तथा हृदयानुप्रवेशरञ्जनोल्लासनया हृदयं चोपायव्युत्पत्तिपरिघट्टनया चेष्टया नर्तयति । अत एव नाटकनाम सार्थकम् ।

प्रागेव प्रपञ्चितैः सन्धि-प्रकृत्यवस्था-वृत्ति-सन्ध्यन्तरादिभिः कविः पल्लवयति नाटकीयमितिवृत्तम् ।[1]

भरतस्तुनाटकीयं वस्तु राजर्षिवंश्यचरितमेवानुमेने ।

तत्र नानाविभूतिभिर्युतमिति धर्मार्थकाममोक्षविभवैः फलभूतैः युक्तम् । तत्रापि अर्थकामौ सर्वजनाभिलषणीयाविति तयोर्बाहुल्य वृत्तं दर्शनीयम् । ऋद्धिस्तु अर्थस्य राज्यादिसमृद्धिः । विलास कामः एव इत्येतैर्नाटकीयवृत्तैः प्रधानं फलं निर्दिष्टम् । विलासा मनोरञ्जनात्मकव्यवहारा गुणास्तु राजोचित-वैभवकारिणः कार्यसम्भाराः सन्धिविग्रहादयः ।[2] एतेषु कानिचिदेव स्वकीये नाटके कविर्यथायोगं सन्निवेशयति ।

नाटके मुख्यत आधिकारिकं वृत्तं प्रभवति । तेन नायकस्य फलप्राप्तिः साक्षाद् भवति । क्वचिन्नायकस्य स्वयमेव कार्यसम्पादनेऽसामर्थ्यात् तस्य प्रनुखसहायकः पताकानायकाऽनुबन्धेन भवति ।[3] पताकानायकस्य वृत्तं प्रासङ्गिकं भवति । प्रकरीवृत्तमपरविधमेव प्रासङ्गिकं वृत्तं भवति यत्रानुबन्ध विनैव परार्थमेव कश्चिन्नायकः प्रधाननायकस्य फलप्राप्तये कर्तव्यदृष्टया समीहितमाचरति । यथोत्तररामचरिते वाल्मीकिः ।

---

१. पञ्च पञ्च चतुष्षष्टिश्चतुरष्टैकविंशतिः ।
षट्त्रिंशत्सर्वतोऽत्र तदाहुर्नाटकं बुधाः ॥ नाटकलक्षणरत्नकोशे १८२
तत्र वृत्तविषये पञ्चावस्थाः, पञ्चार्थप्रकृतयः, चतुष्षष्टिः सन्ध्यङ्गानि, चतस्रो वृत्तयः, एकविंशतिः सन्ध्यन्तराणि भवन्ति ।

२. अभिनवभारती ना. शा. १८.१२ अधिकृत्य ।

३. प्रधाननायकस्य पराक्रमेण स्वाभीष्टं प्राप्य पुनः सहायीभूय पताकानायकः प्रधान-नायकस्य कार्यसम्पादने साहाय्यमाचरति । यथाभिषेकादिरामनाटकेषु सुग्रीवस्य रामसाहाय्याचरणम् ।

नाटकीयं वृत्तमविभक्त भवति। तत्र यथायोग पञ्चादिका दशपरा अङ्का भवन्ति। महानाटकेषु पञ्चदशपर्यन्ताङ्कसंख्या स्यात्।

रसयोजना

'नाटके वीररसः प्रधान' इति समीक्षतेऽभिनवगुप्त।[1] 'तथा हि सर्वरस-योग्यतायामपि नाटके प्रकरणे च धर्मार्थादिवीर एव प्रधान., परमार्थतः सर्वेषु नायक-भेदेषु वीरत्वानुगमदर्शनात्। अभिनवगुप्तोऽनुमनुते यत्—उत्साहजनन चतुर्विधनायकस्यापि भावोत्साहप्रभववीररसात्मकम्। तेन च प्रीतिप्रकारेणोत्साह-स्य त्रिवर्गोपायविषयस्य जननम्। अभिनवगुप्तस्येतन्मत विवादास्पदं प्रतिभाति।

सर्वेषु रूपकेषु निर्वहणेऽद्भुतरसो भवेत्।[2] अभिनवगुप्तानुसारेण शृङ्गार-वीर-रौद्रैः स्त्रीरत्न पृथ्वालाभ-शत्रुक्षया, करुणादिभिस्तन्निवृत्तिरितीयता क्रमेण लोकोत्तर सम्भाव्यमनोरथ-प्राप्ती भवितव्यमद्भुतेन।[3]

अङ्गी रसस्तु काव्य आद्यन्त व्याप्तो भवति। स तु प्रधानरस एव स्यात्। अपर एव फलानुवर्ती रस.। नाटकान्ते यत्फल नायकेन लभ्यते, तदनुसृत्य फलानुवर्ती रसो जायते। तद्यथा, उत्तररामचरिते करुणस्तु प्रधानो माङ्गी वा रसः स्यात्, किन्तु तत्र फलानुवर्ती रसस्तु शृङ्गार एव। अङ्गी रसस्तावद् वीर. शृङ्गारश्चैव भवत इति धनञ्जयस्य मत न सर्वथा पूर्णम्। रौद्रः करुणश्चाङ्गिनौ रसौ क्रमश. वेणीसंहारे उत्तररामचरिते च विलसत इति सम्यगवधेयम्।

कुन्तकानुसारेणतु 'रसान्तरेण रम्येण यत्र निर्वहणं भवेत्।' इत्यनेन वक्रतो-त्पद्यते। अर्थान्नाटकादेरन्तिमभागे कश्चिन्नवीनो रम्यो रसो योज्य एव। यथा वेणीसंहारे वीरेणाद्भुतेन च समाप्तिः, उत्तररामचरिते वा सम्भोगशृङ्गारेण समाप्ति।

वस्तुरसयोः सामञ्जस्य सम्यग् निर्दिष्टं धनञ्जयेन।

न चातिरसतो वस्तु दूर विच्छिन्नतां नयेत्।
रस वा न तिरोदध्यात् वस्त्वलङ्कारलक्षणम्॥ ३.३३,३४

कार्यबन्धः

नाटके कार्यबन्धविषये भरतेन निर्दिष्टम्—

काव्यं गोपुच्छाग्रं कर्तव्यं कार्यबन्धमासाद्य। १८.४२

---

१. अभिनवभारती द्वितीये खण्डे पृष्ठे ४३१।

२. ना० शा० १८.४३

३. ना० शा० १८.४३ अधिकृत्य भारती।

अभिनवगुप्तानुसारेण—यथा गोपुच्छे केचिद्वाला ह्रस्वाः केचिद्दीर्घाः एवं कानिचित् कार्याणि मुखसन्धौ परिसमाप्तानि, कानिचित्तु प्रतिमुखपर्यन्तानि, इत्यादि। साररूपाश्च पदार्थाः पर्यन्ते कर्तव्याः।

**शैली**

नाटकस्य रमणीया शैली भरतेनाप्योविध व्याख्याता—

वाक्यैः सातिशयैः, श्रव्यैर्मधुरैर्नातिनिष्ठुरैः।
हितोपदेश-संयुक्तैस्तज्ज्ञः कुर्यात्तु नाटकम्॥ २२.३००
तस्माद् गम्भीरार्थाः शब्दा ये लोकवेदसंसिद्धाः।
सर्वजनेन ग्राह्यास्ते योज्या नाटके विधिवत्॥ २७.४६
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम्। १९.१४१
गुणालङ्कारभूषितम्। १९.१३९

**वृत्तिः**

नाटके प्रकरणे च सर्वा वृत्तयः सन्तीति भरतस्य मतम्—

ज्ञेयं प्रकरणं चैव तथा नाटकमेव च।
सर्ववृत्तिविनिष्पन्नं नानाबन्धसमाश्रयम्॥

मुद्राराक्षसे यद्यपि वृत्तानुसारिणी कैशिकीवृत्तिर्नास्ति तथापि सौन्दर्यं तु कैशिकीं विना न भवतीति नियमेन सौन्दर्यभावात् तत्र कैशिकी वर्तत एव

वीररसात्मकेषु नाटकेषु—

यत्र निर्यन्त्रणोत्साहं परिस्पन्दोपशोभिनी।
प्रवृत्तिर्व्यवहर्तॄणां स्वाशयोल्लेखशालिनी॥
काप्युन्मीलति निःसीमा॥ वक्रोक्तिजीविते ४.१–२

## प्रकरणम्

भूम्ना रसानां गहनाः प्रयोगाः सौहार्दहृद्यानि विचेष्टितानि।
औद्धत्यमायोजितकामसूत्रं चित्राः कथा वाचि विदग्धता च॥

इति मालतीमाधवनामकस्य प्रकरणस्य प्रस्तावनायां सूत्रधारवचनेन प्रकरणं परिभाषितम्। एतादृशे प्रकरणेऽन्येषु रूपकेष्वपि रसनिर्झरणी प्रायशो वैषम्यप्रसङ्गेन सातिशयं रञ्जयति। कविस्तत्र नैकशो नायकस्य विपत्तिं रचयति पश्चात्तस्याभ्युदयं कल्पयतीति तेन सहृदयानां सहानुभूतिर्जायते।[1]

1. One likes much better when they (heroes) are battered down by a prodigious siege of misfortune than when they triumph.
Virginia Wolf

नाटक-प्रकरणयोरस्तु साम्यविषयेऽधोलिखितं भरतस्य वचनं प्रमाणम्—

यन्नाटके मयोक्तं वस्तु-शरीरं च वृत्तिभेदाश्च।
तत्प्रकरणेऽपि योज्यं सलक्षणं सर्वसन्धिषु तु ॥ १८.४७

एतत्तु व्याख्यातमभिनवगुप्तेन—नानाविभूतियुक्तमृद्धि-विलासादिभिरित्यादि-नायकफलवस्त्वमुक्तं तत् वस्तु शरीरमिति—अङ्कप्रवेशकाढ्यम्।[१] वृत्ति-भेदाश्चेति नानारसभावचेष्टितैर्बहुधा, सुख-दुःखकृतमिति। सलक्षणमिति अङ्क-प्रवेशकयोर्लक्षणमुक्तमिति।[२] अभिनवगुप्तानुसारेण नाटके प्रकरणे च सकलपुरुषार्थ-विषया निर्योज्यन्ते, नाटके प्रधानस्य राजप्रायस्य, प्रकरणेन च मध्यमप्रायस्य।

वस्तु

प्रकरणे वस्तुशरीरं च कविनोत्पत्तिकमात्मशक्त्या इति भरतस्य प्रथम-वचनम्। तत्र वस्तु साध्यफलं शरीरमिति तदुपाय इति मतमभिनवगुप्तस्य।[३]

वस्तु वा नायको वौत्पत्तिको भवेत् किन्तु न ते सर्वेषु प्रकरणेषु सर्वथोत्पाद्ये इति सन्धारणीयम्। कविः प्रकरणं निमित्तमनार्षमाहार्यं चापि वस्तु क्वचित् प्रचिनोति। तस्यैतादृशं प्रचयनमेव प्रकरणनाम्नः सार्थकतां विदधाति।

अभिनवगुप्तानुसारेण वस्तूनि 'योऽनुत्पाद्योऽशः न कृत्स्नो ग्राह्यः'। अनु-त्पाद्योऽश आहार्यो भवेदनार्षो वा। अनार्षमिति पुराणादि-व्यतिरिक्त बृहत्कथा-द्युपनिबद्धं मूलचरितादि। आहार्यमिति पूर्वकविकाव्याद्वाहरणीय समुद्रदत्त-चेष्टितादि। अनार्षमाहार्यं च वस्तु सचित्य तदेव प्रसिद्धं गुणयुक्तं प्रकरोति तदिति तस्माद् हेतोरेतदपि प्रकरणम्। पुनरपि अभिनवगुप्तो विस्पष्टयति—तेन बृहत्कथादिसिद्धस्य मूलदेवादेरधिकावापं कविशक्तिर्यदा विधत्ते तदा प्रकरणम्। एवं पूर्वकविसमुत्प्रेक्षित-समुद्रदत्त-चेष्टितादिवर्णनेऽपि अधिकावापं विदधत्कविः प्रकरणं कुर्यादिति तात्पर्यम्।[४]

तदेव समर्थयति भवभूतिरघोषवचनेन मालतीमाधवे

अस्ति ॥ वृत्तश्चिदेवभूतं महाद्भुतं विचित्ररमणीयोज्ज्वलं प्रकरणम्
१०२३/२४

---

१. विष्कम्भकप्रचुरं प्रकरणं स्यादिति मतमभिनवगुप्तस्य।
२ लक्षणमत्र ३६ लक्षणानि सन्ति। तथोक्तं भरतेन—
काव्यबन्धास्तु षट्त्रिंशल्लक्षणान्विताः ॥ १६.२२७
तत्र अभिनवगुप्तस्य व्याख्या न समीचीनेत्यस्माकं मतम्।
३. ना० शा० १४२ अधिकृत्य भारती।
४ यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम्।
उत्पन्न-बीज-वस्तुप्रकरणमिति तदपि विज्ञेयम् ॥ ना० शा० १८.४६
एतदधिकृत्य भारती च।
५ तत्रैव।

वृत्तकानुसारेण प्रकरणं तु कल्पितसंविधानानां प्राचुर्यं द्योतयति।

नाट्यदर्पणे रामचन्द्रो विशदयति प्रकरण-वस्त्वद्योविधम्—

'प्रकर्षेण क्रियते कल्प्यते नेता, फलं, वस्तु वा व्यस्त-समस्ततयात्रेति प्रकरणम्।' इत्यनेन स प्रकरणस्य वस्तु वा नायको वा फलं वा कल्पितं भवेदिति समीक्षते।

अभिनववस्तु-योजनायाः कावश्यकतेति विशदयन् अभिनवगुप्तः प्राह—विनेयोऽभिनववस्तुवृत्तकौतुकपरतन्त्र इति समुत्पाद्यवस्तुना प्रकरणेन विनीयते।[१]

प्रकरणे नायकादीनां चरितं नैकविधं स्यादित्यनेकरसोत्सः तद् भवेदिति मतमभिनवगुप्तस्य।[२] नाटके वस्तुनो महिम्ना प्रकरणे तु वस्तुनो पराक्रमशालिनोच्चावचवैचित्र्येण प्रभावो जन्यते।

दशरूपके धनञ्जयो वृत्तमुत्पाद्यमेव मन्यते। नैतत् सर्वांशतः साधु। तत्राहार्यानार्षवस्तुनोर्निषेधः। वस्तु लोकसंश्रयं स्यादिति विशेषद्योतकं लक्षणं सुष्ठु प्रपञ्चितं धनञ्जयेन।[३] लोकसंश्रयं वस्तु भवेदित्यनेन न महतामेव केवलमपि तु पृथग्जनानां सर्वसाधारणलोकानां चित्रविचित्राणि कलाशिल्पमनोरञ्जनानि स्थाने-स्थानेऽवान्तरकथासंनिवेशेन वर्णनीयानि। यथामृच्छकटिके शर्विलकादीनाम्। तत्र चौर्यं, द्यूतमधिकरण-व्यवहारः, शूलारोपणमित्यादि प्रकरणोचितानि।

नायकादयः

प्रकरणे विप्रः, वणिक्, सचिवः, पुरोहितः, अमात्यः, सार्थवाहो (पण्यानामाहर्ता) नायका भवन्ति। प्रख्यातोदात्तनायकस्तत्र नास्त्येव। न च देवा न राजानो नायका भवन्ति।[४] नायको वैशिको विटो भवति - वेश्याकामुकः,

१. ना० शा० १८.७ अधिकृत्य भारती। पाश्चात्या अपि तथैव मन्यन्ते—To the poet the highest value lies in his own invention, and out of fondness for this, he at his own convenience, changes the actual incident—European Theories of the Drama p. 357.

२. ना० शा० १८.४८ अधिकृत्य भारती।

३. नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम्। इति प्रकरणवृत्तस्य विशेषणानि (ना० शा० १८.४८) लोकसंश्रयं दश० ३.३९ व्यञ्जन्ति।

४ देवीचन्द्रगुप्तमिति प्रकरणमपवाद एव। तत्र नायकश्चन्द्रगुप्तो राजा उदात्त एव। रामचन्द्रानुसारेण धीरोदात्त-धीरप्रशान्तौ तत्र नेतारौ।

वेश्योपचारे निपुणः।[1] मालतीमाधवे नायको माधवो विटस्तथैव मृच्छकटिके चारुदत्त। एतन्नायकद्वय जात्या ब्राह्मणः।

... कन्याविटः पतिरसौ परिरक्षतु त्वाम्॥ मालतीमाधवे ८.८

नाटकेषु प्रायशोऽन्तःपुरीया प्रकृतिः स्यात्, किन्तु प्रकरणे तद्विपरीत बाह्यजना सन्ति दास, विट, श्रेष्ठीरयादय। अभिनवगुप्तानुसारेण तु पात्रविधानं नाटकापेक्षयाधोविधं वर्तते—

| नाटकपात्राणि | तस्य स्थाने | प्रकरण पात्राणि |
|---|---|---|
| कञ्चुकिन् | " | दास |
| विदूषक | " | विट[2] |
| अमात्य | " | श्रेष्ठी |

भरतानुसारेण विदूषकस्य स्थान प्रकरणे नास्ति, किन्तु मृच्छकटिके देवीचन्द्रगुप्ते च विदूषकोऽपि वर्तते। अभिनवगुप्तानुसारेण न केवलं राज्ञोऽपितु अन्येषाममात्यादीनामपि विदूषका भवन्ति।[3]

प्रकरणे द्विविधे नायिके स्त प्रथमं तावत्कुलजा पत्नी स्यात्। तस्याश्चेष्टिन स्वल्पमेव वर्तते। न सा नाटकवद् महादेवीव राज्ञो नित्यनवनायिकाव्यवहारे बाधा समुपस्थापयति। अत एव भरतेन प्रोक्तम्—

मन्दकुलस्त्रीचरितम्,[4] इति। १८.५०

वेश्या तु प्रधाननायिका वर्तते क्वचित् प्रकरणे। अत एव वेश्योपचारसम्बन्धि आधिकारिकवृत्तं तत्र भवति। वेश्याया लक्षणानि सविस्तरमेव भरतो वर्णयति। ता लुब्धा पण्डिता, चतुरा, मानिन्यो, बाला, धीरा, गर्विता,

---

१. वैशिकस्य लक्षणानि ना० शा० २३.२-७।
यो हि सर्वकलोपेत सर्वशिल्प-विचक्षण।
स्त्रीचित्तग्रहणाभिज्ञो वैशिक स भवेत् पुमान्॥
तस्य त्रयस्त्रिंशत् गुणाः तत्रैव परिगणिता। ना० शा० २३.४७

२ विटस्तु नाटकेऽपि क्वचिद् भवति। यथा नागानन्दे तृतीयाङ्के शेखरक

३. विदूषक स्वामिनो राजामात्यश्रेष्ठिप्रकृतिभाव ज्ञात्वेत्यादि।
ना० शा० १२.१४२ अधिकृत्य भारती।

४. 'मन्द-कुलस्त्री-चरितम्' इत्यन्यथापि व्याख्यातम्। तद्यथा मन्दकुलाना स्त्रीणा चरितं यत्रेत्याहु। तेन कुलाङ्गनापि तत्र मन्दकुलैवेति दर्शित भवति। १८.५० अधिकृत्य भारती।

उदात्ताश्च भवन्ति ।[1] अन्येऽपि भेदा वेश्याना स्वभावजाः —उत्तमा, मध्यमा, नीचा च भरतेन निरूपिता. । तद्यथा,

या विप्रियेऽपि तिष्ठन्तं प्रियं वदति नाप्रियम् ।
न दीर्घरोषा च तथा कलासु च विचक्षणा ॥२३.३६
शीलशोभाकुलाधिक्यैः पुरुषैर्या च काम्यते ।
कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी ॥२३.३७
गृह्णाति कारणाद्रोषं विगतेर्ष्या ब्रवीति च ।
कार्यकालविशेषज्ञा सुरूपा सा स्मृतोत्तमा ॥२३.३८
पुरुषैः काम्यते या तु तथा कामयते च तान् ।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी ॥२३.३९
ईर्ष्यातुरा स्वनिभृता क्षीणक्रोधातिगर्विता ।
क्षणप्रसादा या चैव सा नारी मध्यमा स्मृता ॥२०.४०
अस्थानकोपना या तु दुष्टशीलाभिमानिनी ।
चपला परुषा चैव दीर्घरोषाधमा स्मृता ॥२०.४१

वेश्या कुलाङ्गना च परस्परं न मिलतः। अत एव तयोः पारस्परिकः सघर्षो न परिलक्ष्यते ।

भरतधनञ्जयानुसारेण वेश्यां विनापि प्रकरणवृत्त स्यादिति साधु सम्मतम् । प्रधानत्वेन भरतो नियमयति—

दासविटश्रेष्ठि वेशस्त्र्युपचारकारणोपेतम् ॥ ना० शा० १७.४६

भाषा तत्र कुलस्त्रियाः शौरसेनी, वेश्यायाः संस्कृतं वा स्यात्। यथा मृच्छकटिकादिषु वेश्याः प्राकृतं वदन्ति सर्वत्र। आचारः कुलस्त्रिया विनयप्रधान, अन्यस्या तद्विपरीत इति ।

सूच्यम्–

भरतानुसारेण विष्कम्भः प्रकरणे विशिष्ट एव। अभिनवगुप्तः प्रकरणे विष्कम्भकस्य बाहुल्यं निगदति । विष्कम्भकस्य वस्तु कीदृशं स्यादिति विशदयति अभिनवगुप्त —सन्धीनां यः संक्षेपो युद्ध-राज्यप्रशादीना यः सक्षेपः तमभिसन्धाय अङ्कस्य अङ्कयोर्वान्तराले मध्ये विष्कम्भको योज्यः ।[2]

---

१. ना० शा० २३ ३२, ३४ ।

२ प्रवेशको विष्कम्भको वाङ्कयोर्मध्ये भवेदिति स्पष्टीकृतमभिनवगुप्तेन । अधुना विष्कम्भकादयोऽङ्कस्य भागा इव नाटकेषु प्रायशो मुद्रिता इति न साधु रीतिः ।

कथं न प्रवेशको योज्य प्रथमाङ्कात् प्रागिति विशदयन् अभिनवगुप्तः प्राह—बीज बिन्दुश्च प्रथममुपक्षिप्येते । तत्र च पृथग्जनस्य लब्धनिवेशत्वात् अविवादिगोचरत्वाच्च तदुपक्षेपे विष्कम्भकस्यैवावसर इति । ना. शा. १८.५५ अधिकृत्य भारतो

रसः

धनञ्जयानुसारेण प्रकरणे रसस्य स्थितिर्नाटकवत् स्यात्। नाटके धनञ्जयानुसारतस्तु वीरशृङ्गारौ इति रसद्वयं वर्तते। साधारणतः प्रकरणे वीरः सदिग्ध एव। यतो वीरस्य धीरोदात्तेन सात्त्वतीवृत्त्या चाविनाभावः सुसिद्धः। प्रकरणे धीरप्रशान्तो नायको वीररसोचितो न स्यादिति निर्विवादमेव। तथापि प्रकरणे यत्र धीरोदात्तो नायकस्तत्र वीरोऽङ्गी भवति यथा देवीचन्द्रगुप्ते।

प्रकरण-वैविध्यम्

सप्तविधनायकाननुसृत्य सप्तविधं प्रकरणं भवति।[१] तत्र त्रिविधनायिकास्थितिमनुसृत्य त्रिविध एकैकस्य भेदः स्यात्। प्रथमं तावत् सचिवादीनां सम्बन्धिनी यत्र गार्हस्थ्योचिता वार्ता पुरुषार्थत्रयसाधकमितिवृत्तं न तत्र वेश्याङ्गना नायिकात्वेन निबन्धनीया। विटादीनां तु नायकत्वेन कृतायां गार्हस्थ्य चिन्तायां वेश्यापि निबन्धनीया। यदि गृहस्थचिन्तावर्णनं न भवति श्रेष्ठिसार्थवाहादीनां च विप्रादिवदविरुद्धो वेश्यायोग इति सापि प्रदर्शनीयेति अव्यमर्यादा। तत्र न तु कुलस्त्रीसंगमः कर्तव्यः। एवं श्रेष्ठसचिवादिविषयं शुद्धमेदद्वयमुक्तम्। विटादिविषयस्तु संकीर्ण एव वेश्याकुलजाभ्यां भवति।

धनञ्जयः केवलं त्रिविधमेव प्रकरणं नायिकाभेदात्मन्यते—कुलजा, वेश्या, उभयमिति त्रेधा प्रकरणे वृत्तम्।[२]

प्रकरणस्य काचिदपरापि धारा पुरा प्रवाहिता महाकविभिः। तद्यथाश्वघोषस्य सारिपुत्रप्रकरणे सारिपुत्रो नायको मौद्गल्यायनेन सह बुद्धाद् दीक्षां लभते। तत्र स्त्रीपात्रस्य सर्वथाभावः। अत एव नायिकां विनापि प्रकरणं प्रकल्पितम्। प्रकरणस्य क्रीडामयसविधानेन सह वैयम्यस्य सघटनं तस्य निवारणं च प्रकरणेऽस्मिन्न दृश्यते।[३] नास्ति कश्चित् प्रतिनायकः सारिपुत्रप्रकरणे। साधारणतः प्रकरणेषु नायकप्रतिनायकयोः स्वाभीष्टसिद्ध्यर्थं संघर्ष एव सहृदयानामौत्सुक्यं संवर्धयति।

## नाटिका

नाटकप्रकरणयोर्योगात् नाटिका सम्भवति। तत्र नायको नृपतिः। नायिकान्तःपुरकन्या, संगीतशाला-कन्या वा प्राप्तव्या भवेत्। वस्तु उत्पाद्यं स्यात्।

१. ना० शा० १८.२१ अधिकृत्य भारती।

२. अमि प्रकरणं त्रेधा संकीर्णं धूर्तसङ्कुलम्। दश० ३.४२

३. नायकयोर्विपत्तिसागरसन्तरणमेव प्रकरणवस्तुनः प्रधानं लक्षणम्।

तत्र स्त्रीणां बहुलता प्रवर्तते। अर्थात् स्त्रीणां कार्याणि प्रचुराणि सन्ति। चतुरङ्का नाटिका ललिताभिनयात्मिको भवति। अर्थात् तत्र कैशिकीवृत्तिः प्रधानेति भरतमभिनवगुप्तस्य। सा तत्र चतुर्भिरङ्कैः सम्यग् विलसति।

अपरञ्च भरतानुसारेण सेयं नाटिका

बहुनृत्तगीतपाठ्या रतिसम्भोगात्मिका चैव।
राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता
नायकदेवीदूतीसपरिजना नाटिका ज्ञेया ॥१८.५९,६०

अत्र सम्भोगो राज्यप्राप्तिमपि द्योतयति। अभिनवगुप्तः प्रसादनक्रोधदम्भान् विशदयन् व्याख्याति—तत्पूर्वनायिकागतैः क्रोधप्रसादवञ्चनैरवश्यं भाव्यम्।

नायक.

धनञ्जयानुसारेण नाटिकाया नायको धीरललितो नृपतिः स्यात्। तत्र अङ्गी रसः स्वभावतः शृङ्गारः स्यादेव।

पूर्वनायिका तु महादेवी एव नवनायिकायाः प्रणयपथे बाधं समुपस्थापयति। सा धनञ्जयेन परिभाषिता—

देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा।
गम्भीरा मानिनी कृच्छ्रात्तद्वशान्नेतृसंगमः ॥३.४५

प्रेष्या नायिका तु

नायिका तादृशी मुग्धा दिव्या चातिमनोहरा ॥३.४६

वृत्तम्

दशरूपके तु

अन्तःपुरादिसम्बन्धादासन्ना श्रुतिदर्शनैः।
अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम् ॥३.४७
नेता तत्र प्रवर्तेत देवीत्रासेन शाङ्कितः ॥

नाटिकावृत्ते या प्रच्छन्नकामिता सविशेषं वर्तते, तत् भरतेन स्पष्टीकृतमधोविधिना—

बहुमानेन देवीनां वल्लभानां भयेन च।
प्रच्छन्नकामितं राज्ञः कार्यं परिजनं प्रति ॥
यद्यप्यस्ति नरेन्द्राणां कामतन्त्रमनेकधा।
प्रच्छन्नकामितं यत्तु तद्धि रतिकरं भवेत् ॥
यद् वामाभिनिवेशित्वं यतश्च विनिवार्यते।
दुर्लभत्वं च यन्नार्याः सा कामस्य परा रतिः ॥ २२.२०५, २०७

। नैतद् खलु ग्रन्थद्वयेन दृष्टं निर्दिष्टं वा ।

नाटिकाया नाम नायिकाया नाम्ना भवतीत्यनेन तत्र स्त्री-प्रधानता प्रतीयते ।

## प्रकरणिका

धनञ्जयो नाटिकया समां प्रकरणिकां न समर्थयति यद्यपि प्रकरणिका भरतेनापि समाम्नाता वर्तते । तथा हि—

अनयोश्च बन्धयोगादन्यो भेदः प्रयोक्तृभिः कार्यः ।
प्रख्यातस्त्वितरो वा नाटकयोगे प्रकरणे वा ॥१८.५७

विष्णुधर्मोत्तरे प्रकरणिकाऽप्येवंविधा लक्षिता—

ब्राह्मणो नायकस्तत्र वणिग्वा नृप सत्तम ।
एवं प्रकरणी कार्या चतुरङ्कापि सा भवेत् ॥१३.२०

अभिनवगुप्तोऽभिनेयार्थस्य कोटौ नाटिकां प्रकरणिकां च सम गणयति ।[1]

साहित्यदर्पणानुसारेण—

नाटिकैव प्रकरणी सार्थवाहादिनायका ।
समानवंशजा नेतुर्भवेद्यत्र च नायिका ॥६.३०६

नाट्यदर्पणे नाटिका-प्रकरणिकयोर्भेदः प्रपञ्चितः —

नाटिकायां च राजा प्रकरणिकायां तु वणिजादीनां विलास-प्रधानं धर्मार्थाविरोधिवृत्तं नाटकप्रकरणयोरिव व्युत्पाद्यम् ।

## भाणः

भाणस्य सांस्कृतिकभूमिका मृच्छकटिकेऽप्येवंविधा चारुदत्तेन विटेन प्ररोचिता—

साटोपकूटकपटानृतजन्मभूमेः
शाठ्यात्मकस्य रतिकेलिकृतालयस्य ।
वेश्यापणस्य सुरतोत्सवसंग्रहस्य
दाक्षिण्यपण्यसुखनिष्क्रयसिद्धिरस्तु ॥ ५.३६

दशरूपकेषु भरतानुसारेण भाणो नवमं धनञ्जयमतेन च तृतीयं स्थानं भजते । वस्तुतो भाणो दृश्यकाव्यस्य प्रशस्तोद्देश्यानि सम्यङ् न निर्वर्तयति विधिनिषेधात्मकतत्त्वस्य हीनत्वात् । रूपकाणां क्रमस्य निर्धारणमभिनवगुप्ता-

---

१. अभिनेयार्थं दशरूपकं नाटिका-त्रोटक-रासक-प्रकरणिकाद्यवान्तर-प्रपञ्चसहितमनेक-भाषा-व्यामिश्ररूपम् । ध्वन्यालोके ३.७ अधिकृत्य लोचनम्

नुसारेणाद्भुतरसप्राधान्यात् त्रिवर्गोपायत्वप्राधान्यापेक्षया च भरतेन कृतम्। अभिनवगुप्तो निर्दिशति यन्नाटकप्रकरणनाटिकां विहायान्यरूपकाणां तु त्रिवर्गोपायत्वं नास्ति तेषामेकाङ्गत्वात्। डिमस्तु चतुरङ्गोऽपि पश्चान्निर्दिष्ट इत्यत्र तल्लक्षणे कारणं वक्ष्याम्।[1] भरतमतेन समवकारस्तृतीयं स्थानं भजते।

अभिनवगुप्तो भाणं व्युत्पादयति—

एकमुखेनैव भाष्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति भाणः।[2]

कथावस्तु

हास्यरसोचितविटधूर्तादानुप्रवेशेन समानयोगक्षेमो भाण इत्यभिनवगुप्तस्य वचनम्। तत्र एक एव रङ्गे प्रविष्टः पात्रविशेषः आत्मानुभूतं वा शंसति, परगतं वा वर्णयति। भाणो बहुचेष्टो भवति। अर्थात् भाणे सामान्यपृथग्गतोभयोरप्यस्तु लोकव्यवहारो वेश्यावृत्तान्तात्मा निरूप्यते।

भाणो विविधाश्रयो भवतीति भरतवचनं तत्रार्थानां तरसम्बद्ध-लोकाना च वैविध्यमनुसन्दधाति। धनञ्जयो भाणे शौर्यसौभाग्य-संस्तवं विशेषयति। एतदपि सन्दिग्धमेव वच इति तत्र प्रकृतिदर्शनात् प्रतिभाति।

अपरं च भूयसा भारतीवृत्तिरेकाङ्कवस्तु कल्पितं चेति भाणं परिभाषते धनञ्जयः। तत्र सन्धिद्वयं मुखं निर्वहणं च विलसति।

रसः

'भाणे वीरशृङ्गारौ सूचनीयौ' इति धनञ्जयवचनमसमाधेयम्। उभयो रसयोः कृते उत्तमप्रकृतिरपेक्ष्यते। तस्या अभावो भाणे प्रत्यक्ष एव। भाणे वीररसस्यावसरो नास्ति। नृत्तकोटिके भाणे नृसिंहादिचरितवर्णनं वर्तते। तद्यथाभिनवगुप्तः सूचयति—

बालक्रीडाग्नियुद्धादि तथा सूकरसिंहजा।
ध्वजादिना कृता क्रीडा यत्र स्त्र स्त्रणिका स्मृता॥

इयं वीररसमयी भाणिका नृत्तमेव। सैव रूपकेण भाणेन भ्रान्त्या संयोजिता धनञ्जयेन। अत एव भाणोऽपि वीररसप्रवण इति परिभाष्यते। नैतत् साधु। भरतानुसारेण भाणेऽद्भुतरसस्य वैशिष्ट्यं रोचते।

---

१. ना० शा० १८.९२ अधिकृत्य भारती।

२. ना० शा० १८.१०७ अधिकृत्य भारती।

भाणे तु विस्मय एव प्रधान इति वदत्यभिनवगुप्तः ।[१] शृङ्गाराभासः स्यादेव साधारणस्त्रिया नायिकात्वात् विटादीना च नायकत्वात् ।[२]

रसः सूचनीयः स्यादित्यनेन वर्णनमात्रेण रसनिष्पत्तिर्जायते ।[३]

नायकः

भाणे विट एव नायको भवति ।[४] स तु अधमकोटिकः सन् धीरोदात्तादिषु चतुर्षु भेदेषु न समायाति ।

वृत्तिः

भाणे भारतीवृत्तिः प्रधानतः समुल्लसति ।[५] भरतानुसारेण तत्र कैशिकी-वृत्तिर्नास्त्येव ।[६] फलतः शृङ्गारोऽपि तत्र न भवेत् ।

लास्याङ्गानि

यथा वीथ्यङ्गानि सर्वेषु रूपकेषु प्रयुज्यन्ते, तथैव लास्याङ्गान्यपि सर्वेषु रूपकेषु विनिवेश्यन्ते । न खलु तेषां किमपि विशिष्टं स्थानं भाणे वर्तते । धनञ्जयस्यैष त्रुटिरेव यत् स 'लास्याङ्गानि दशापि च' इत्युक्त्वा तेषां वैशिष्ट्यं भाणे प्रवदति ।

लास्याङ्गानि तु नाट्योपयोगीनि, न तु नाट्याङ्गानीति अभिनवगुप्तेन सम्यग् व्याख्यातम् ।[७] अर्थात् तेष्वितिवृत्तात्मकता नास्ति । वस्तुतो लास्याङ्गानि रूपकविषया न सन्ति । तानि नाट्याभिनयविषया भवन्तु नाम ।

अभिनयविधानम्

अभिनवगुप्तानुसारेण भाणे वाचिक आङ्गिकश्चाभिनयो भवति । परसन्धि-वचनं स्वयमङ्गविकारैः पात्रविशेषोऽभिनयति । आकाशे शून्ये यानि पुरुष-

१. उत्सृष्टिकाङ्क-प्रहसनभाणास्तु करुणहास्य-विस्मय-प्रधानत्वात् रञ्जकरसप्रधाना. । ना० शा० १८.११० अधिकृत्य भारती ।

२ 'शृङ्गाराभास एव स्यान्न शृङ्गारः रसावन' भावप्रकाशने ४.१४२ साधारण-स्त्रीणां विषये ।

३, चतुर्विधाभिनयेन यदि रसो निष्पद्यते तर्हि दृश्यो रसो भवति । भावप्रकाशने ४.२२

२. नाट्यदर्पणे २ १६ ।

३. अभिनवभारती द्वितीये खण्डे पृष्ठ ४५२ ।

४. ना० शा० १८.८,९ ।

५. ना० शा० १९ ११७ अधिकृत्य भारती ।

कथितानि, स तान्येवानुवदन् सामाजिकान् बोधयति। तत्र लाभिनयार्थ-कार्य-नैरन्तर्यमपेक्ष्यते।

उपभोगः

अभिनवगुप्तो भाणस्य हीनप्रवृत्ति परिलक्ष्यैवैतस्य समर्थनहेतुं लिखितवान्-बाहुल्येन पृथग्जनव्युत्पत्ति-योनिरूपकमिदम् राजपुत्रादीनामपि शम्भलीवृत्तान्तो ज्ञेय एवावञ्चनार्थमिति।

## प्रहसनम्

प्रहसनं तु वस्तुतो रञ्जन-प्रधानं हास्यप्रायं भवति। तत्त् द्विविधम्—शुद्धम्, संकीर्णञ्च।

शुद्धं प्रहसनम्

भगवत्तापसविप्रैरन्यैरपि हास्यवादसम्बद्धम्।
कापुरुषसम्प्रयुक्तं परिहासभाषणप्रायम्॥

भाणे नाट्यं भवति नृत्तं वेत्यस्मिन् प्रसङ्गे अभिनवगुप्तस्य मतं प्ररोचनीयम्। नाट्यं तु नटेनैव क्रियते कस्यचिन्नायकस्य भूमिका स्वीकृत्य। किन्तु यत्र विटोऽपरस्य भूमिकां न गृह्णाति, तत्र नृत्तमेव भवति। भाणे विटः पात्रत्वं नार्हति।

अविकृतभाषाचारं विशेषभावोपपन्नचरितपदम्।
नियतगतिवस्तु विषयं शुद्धं ज्ञेयं प्रहसनं तु॥

१८ १०३-१०४

भगवत्तापसविप्रा यतिवानप्रस्थगृहस्था, अन्ये चाक्यादयस्तैरुपलक्षितम्। एते तत्र कथानुरूपा न सात्त्विका, अपितु कुत्सिता एव सन्ति अयथाकृताः। न तत्र विरूपतो विलसति।

भरतानुसारेण प्रहसने शुद्धे सति तत्र पात्राणां भाषा आचारश्च नास-त्यारलोलरूपौ।

कथाखण्डानि (पदानि) तत्र व्यभिचारिभिरुपपन्नानि भवेयुः। परिहास-भाषणानि प्रहसने भवन्ति। अभिनवगुप्तानुसारेणैकस्यैव कस्यचिच्चरितं दुष्टत्वात् प्राधान्येन प्रहस्यते।

संकीर्ण-प्रहसनम्

यस्मिन् प्रहसने वेश्या, चेटः, नपुंसकः, विटः, धूर्तो (कृत्रिमतापसादयः) भगवत्तापसादिभिः सह बहूनि पात्राणि भवन्ति, तद् संकीर्णं प्रहसनं भवति।

हास्यास्पदमेव तेषां वेषपरिच्छद चेष्टित करणादीनि।[1] धूर्तानां तत्र विवादः स्यात्। वीथ्यङ्गानि प्रहसने सम्यग् विलसन्ति।

अङ्कसंख्या

भरतेन प्रहसनेऽङ्कसंख्या न निर्धारिता। शुद्ध प्रहसनमेकाङ्क भवति, सकीर्णमनेकाङ्कमित्यन्येषां मतमभिनवगुप्तो वर्णयति। प्रायश प्रहसनानि एकाङ्कानि सन्ति। लटकमेलके हास्य चूडामणौ चाङ्कद्वयमस्ति। तत्र सन्धिद्वयमेव प्रवर्तते। लास्याङ्गानि न भवन्ति।

धनञ्जयस्तावत् भारतीय शास्त्र न सर्वथा समर्थयति प्रहसन-विषये। तदनुसारेण तु प्रहसन त्रिविध भवति—शुद्ध, विकृत, संकीर्णञ्च।

धनञ्जयस्य शुद्ध प्रहसनमस्ति—

पाखण्डिविप्रप्रभृति चेट-चेटी-विटाकुलम्।
चेष्टित वेषभाषाभि शुद्ध हास्यवचोऽन्वितम्॥

दश० ३ ५४,५५

इद शुद्ध प्रहसन तु भरतस्य सकीर्णप्रहसनेन समम्। धनञ्जयस्य विकृत प्रहसन तावत् विशिष्टमेव—

कामुकादिवचोवेषैः षण्ढकञ्चुकितापसैः। ३.५५

नैतन्मत भरतस्येति प्रागेव निर्दिष्टम्। स तु विकृत नाम प्रहसनं न प्रतिजानीते।

धनञ्जयस्य सकीर्णप्रहसनं तु विकृतमेव वीथ्यङ्गैः सकीर्णत्वाद् भवति।[2] एतन्मत सर्वथा निराधारमेव, यतो हि नाम वीथ्यङ्गानि तु सर्वविधेषु विलसन्त्ये-वेति भरतेन स्पष्टमेव प्रोक्तम्—

वीथ्यङ्गैः सयुक्त कर्तव्य प्रहसन यथायोगम्। १८ १०

वृत्ति.

वाग्व्यापारस्य प्रधानत्वात् प्रहसने भारतीवृत्तिर्मुख्यं विलसति। धनञ्जय प्रहसन भाणवन्मन्यते।

---

१ अत्युल्बण वाक्यादि। ना० शा० १८ १०९ अधिकृत्य भारती।

२ धनञ्जय प्रहसनस्य सकीर्णता धूर्तपात्राणा योगेन मन्यते—आभि, प्रहसन त्रेधा सकीर्ण धूर्तसकुलम् दश० ३ ४२। अत्रापि प्रहसन-सकीर्ण धूर्तपात्राणा योगेन मन्त-व्यमासीत्, यथा भरतेन निर्णीतम्।

प्रहसनेन पाखण्डप्रभृतीनां चरितं विज्ञाय विमुखः पुरुषो न भूयस्तान् वंचकानुपसर्पति ।[1]

## डिमः

अभिनवगुप्तानुसारेण डिमो डिम्बो विद्रव इति पर्यायाः । तत्र नाटकतुल्यं सर्वमन्यत् केवलं सन्धीना रसाना चासमग्रता । भरतो डिमं परिभाषते—

प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव ।
षड्रस लक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ॥
शृङ्गार-हास्यवर्जः शेषैः सर्वैः रसैः समायुक्तः ।
दीप्तरसकाव्ययोनि नानाभावोपसम्पन्नः ॥
निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः ।
युद्धनियुद्धाधर्षण-सम्फेटकृतश्च कर्तव्यः ॥
मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च ।
देवभुजगेन्द्र - राक्षसयक्षपिशाचावकीर्णश्च ॥
षोडशनायकबहुलः सात्वत्यारभटी-वृत्तिसम्पन्नः ।
कार्यो डिमः प्रयत्नान्नानाश्रयभावसम्पन्नः ॥ १८.८८

अभिनवगुप्तानुसारेण 'नानाश्रय-भाव-सम्पन्न.' इत्यनेन सर्वभावयुक्तत्वा- दितिवृत्तवैचित्र्यमाह ।' अपरञ्च यथावसरं डिमे शान्तो रसो विलसति ।

डिमे प्रवेशकविष्कम्भकयोर्निषेधः, किन्तु चूलिकाङ्कावताराङ्कमुखानामुप- योगो वर्तते ।

धनञ्जयेन डिमविषये नायकस्योदात्त्यं न चर्चितम्, यथा भरतेन कृतम् । यदि नाम धीरोदात्तो नायकस्तर्हि वीररसस्यैवाङ्गित्वं प्रतिपादनीयम् । धनञ्जयो रौद्ररसमेवाङ्गिनं मन्यते । अभिनवगुप्तस्तु डिमे वीररौद्रयोः प्राधान्यं व्याकरोति ।[2] डिमे चत्वारः सन्धयो विलसन्ति ।[3]

## व्यायोगः

अभिनवगुप्तानुसारेण व्यायोगस्तु डिमस्यैव शेषभूतः । नायकस्तु उदात्तो

---

१. नाट्यदर्पणे २.१८ वृत्तिः ।

२. समवकारे तु यद्यपि शृङ्गारादित्वमुक्तं तथापि वीर एव प्रधानो रौद्रो वा । डिमव्यायोगयोरप्येवम् । ना० शा० १८.११० अधिकृत्य भारती ।

३. ना० शा० १९.४५

राजादि, अमात्य., सेनापतिः दीप्तरसस्य योग्या', न देवा ऋषयो वा भरतानुसारेण व्यायोगे—

बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे। १८.९१

अर्थात् द्वादश कथापुरुषा भवन्ति। तत्र सन्धित्रय प्रवर्तते।[1] विष्कम्भकोऽपि तत्र भवतीति कतिपयाचार्या मन्यन्ते।

भरतो व्यायोगं परिभाषते—

> व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः।
> अल्पस्त्रीजन - युक्तस्त्वेकाहकृतस्तथा चैव॥
> बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे।
> न च तत्प्रमाणयुक्त. कार्यस्त्वेकाङ्क एवायम्॥
> न च दिव्यनायककृत कार्यो राजर्षिनायकनिबद्धः।
> युद्ध-नियुद्धाधर्षण-सङ्घर्षकृतश्च कर्तव्यः॥
> एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः॥ १८.९०-९३

नियुद्ध' बाहुयुद्धम्। संघर्ष. शौर्य-विद्याकुलरूपादिकृता स्पर्धा।

भरतमननुसृत्य धनञ्जयो धीरोद्धतमेव नायकं व्यायोगस्य मन्यते।[2] धीरोद्धतस्तु रौद्ररसस्य योग्य एव किन्तु वीररसस्योत्पत्तिर्धीरोदात्तेनैव भवति।

## समवकारः

त्रिवर्गोपाय प्रस्तुतिमपेक्ष्य भरतो रूपकेषु नाटकप्रकरणयोरनन्तरं समवकारं तृतीयमिति स्थापयति। न तावद् धनञ्जय एव प्रतिष्ठापयति समवकारम्। समवकीर्णश्च यत्रार्थ इत्यनेन समवकारो नाम सार्थकम्।

**नायकः**

समवकारे प्रख्यातो नायको देव. स्यात्।[3] स तु धीरोदात्तो भवति।[4] तत्र कथापुरुषाः त्रिषु अङ्केषु द्वादश स्यु. प्रत्येकमश्चत्वारो वा सर्वे मिलिताः संपाता द्वादश वा। असुरस्तु प्रतिनायक।

---

1 भाव प्र० ८.१८३ रसार्ण० ३ २३१

२. ख्यातोद्धतनरायश्च। दश० ३.६०

३ देवासुरा अपि पात्रख्याता बृहत्कथादौ श्रूयन्ते, स्वय वा केनचिदूह्यन्ते इति तन्निरासार्थं प्रख्यातपदम्। ना० शा० १८.६३ अभिकृत्य भारती।

४. स्वभावतस्तु देवा मनुष्यापेक्षया धीरोद्धतास्तथापि स्वापेक्षया गाम्भीर्यप्रधानतयोदात्ता उच्यन्ते।

### कथावस्तु

प्रवेशक-विष्कम्भक-विहीनम्, अप्रतिसम्बद्धकथावस्तु अङ्कत्रये विभक्तं स्यात्।[1] तत्र कपटत्रयं विद्रवत्रयं च स्याताम्। घटनावधिस्तु अष्टादशनाडिकाः कथाया वर्तते।[2] बीजेऽङ्कत्रयार्थं उपक्षेप्तव्यः। अयं प्रत्येकाङ्के पूर्णोऽपि असम्बद्धः सन्नपि तृतीयेऽङ्के फलानुवर्ती।[3] तत्र चत्वारः सन्धयो भवन्ति।

### अङ्के नाडी-विधानम्

प्रथमेऽङ्के कामशृङ्गारः प्रयोज्यः। तत्र कार्यं द्वादशनाडिकाविहितं स्यात्। तत्र कार्यविधौ प्रहसनकपट-विद्रवाणां वैशिष्ट्यं भवति। सोप्यङ्गानि तत्र भवेयुः।

द्वितीयेऽङ्के घटिकाचतुष्टयगामिभिः कपटादिभिरुपायैः कार्यं प्रवर्तते।
तृतीयाङ्के द्विघटिकान्तरसम्पाद्यैरुपायैः कार्यं समाप्यते।

### विद्रवः

समवकारे त्रिविधो विद्रवो भवति—अचेतनकृतः, चेतनकृतः, चेतनाचेतनकृत इति[4]। अचेतनकृतो जलवाय्वादिनोत्पद्यते, चेतनकृतो विद्रवः सिंहगजेन्द्राभ्याम्, चेतनाचेतनाभ्यां कृतो विद्रवो नगरोपरोधयुद्धाग्निभिर्भवति।

### कपटः

त्रिविधः कपटोऽङ्कत्रये क्रमशो भवति। अपराधविहीनो यदि कपटेन दह्यते स प्रथमविधो वस्तुस्वभावेन बुद्धया वा जनितः कपटः। यदि कपटवञ्चितः सापराधस्तर्हि द्वितीयविधः कपटः परप्रयुक्तः। तृतीयः कपटः दैवकृतः। तत्र करिष्यन्नायकोऽपचयेनापरस्योपचयेन युज्यत इति।

### शृङ्गारः

समवकारे त्रिविधः शृङ्गारः—धर्मे, अर्थे च कामे च विलसति। कामशृङ्गाराय परस्त्री नायिकात्वेनाभिप्रेता। यथा शक्रस्याहल्या। धर्मार्थं शिवस्य पार्वती अभीप्सिता। अर्थार्थं तु पद्मावती स्यादुदयनस्य नायिका। तत्र बहवो

---

१. अप्रतिसम्बद्धमिति किञ्चित् सम्बद्धम्, न तु पूर्णतयासम्बद्धमिति अभिनवगुप्तः। ना० शा० ४.७

२. नाडिका मुहूर्तार्धं भवति। अहोरात्रे ३० मुहूर्ता भवन्ति।

३. न स्वस्थोऽङ्कः परस्परम्। ना० शा० १८.६९

४. यस्माद् विद्रवन्ति जना स विद्रवः इति अभिनव गुप्तः।

रसा अङ्गिन इत्यभिनवगुप्तो ध्वन्यालोकलोचने प्रतिपादयति । धनिको वीरमेवाङ्गिनममन्यत इत्यन्यो मार्गः ।

**छन्दांसि**

'उष्णिग्, गायत्री, अपराणि च विषमार्धसमानि वृत्तानि समवकारोचितानि सन्ति । उद्भटः स्रग्धरादीनि एव तत्र प्रयोज्यानीति मन्यते ।'[1]

धनञ्जयस्तु समवकारस्य परिभाषाया कतिपय-विशेषान् प्रपञ्चयति । तथा हि, समवकारस्य नाटकवदामुखं भवति । तत्र कैशिकीवृत्तिर्न भवति ।[2] वीररसस्य तत्र प्राधान्यमस्ति । प्रथमेऽङ्के सन्धिद्वयमस्ति । बिन्दुप्रवेशकौ समवकारे न स्तः । यथा प्रहसने तथा समवकारेऽपि वीथ्यङ्गानि स्युः ।

अभिनवगुप्तानुसारेण समवकारे बहूनां लोकानां स्वभावतो रञ्जनं भवति । तद्यथा—एवं श्रद्धालवो देवताभक्ताः तद्देवयात्रादावनेन प्रयोगेणानुगृह्यन्ते, निरनुसन्धानहृदयाः स्त्रीबालमूर्खाश्च विद्रवादिनाहृतहृदया क्रियन्ते । भरतानुसारेण समवकार उत्साहजननं करोति ।[3] ।

## वीथी

अभिनवगुप्तानुसारेण वीथ्या माहात्म्यं सविशेषमेव । तत्र किं कारणम्, सर्वरसमयत्वात्, अवितत्तस्वभावत्वाच्च संक्षेपेण व्युत्पत्तिदायित्वेन प्रधानभूतत्वात्तदङ्गानां च नाटिकादि-भाणान्त-समस्त-रूपकोपजीव्यत्वाद् वीथी महत्त्वपूर्णाऽस्ति । वीथ्यङ्गैः काव्यबन्धः सर्वेषु रूपकेषु सुसमाहितो विधीयते ।

**नायकः**

वीथ्यां सर्वे रसाः सम्भवन्ति । तेषामाश्रयास्तूत्तममध्यमाधमनायकाः सन्ति । भाणवदेकहार्यायां वीथ्यामेको नायको भवति । अन्यथा द्विहार्यायां वीथ्यां नायकद्वयं वर्तते । तत्रोक्तिप्रत्युक्तिद्वारेण वीथीकथा प्रवर्तते ।

**वृत्तिः रसाश्च**

वीथ्यां सन्धिद्वयात्मके कथावस्तुनि कैशिकीवृत्तिर्विलसति । फलतः शृङ्गारो

---

१ ना० शा० १८ ७७ भारती ।

२. यदि नाम शृङ्गारस्य समवकारेऽस्ति, तर्हि कथं कैशिकीवृत्तिर्न स्यादिति समाधेयम् । अभिनवगुप्तानुसारेण तत्र नर्माद्यङ्गचतुष्कतदुपरञ्जकगीतनृत्यवाद्याद्यभावात् कैशिक्या हीना अन्य वृत्तयः सन्ति ।

३ ना० शा० ४२ ।

हास्यो वा प्रधानो रसो वर्तते। तत्र वीथ्यङ्गानि आत्मनीनान्येव विलसन्ति। कथावस्तूदात्तं भवति।

**वीथ्यङ्गानि**

वीथ्या अङ्गानि वक्रोक्ति-वैशिष्ट्यं भजन्ते। तेषां संख्या त्रयोदश उद्घात्यम्, अवलगितम्, प्रपञ्चः, त्रिगतम्, छलनम्, वाक्केली, अधिबलम्, गण्डः, अवस्यन्दितम् नालिका, असत्प्रलापः, व्याहारः, मृदवमिति। एतेषु प्रथमद्वय-मामुखाङ्गत्वादामुख-प्रकरणे वर्णितम्। शेषभूतानि वीथ्यङ्गानि लक्ष्यन्ते।

**प्रपञ्चः**

यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परं यत्तु।
एकस्य चार्थहेतो स हास्यजनन प्रपञ्चः स्यात्॥

**त्रिगतम्**

वीथ्यङ्गस्य त्रिगतं पूर्वरंगस्य त्रिगतात् भिन्नमेव। अत्र त्रिगतं तु—

श्रुति-साम्याद्यस्मिन् बहवोऽर्था युक्तिभिर्नियुज्यन्ते।
यद् हास्यमहास्यं वा तत् त्रिगतं नाम विज्ञेयम्॥

**छलनम्**

अन्यार्थमेव वाक्यं छलनमभिसन्धानरोषकरम्।

**वाक्केली**

एकद्विप्रतिवचना वाक्केली स्यात् प्रयोगेऽस्मिन्।

**अधिबलम्**

भरतो धनञ्जयश्चोभौ परस्परमहमहमिकया विशेषवचनप्रस्तावोऽधिबलमिति मन्येते।[1] अधिबल मिदमेव—अभिसन्धिरिति गर्भसन्धेरङ्गात्।

**गण्डः**

भरतो गण्ड विस्तरेण परिभाषते—

संरम्भसम्भ्रमयुतम् विवादयुक्तं तथापवादकृतम्।
बहुवचनाक्षेपकृतम् गण्डं प्रवदन्ति तत्त्वज्ञाः॥ १८.१२६

तत्र गण्डवचनस्य चत्वारि विशेषणानि सन्ति—संरम्भ-सम्भ्रमयुतम्, अप-वादकृतम्, विवादयुतम् बहुवचनाक्षेपकृतमिति। अस्मिन् प्रकरणेऽपवादस्तु पूर्वोक्तवस्तुनोऽपवदनमेव। बहुवचनाक्षेपस्तावत् पूर्ववचनस्यासमाप्तिकारणात् सम्भवति।

---

१. अन्योन्यार्थविशेषमधिबलमिति तदनुचिन्त्यम्। ना० ना० १६.१२३
अन्योन्याधिनयोक्तिः स्पर्धयाधिबल भवेत्। दश० ३.१०

धनञ्जय संक्षेपेण गण्डं परिभाषते। तद्यथा

गण्डः प्रस्तुतसम्बन्धि भिन्नार्थं सहसोदितम् ॥ ३.१८

अत्र भरतेनोदितानि विशेषणानि न लक्षितानि। गण्डे तु पूर्वविश्रान्तमपि वाक्यमुत्तरवाक्येन संश्लिष्यते। तदेव संश्लेषण कमपि अदृष्टपूर्वमर्थं भाविनमपि दर्शयति। इदमेव गण्डत्वम्। गण्डस्तु साधारणतोऽनर्थमेव द्योतयति।[1] अत एव गण्डनाम सार्थकम्। गण्डस्य वक्ता तदर्थमेव रङ्गं सहसा प्रविशति।

अवस्यन्दितम्

अभिनवगुप्तानुसारेणाबुद्धिपूर्वं कुत्रचिदर्थे आक्षिप्तेऽपि कौशलात्तत्प्रच्छादनेच्छया यत्रोत्तरोऽन्योऽर्थ उच्यते तदवस्यन्दितम्। तत्र भरतस्य कारिकाऽघोलिखिता—

आक्षिप्तेऽर्थे तु कस्मिंश्चिच्छुभाशुभसमुत्थिते।
कौशलादुच्यतेऽन्योऽर्थस्तदवस्यन्दितम् भवेत् ॥

एतदेव धनञ्जय संक्षेपेण परिभाषते—

रसोक्तस्यान्यथा व्याख्या यत्रावस्यन्दितं भवेदिति।

कस्यापि प्रयुक्तपदस्य वस्तुत पूर्वमनभिप्रेतमुत्तरवाक्येषु व्याख्यायत इति अवस्यन्दनं भवति।

नालिका

प्रहेलिकैव नालिका भवति, यदि नाम सा हास्यार्थं प्रयुज्यते। तत्र नर्मादिक्रीडाभावस्यावश्यम्भावित्वम्। धनञ्जयो नालिकाया नव विशेषणं निगूढार्था इति योजयति। तत्तु व्यर्थमेव। निगूढता प्रहेलिकाया भवत्येव।

असत्प्रलाप.

भरतानुसारेणासत्प्रलापस्तु मूर्खैविदुषा हितवचनस्याग्रहण स्यात्। तद्यथा—

मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान्।
न च गृह्यतेऽस्य वचन विज्ञेयोऽसत्प्रलापोऽसौ ॥ १८ ११९

अभिनवगुप्तस्तु असत्प्रलापे श्लेषेण द्विविधं तत्त्वमावश्यकं मन्यते—हितं प्रियं च। तत्र मूर्खं प्रियं गृह्णाति हित च न गृह्णातीति। असतोऽसाधुभूतस्य वस्तुन प्रलपनमस्मिन्निति असत्प्रलाप।[2]

---

१. यथा उत्तररामचरिते प्रथमाङ्के परमसहास्तु विरह उपस्थित।

२. सर्वथा मोऽक्षविजयो सुरासेवनतत्पर.।
तस्यार्यानां सुखानां च समृद्धि. करगामिनी ॥ इत्युदाहरणम्

असम्बद्धकथाप्रायोऽसत्प्रलापो यथोत्तरः। ३.२०

एतत् व्याख्यातं धनिकेन—उत्स्वप्नायित-मदोन्माद-शैशवादीनामसम्बद्ध-प्रलापितैव विभावः।

व्याहारः

भरतानुसारेण व्याहारस्तु हास्यलेशार्थः प्रत्यक्षवृत्तिरेव कस्यचिदुक्तेः। अभिनवगुप्त एतद् व्याख्याति—प्रत्यक्षशब्देन भावी प्रत्यक्ष उच्यते। तदयमर्थः—भाविनि प्रत्यक्षेऽर्थे दैववशात् वृत्तिर्यस्य स व्याहारः। विविधोऽर्थोऽभिनीयते येन। यथा, उद्दामोत्कलिकां इत्यादि।[1] तत्र हास्यस्य मात्रा स्वल्पैव।

धनञ्जयस्तावदन्यथा परिभाषते व्याहारम्। तद्यथा,

अन्यार्थमेव व्याहारो हास्यलोभकरं वचः। ३.२०

अर्थात् किमप्यनुक्तमुद्दिश्य व्याहार-वचनं भवति, येन हास्य लोभश्च प्रथमतः प्रकटीभवतः।

मृदवम्

भरतानुसारेण—

यत्कारणाद् गुणानां दोषीकरणं भवेद् विवादकृतम्।
दोषगुणीकरणं वा तन्मृदवं नाम विज्ञेयम्॥

अत्र विवादप्रसङ्ग आवश्यक इति भरतो मनुते। नैतन्मतं धनञ्जयस्य। तदनुसारेण केवलं दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्।

अभिनवगुप्तस्तु मृदवस्य व्युत्पत्तिमनुसृत्य व्याख्याति—मृदवमितिमर्दनं यत्परपक्षमर्दनेन स्वपक्षमवति रक्षतीति।

वीथ्यङ्गानि सन्ध्यङ्गेभ्यः पताकास्थानकेभ्यश्च सर्वथा भिन्नानि। वीथ्यङ्गानि वक्रोक्तिद्वारेण वैचित्र्यमात्रं निवेशयन्ति, इतरद्वयं च पुनः इतिवृत्तांशं प्रकाशयति।

## उत्सृष्टिकाङ्कः

उत्सृष्टिकाङ्कस्यापरं नाम अङ्क एव। अभिनवगुप्तानुसारेणोत्क्रमणीया सृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचन्त्यः स्त्रियस्ताभिरङ्कित इत्यङ्कः।

कथावस्तु

'अङ्के सन्धिद्वयात्मकं कथावस्तु प्रख्यातमप्रख्यातं वा विकल्पेन भवति' इति

---

[1] रत्नावली २.४

भरत.। अत्र धनञ्जयस्य वैमत्यं वर्तते। तदनुसारेण केवलं प्रख्यातमेवाङ्कस्य वस्तु भवितुमर्हति।[१] भरतानुसारेणाङ्कस्य कथा युद्धवृत्तस्य पश्चात् प्रारभ्यते। नैतदपि धनञ्जयेन गृहीतम्। विपरीतमेव स लक्षयते यत्—

वाचा युद्धं विधातव्यं तथा जयपराजयौ। ३.७२

भारतानुसारेण तु युद्धसमारम्भस्तत्र न सम्भवेत्। जयपराजययो तत्र का कथा।

अभिनवगुप्त स्पष्टयति—भारतादियुद्धे यत्करुणबहुलं चेष्टितं वर्ण्यते, तत्स्यात् स्त्रीपर्ववृत्तान्तवत्।

स्त्रीणां परिदेवना, अन्येषां च निर्वेदमापणं स्याताम्। व्याकुलचेष्टा सन्तु नाम।

**नायकः**

अङ्के देवा नायका न स्युः।[२] धनञ्जय. केवलं प्राकृतं नरमेव नायकं निर्दिशतीति विपरीतमेव।[३]

**वृत्तिः**

अङ्के केवलं भारतीयवृत्तिरेव स्यात्। यथा भाणे भवति। धनञ्जयानुसारेणाङ्के भाणवत् सन्धि-वृत्त्यङ्गानि सन्ति।

**रसः**

करुणरस स्थायी स्यादङ्के।

## ईहामृगः

१. ईहामृगस्य व्युत्पत्तिमभिनवगुप्त आह—ईहा चेष्टा मृगस्येव स्त्रीमात्रार्था यत्र, स ईहामृग।

**कथावस्तु**

ईहामृगे दिव्यस्त्रीकारणोपगतं युद्धं भवति। तत्र सन्निश्रयेण वस्तु सुविहितं (सुश्लिष्टम्) सुसमाहितं च स्यात्।[४] काव्यबन्धश्च विप्रत्ययकारकः

---

१ प्रख्यातवस्तु विषयस्त्वप्रख्यातं कदाचिदेव स्यात्। ना० शा० १८.९४ उत्सृष्टिकाङ्क अस्यात वृत्तं प्रपञ्चयेत्। ३.७

२. दिव्यपुरुषवियुक्त.। ना० शा० १८.९४

३. नेतार प्राकृता नरा.। दश० ३.७१

४. अभिनवगुप्तो व्याख्याति—सुविहितं इति समवकारवत् असम्बद्धार्थता तत्र न भवेदिति। पुनश्च स कथयति—सुसमाहित. काव्यबन्ध इत्यनेन वीथ्यङ्गानि अत्र योज्यानीति।

( विश्वास-हेतु-रहित ) स्यात्। संक्षोभ, विद्रव, सम्फेटश्च सन्ध्यङ्गानि योज्यानि। स्त्रीभेदनप्रहरणावमर्दनेषु शृङ्गाररस प्रवर्तते। न तत्र सघर्षे युद्ध भवेत्। युद्ध तु केनापि व्याजेन शमयितव्यमेव।

धनञ्जयस्तु मिश्रं वस्तु ईहामृगे लक्षयते। तत्तु प्रथमपदेऽभारतीयमेव। अन्यच्च मिश्रं नाम वस्तु न भवत्येवेति प्रागेव प्रतिपादितम्। धनञ्जय ईहामृगे चत्वारोऽङ्का भवेयुरिति नियमयति। भरत ईहामृगमेकाङ्क मन्यते।

नायक

ईहामृगे नायको देव एव स्यात्। बहव उद्धत-पुरुषा अपि कार्येषु नियुक्ताः सन्ति। तेषा रोष स्त्रीनिमित्तक एव स्यात्। नायिका तु दिव्यस्त्री प्रागेव प्रतिपादिता। नायकाना सख्या व्यायोग-समवकारवद् द्वादश भवति। भरतो विस्पष्टयति।

> यद् व्यायोगेम कार्यं ये पुरुषा वृत्तयो रसाश्चैव।
> ईहामृगेऽपि ते स्युः केवलममरस्त्रिया योगः॥ १८-८१

भरत-धनञ्जययोर्भेद

भरतानुसारेण नायकः केवल दिव्यः पुरुष एव स्यात्। धनञ्जयस्तु नरो वा दिव्यो वा नायको भवेदिति भरतं न सम्यगनुसरति।[1]

भरतानुसारेणाङ्क एक एव तत्र स्यात्, किन्तु धनञ्जयोऽङ्काश्चत्वारो भवेयुरिति नियमयति।[2]

## अन्यविशेषाः

नाटकस्य प्रधानमुद्देश्यं द्विविधं वर्तते—

(१) रसनिष्पत्ति (२) उपदेशजननं च

वर्णनम्

रसनिष्पत्तये कथाख्यानपेक्षितापि विभावाना वर्णना सुतरा निबन्धनीया भवति। यतो हि नाम तेषामेव प्रभावेणाश्रयस्य स्थायिभावो तदनु अनुभावाश्च स्फुटीभवन्ति। यथाभिज्ञानेऽसौ वर्णना मृगया-तपोवन-मुनियात्रापथ-राजतत्त्व-वर्णाश्रमधर्म-सत्क्रियादर्शनीतिपथ-प्रजाप्रतिपत्तिकार्याकार्यविचारणा-नायकसौन्दर्य-सम्भोग – विप्रलम्भ-चित्रदर्शन-पुत्रोदय-नगर-निशा-प्रभात-मध्याह्नादिविषयानधिकृत्य प्रवर्तते। महाकाव्ये वर्णनानि

१. नरदिव्यावनियमान्नायक-प्रतिनायकौ। ३ ७३

२. मिश्रमीहामृगे वृत्त चतुरङ्कम्। दश० ३ ७२। कार्यवशादेनाङ्क उच्यते। तेनैक एवाङ्क। ना० शा० १८.८१ अधिकृत्य भारती।

दीर्घतराणि भवन्ति नाटके च प्रायः संक्षिप्तान्येव सन्ति।[१] अनया च वर्णनया कवि: पाठकेभ्यः प्रेक्षकेभ्यश्च तां कविदृष्टिं प्रयच्छति यया लोकोऽयं रामणीयकः प्रतिभाति। कविरालम्बनविभावस्य आश्रयस्य रसप्रवणौदार्यं विविधप्रकाराभिधानैः प्रस्तावयति।[२]

उपदेशः

उपदेशस्तु द्विविधं भवति—समुदाचार-प्रदर्शनेन, अभ्युदयपथनिर्देशेन च। तत्र न भवत्यभिधयोपदेशोऽपितु व्यञ्जनया महता वृत्तिमनुसरतो नायकस्यादर्शोपस्थापनेन। चतुर्वर्गसाधनोपाया उपदेशस्य परं प्रयोजनं प्रवर्तयन्ति।

न खलु नाटके कुपथ-प्रवर्तिनी-प्रवृत्तिः प्रसङ्गतोऽपि उपादेया। भाणादिषु अधमाना विटाना नायकाना च परस्त्रीसंग्रहण-कूटकपटा बहुधा कविभिर्निबद्धा न खलु प्रशंसास्पदम्। अतो हि नाम भरतानुसारेण—

लोकोपदेशजननं नाट्यमेतद् भविष्यति। १.११
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्। ४४ १२

गेटे समर्थयति—What the author brings forward of a graceful life and the culture of a high soul. The high personality of the poet should reflect from the drama. This alone influences the cultivation of the people. European Theories of Drama P. 334

रहस्य-विन्यासः

किमपि वृत्तानुरोधि भूतं भावि वा रहस्य प्रेक्षका व्यञ्जनया, अभिधया, संकेतेनार्थापत्त्या वा शीघ्रं जानन्त्विति कविर्यतते। तदेव वृत्तं को नायकः कदा केनोपायेन जानात्विति रसावर्जनदृष्ट्या कविना कौशलेन सम्पाद्यते।[३] कस्यचिद् रहस्यस्य ज्ञानेनाज्ञानेन च नायकाना यद् भाववैशिष्ट्यं वृत्तिवैचित्र्यं च जन्येते तत् सहृदयाना रसास्वादस्यान्यतम- किन्तु महत्त्वपूर्णं उद्गमं। न

१. नाट्यशास्त्रीयानुसन्धाने 'नाटके वर्णनसन्निवेश' इत्यध्याये पृष्ठानि २६–४१।

२. ईदृशानि वचनानि बाणोविषयकाणि सन्ति—आत्मचर्चा, एकोक्ति, शिष्टाचार, वशोल्लेखः, कुलवृत्तम्, उपलब्धि, नियोग, अनन्यसाधारणाभिज्ञान, सूक्ति सम्बोधनञ्च। विशेषविवरणे नाट्यशास्त्रीयानुसन्धाने पृष्ठानि १०७–११९।

३ विशेषविवरणं नाट्यशास्त्रीयानुसन्धाने पृ० २८०-२८७

केवलं कलापेक्षयापितु अभीप्टं साधयितुं दुरितं निवारयितुं चापि रहस्यरक्षणमावश्यकं भवतीति कालिदासेनाभिज्ञानशाकुन्तलेऽनसूयामुखेनाप्रोविदं निदर्शितम्—

मालतीमाधव इदं रहस्यरक्षणं तु संवरणमिति प्रोक्तम्—तत्र कामन्दकी अवलोकितां सूचयति—वत्से संवरणं तव्।

विशेषतस्तु बालत्वात्तयोर्विवृतभावयो।
तेन माधवमालत्योः कार्यः स्वमतिनिह्नव.॥

सोऽयं नाटकीयविशेषो नाट्यस्य प्राणा इव विलसति महनीयेषु रूपकेषु। घटनात्मकं रहस्य-रक्षणं नायकादीनां तद्विषयकज्ञानाभावेन जनितं वैधुर्यं प्रेक्षकाणां मानसे सहानुभूतिं बिभर्ति।

रहस्यमेव वर्धन्ते नायकादीनां कृतेऽप्रोविघघटनाः—

प्रतिमानाटके—रामस्य प्राणरक्षणार्थं कैकेयी तं विवासयति।

स्वप्नवासवदत्ते—वासवदत्ता म्रियते न मृता।

यौगन्धरायणे—यौगन्धरादीनां प्रच्छन्नरूपता, कार्ययोजना।

मालविकाग्निमित्रेऽन्यासु बहुषु नाटिकासु च—नायिकाया आभिजात्यम्।

मुद्राराक्षसे—चाणक्यस्य कार्ययोजना।

उत्तररामचरिते—विवासनानन्तरं सीताया इहलोकवर्तनम् तृतीयेऽङ्के रामोपासनं च।

मिथ्याचारः

मिथ्याचारं विना नाटकं न भवतीति अप्रियं किन्तु भृशं सत्यमेव। नानारूपधरो मिथ्याचारः संवरण-मृषाभाषणाऽसत्यभाषणान्यथाकरण-भावनिगूहन-परिहासवचन-श्लिष्टपदावली-छायारूप-कृतकप्रयोगेन्द्रजालादिभिर्नाट्यशरीरं आद्यन्तं व्याप्नोति।

मिथ्याचारेण प्रायो वञ्चना विधीयते, किन्तु क्वचन मिथ्याचारोऽभ्युदयावहो भवति। अनेन बहुविधानि प्रयोजनानि साध्यन्ते सविधानक्षेत्रे। भासो नाटके मिथ्याचारस्य प्रथमः प्रवर्तकः। अनिच्छन्नपि कश्चिज्जनो मिथ्याचारी भवत्येवेति निदर्शने भासः पटिष्ठः।[1] यथा—

स्वप्नवासवदत्ते—मन्त्रिणा कार्पटिकयोजनया वासवदत्तादाहः, प्रतिमायौगन्धरायणे-नीलहस्ति-प्रकरणम्।

प्रतिमानाटके—रावणस्य परिव्राजकरूपेण मारीचस्य मृगरूपेण प्रच्छन्नता।

1. विशेष विवरणं नाट्यशास्त्रीयानुसन्धाने पृ० ३०७-३२७

अभिषेके—छलेन रामस्य वालिवध ।

बालचरिते—पूतनाया गोपीरूपेण स्तन्यपानम्, कंसस्य इन्द्रमहे कृष्णामन्त्रणम् ।

पञ्चरात्रे—पाण्डवाना विराटनगर आत्मनिगूहनम् ।

### अवान्तरकथा-समावेशः

मुख्यकथाधारातः सर्वथा पृथगपि लोकरुचित कथान्तरं कविः क्वचित समावेशयति । यथाभिज्ञाने षष्ठाङ्के सन्तानहीनसार्थवाहस्योत्तराधिकारवृत्तं यथा वा वेणीसंहारस्य तृतीयाङ्केऽश्वत्थाम्नो वृत्तम् । एताभ्यां विनाऽपि नाटककथा मानागपि हीना नाभविष्यत् । मृच्छकटिके द्यूतप्रसङ्ग एतादृशेषु कथान्तरेषु प्राथम्य भजते ।

### अज्ञातनायकत्वम्

नाटकेषु प्रच्छन्नरूपा नायका नाट्यचमत्कार सुतरामाविर्भावयन्तीतिस्युद्दिश्य प्रायो नायकानामज्ञातकुलशीलता स्वैरं समासादिता । भासस्तु विधानेऽस्मिन् पटिष्ठ पञ्चरात्रनामके नाटके । तथैवान्यथाज्ञातपात्रमपि विस्मयकर वैषम्य समुत्पादयति । यथा वेणीसंहारस्य सप्तमाङ्के भीम- ।

### भूमिकायास्तस्याः कार्यस्य च परिचयः

किमपि पात्र प्रथमवार यदा रङ्ग प्रविशति, स प्रायशः स्वीयं सप्रसर्ग स्वकार्यव्याख्यानेन सह प्रेक्षकाणा विज्ञापनाय निवेदयति ।[1] क्वचिद् विष्कम्भकादिषु सर्वाणि पात्राणि सक्षेपेण वर्ण्यन्ते ।[2]

---

१ अभिज्ञाने द्वितीयाङ्कस्य प्रवेशके—
विदूषक —भो कष्टम् । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि ।
अत्र 'वयस्य भावेन' वक्तुर्विदूषकत्व प्रकटितम् ।

२. मालतीमाधवे प्रथमाङ्कस्य विष्कम्भके ।

# रसविमर्शः

## आनन्दरूपो रसः

लौकिकव्यापारेषु सुखदुःखस्यानुभूतिः स्यात्। रसस्तु दुःखात्मकः सुखात्मको वा वस्तुतो न भवति। अलौकिकोऽयं कश्चिद् रसव्यापारः आनन्दरूपः सुखदुःखव्यतिरिक्तः। तत्राभिनवगुप्तानुसारेण

'संवेदनमेवानन्दघनमास्वाद्यते' तत्र का दुःखशङ्का। केवलं तस्यैव चित्रताकरणे रतिशोकादिवासनाव्यापारः तदुद्बोधने चाभिनयादिव्यापारः[1]। तदेतद् संगीतचन्द्रे सुष्ठु प्रोक्तम्—

सामाजिकैश्चर्व्यमाणश्चमत्कारात्मकः परः
आनन्दो ब्रह्मणो रूपं रस इत्युच्यते तथा ॥ कारिका १८०१

अपरं च भरतः—

भावाभिनयसम्बद्धान् स्थायिभावांस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥ ६.३३

अर्थात् सहृदयाः (प्रेक्षकाः) आश्रयस्य सञ्चारिभावैरनुभावैश्चोपस्थितान् स्वीयान् स्थायिभावान् मनसास्वादयन्ति।[2] अयमास्वादः केवलं प्रेक्षकागामेव प्राप्तो नाट्यसमुद्भूतः। नाट्याद्रसः।[1] रसाश्चनाट्यस्य प्राणाः।[3] नाट्य एव रसो न लोके।[4] रससमुदायो हि नाट्यम्।

अनभिनेये काव्ये रसः कथं स्यात्? अत्रोच्यते—काव्येऽपि नाट्यायमान

---

१. ना० शा० ६.३३ अधिकृत्य भारती।

२. विभावादीनां वक्ष्यमाणा सहृदयस्य स्थायिना सम्बन्धः कथं भवतीति अभिनवगुप्त प्ररोचयति—
प्रेक्षकस्य हृदयसंवादक्रमेण तन्मयीभावापन्नप्रमातृभूम्यभेदमुपसम्प्राप्ताः स्थायिनः।

३. ना० शा० १३.५६ अधिकृत्य भारती।

४. ना० शा० ६.३३ अधिकृत्य भारती।

एव रसः। काव्यार्थविषये हि प्रत्यक्षकल्पसंवेदनोदये रसोदयः।'[1] 'नाट्ये एव रसो न लोके' इति।

भावा अभिनयद्वारेण रसान् भावयन्ति (सम्पादयन्ति)। अत एव

न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिस्तयोरभिनये भवेत्॥ ६.३६

रसबन्ध एव कवेः प्राधान्येन प्रवृत्तिनिबन्धनं युक्तमित्यानन्दवर्धनाचार्यस्य कविशिक्षा। अन्यच्च—रसज्ञतैव सहृदयत्वमिति।

संस्कृतरूपकेषु रसा अङ्गाङ्गिरूपेण दृश्यन्ते। अङ्गिनो रसास्तु केवलं शृङ्गारः, वीरः, रौद्रः, करुणः, हास्यः, शान्तः, अद्भुतश्च भवन्ति। शेषौ भयानको बीभत्सश्चाङ्गरस एव प्रतीयेते। अङ्गिरसेषु यद्यपि शृङ्गारो रसराज इति प्रथितः तथापि तस्य प्रतिष्ठा नाटकेषु सर्वोपरि नास्त्येवेति विपश्चितां मतं समर्थितमेव। तद्यथाभिनवगुप्तो विशदयति—

वीररौद्रशृङ्गाराः

सर्वरसयोग्यतायामपि नाटके प्रकरणे च धर्मार्थादिवीर एव प्रधानम्। परमार्थतः सर्वेषु नायकभेदेषु वीररसानुगमदर्शनात्। समवकारे तु यद्यपि शृङ्गारादित्वमुक्तं, तथापि वीर एव प्रधानं रौद्रो वा। डिमव्यायोगयोरप्येवम्। ईहामृगेऽपि रौद्रप्राधान्यमेव।' अतः परं स उपसंहरति—

अङ्गिरसविषये

(१) एवं तावद् वीररौद्रशृङ्गारा यथास्वं पुमर्थत्रयप्रमाणभूतत्वेन वर्तमानाः।[2]

(२) एतेषु प्रयोगेषु शान्तबीभत्सरसौ तु चरमपुमर्थयोगात्तत्र च सर्वस्य नाधिकारोऽपि कस्यचिदपश्चिमजन्मनोऽधिकारान्नाटके यद्यपि तत्फलप्रधानतया प्राधान्यमवलम्बेयाताम् तथापि नासौ प्रचुरप्रयोग इति तयोः पुरुषार्थप्रसरप्राणितयोरपि वीरादिरसान्तराध्यावापेनावस्थापनम्।

---

१. अत्राभिनवगुप्तः स्वगुरोर्भट्टतोतस्य मतमुद्धरति निष्कर्षरूपेण।
(क) प्रयोगत्वमनापन्ने काव्ये नास्वादसम्भवः।
(ख) वर्णनोत्कलिता भोगप्रौढोक्त्या सम्यगर्पिताः।
उद्यानकान्ताचन्द्राद्या भावाः प्रत्यक्षवत् स्फुटाः॥
ना० शा० ६.३२ अधिकृत्याभिनवभारती

२. क्रमशो वीरेण धर्मो रौद्रेणार्थः शृङ्गारेण कामश्च।

अङ्गरस विषये

(३) एवं तावत् पुमर्थविषयो रूपकरसविषय एव परमार्थतः, तथापि त्विति-वृत्तवैतत्वाद् रसान्तरप्रयोगोऽपि तदङ्गतया तत्र भवति ।

करुणहास्यविस्मयाः

(४) उत्सृष्टिकाङ्कप्रहसनभाणास्तु करुणहास्य-विस्मयप्रधानत्वाद् रञ्जकरस-प्रधानाः । तत एवात्र स्त्रीबालमूर्खादिरधिकारी ।

अत्र पूर्वोक्तस्य निष्ठयूतार्थोऽर्थोविव विलसति—

(१) पुमर्थत्रयोद्दिष्टा वीररौद्रश्रृङ्गारास्तु उच्चकोटिकेषु रूपकेषु अङ्गिरसा भवन्ति ।

(२) रञ्जनप्रधानास्तु करुणहास्याद्भुता अवरकोटिकेषु रूपकेष्वङ्गिनो भवन्ति ।

(३) शान्तभयानकबीभत्सास्तु अङ्गरसा एव गौणा भवन्ति ।[1]

पुमर्थसाधनेन रञ्जनवैशिष्ट्येन चोभयविधः शृङ्गारो लोके सर्वश्रेष्ठः प्रतिष्ठित ।

## शृङ्गारः

शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥

ध्वन्यालोके २७

शृङ्गाररसो संसारिणा नियमेनानुभवविषयत्वात् सर्वरसेभ्य. कमनीयतया प्रधानभूत. । शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्ता हि विधेया. सुखं विनयोपदेशान् गृह्णन्ति, इत्यनेनानन्दवर्धनाचार्यस्य मतेन कवीना शृङ्गारितरचनाप्रवृत्तिर्नाटकेषु सुप्रतिष्ठितैव शाश्वतसम्मानमर्हति रसिकानाम् ।

शृङ्गारस्तु बहुविधो भवति । भरतानुसारेण सम्भोगो विप्रलम्भश्च शृङ्गारस्य द्वौ भेदौ । धनञ्जयस्तत्र सप्रमाणं योजयति अयोगनामकं शृङ्गारभेदम्[2] —

---

१. शान्तरसप्रधाना नाट्यकृतयोऽभिनवगुप्तस्याज्ञाता आसन् ।

२. ना० शा० ६ ३१ अधिकृत्य भारती ।
अयोगो विप्रलम्भाद् भिन्न एव यतो हि नाम विप्रलम्भस्तु वियोग एव । तत्र प्रथमं योगो भवति । पश्चाद् वियोगः । अयोगस्तु नायिकायोगात् पूर्वमेव भवति । गौरी-शिवयोः प्रणयपद्धतिरुदाहरणम् ।

तत्रायोगोऽनुरागेऽपि नवयोरेकचित्तयोः ।
पारतन्त्र्येण दैवाद्वा विप्रकर्षादसंगमः ॥ दशरूपके ४.५१

नाट्यार्थं सम्भोगात्मकः श्रृङ्गारः कवीनां न तावन्मात्रं स्पृहणीयो यावन्मात्रमयोगात्मको विप्रलम्भात्मको वा भवति । तद्यथाभिनवगुप्तेन ध्वन्यालोकलोचने प्रमाणितम्—

सम्भोगश्रृङ्गारान्मधुरतरो विप्रलम्भः ।[1] नाटकेषु प्रायशो नायिकाया दर्शनादयोग-श्रृङ्गारस्य स्थितिर्दीर्घायामा नियते यावन्नायको गर्भसन्धौ शाश्वतिकं प्राप्नोति । इयमचिरावस्था सम्भोगस्याङ्गुलिगणनीयाभिः पङ्क्तिभिरेव कविभिर्वर्ण्यते । पश्चाद् विमर्शसन्धौ निर्वहणसन्धौ च तस्याः शाश्वतप्राप्तये प्रयासः फलोन्मुखतां याति । तद्यथाभिज्ञानशाकुन्तले प्रथमाङ्कादारभ्य तृतीयाङ्कस्य पादत्रयं यावन्नायकयोरयोगावस्था वर्णिता । तदनु गान्धर्वविवाहविधिना तयोर्मिलनं कतिपयपङ्क्तिभिरेव वर्णितम् । पुनश्च पञ्चमाङ्कादारभ्य सप्तमाङ्कं यावत् तयोर्विप्रलम्भ एव प्रपञ्चितः ।

श्रृङ्गारस्य सर्वासां स्थितीनामुत्कर्षं विधातुं प्रच्छन्नकामितामेव कवयः स्पृहयन्ति । तत्र भासस्याविमारके कालिदासस्य मालविकाग्निमित्रे, हर्षस्य रत्नावलीप्रियदर्शिके चानुत्तमानि सन्ति रससमृद्धिदृष्ट्या प्रच्छन्नकामित्वेन ।

काचिन्नवीनेव सरणिः श्रृङ्गारस्य प्रवर्तिता भासादिभिः, ययामृतापि नायिका मृतवद् विभाव्यते नायकेन । स्वप्नवासवदत्ते वासवदत्ता, कुन्दमालायामुत्तररामचरिते च सीता विप्रलम्भस्याश्रयभूता दृश्यन्ते, नायकश्च पुनरुदयनो रामश्च करुणस्याश्रयीकृतौ नितरां रसावर्जकौ । तत्रेर्ष्यामानप्रवासादिभिर्विप्रलम्भस्तु स्वल्पेषु नाटकेषु दृश्यन्ते । साधारणतः शापवशात्, अपहरणात् निर्वासनाद्वा विप्रलम्भो जायते । अन्यच्च तत्र वियुक्तनायकस्याश्रयत्वं सातिशयं वर्णितम् । यथा उत्तररामचरिते निर्वासिता सीता रामस्य शोकभावमावहति ।

प्रकरणे सबाधा श्रृगारप्रवृत्तयः सविशेषमुद्दामरूपं बिभ्रति । तत्र प्रतिनायकस्य विरोधचेष्टां निराकर्तुमिव नायको नायिका चावस्थावैविध्यं प्रापितौ श्रृङ्गाररस्य तस्यानुभावसञ्चारिणां च वैचित्र्यं भृशं निदर्शयन्ति ।

नाटिकायां श्रृगारस्य मृदुतमं स्वरूपं नायकस्य प्रच्छन्नकामितया प्रवर्तते । सैव प्रच्छन्नकामिता भाणे प्रायशः सातिशयं निबध्यते । तत्र नायिकाया अनुरागस्तु हार्दिको नास्ति । अत एव श्रृङ्गाराभास एव भाणे दृढमूलो भवति ।

---

१. ध्वन्यालोके २.८ अधिकृत्य ।

तथापि विटाना नायिका. प्रति सम्प्रसक्तिः, ता. प्राप्तुं योजनावैविध्यं सङ्गमाभीप्साश्चानुभावसञ्चारिणा विभावाना च चमत्कारं वर्धयन्ति । भाणे तु वेश्याविटादीना कश्चिदसाधारण एव संसारो विलसति ।

समवकारे धर्मार्थकामात्मकास्त्रिविधाः शृङ्गारा उपकल्पिताः । तत्र कामशृङ्गाराय परस्त्री नायिका भवतीति शृङ्गाराभास एव ।

ईहामृगे वीथ्याञ्च शृङ्गारो मुख्यो रस शास्त्रानुसारेण भवति । एतद्विधाना प्राचीन रूपकाणा प्रायोऽभाव एव साम्प्रत प्रतीयते ।

## उत्तमयुवप्रकृतिः

भारतानुसारेण शृङ्गारो रस स्त्रीपुरुषहेतुक उत्तमयुवप्रकृति । संस्कृतनाटकेषु अग्निमित्रादयो युवानो न सन्ति । तथापि तेषा नायकत्व महाकविभिर्दर्शितमिति नोचित प्रतिभाति ।

## वीररसः

वीररसालम्बनानि सन्ति महाभारतानुसारेण—

यज्ञशूरा दमे शूराः सत्यशूरास्तथापरे ।
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ॥
बुद्धशूरास्तथैवान्ये क्षमाशूरास्तथा परे ।
आर्जवे च तथा शूराः शमे वर्तन्ति मानवाः ॥
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः
गुरुशुश्रूषया शूराः पितृशुश्रूषयापरे ।
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथापरे ॥
सांख्यशूराश्च बहवो योगशूरास्तथापरे ।
अरण्ये गृहवासे च शूराश्चातिथिपूजने ॥

अनुशासनपर्वणि ७४.२२–२७

वीराणां चेष्टया न केवल ते अपितु व्यक्तिश समष्टिश्च लोक उन्नीयते । अत एवोन्नत्यभिलाषिणा चित्तवृत्तिरुत्साह एव विजयते ।

वीररसस्तु रामायणीय महाभारतीय-नाटकेषु भृशायते । भासस्य बालचरिते, अभिषेके, प्रतिमाया पञ्चरात्रे च वीरस्य वैचित्र्यमवलोक्यते । मध्ययुगे जयसिंहसूरेः 'हम्मीरमदमर्दनम्' उत्कृष्ट वर्तते । तथैव गङ्गादासप्रतापविलासा [illegible] एव वीररसपोषक ।

युद्धवीरनायकानां चरितानि साधारणतो लोके गीयन्ते । नास्ति तत्रापरविधवीराणामप्युपेक्षा संस्कृतनाटकेषु । तथा हि सत्यवीरस्य हरिश्चन्द्रस्य कथामाश्रित्य बहूनि नाटकानि विरचितानि मध्ययुगे ।[1]

मृच्छकटिके चारुदत्तो मुद्राराक्षसे चाणक्यश्च वस्तुतो वीरा एव । तत्र चारुदत्तस्य औदार्येण प्रतिज्ञापरिपालनेन च, चाणक्यस्य बौद्धिकप्रकर्षेण राष्ट्र-समृद्धि प्रयत्नेन च धीरोदात्तत्वं समीहितम् ।

धीरोदात्त एव नाटकस्य नायकः स्यादित्यनेन शृङ्गारप्रधानेष्वपि नाटकेषु कथानुसारेण धीरललितस्य धीरोदात्तत्वं प्रमाणयितुं क्वचिदभिधयान्यत्र व्यञ्जनया च वीररसस्य विभावादयः प्रधानतया प्रदर्श्यन्ते ।

शृङ्गारपरायणतयैव कश्चिन्नायको धीरोदात्तो भवितुमर्हति । वीरत्वेनैव धीरो-दात्त्यं सिध्यति । अत एव शृङ्गारपरेषु नाटकेष्वपि नायकस्य धीरोदात्त्यं प्रति-पादयितुं नातिविस्तरैरपि वीररसोचितप्रकरणानि संनिवेश्यन्ते । यथाभिज्ञान-शाकुन्तले नाट्यकथानुसारेण धीरललितोऽपि नायको बलभित्सख्येन, तपोविघ्न-विनाशेन,[2] रक्षणेन[3], इष्टिविघ्नकारिणा रक्षसा दलनेन वीर एव शाश्वतरूपेण सर्वथा धीरोदात्तः ।

## रौद्रः

अमसृणोऽपि दीप्तिमयो रौद्ररसोऽभिनयसाकल्येनामन्द एव गणितः । अभि-नवगुप्त प्रथयति—एवं तावद् वीररौद्रशृङ्गारा यथास्वं पुमर्थत्रयप्राणभूतत्वेन वर्तमानाः[4] । सोऽयं रसो वेणीसंहारेऽङ्गीभूय विलसति । अन्यत्र च समवकारे, डिमे, व्यायोगे, ईहामृगे च रौद्रप्राधान्यं दृश्यते । रौद्रस्य क्षेत्रं वधो युद्धात्मक एव कतिपयनाटकेषु सम्यक् चित्रितम् ।

---

१. क्षेमीश्वरस्य चण्डकौशिकम्, रामचन्द्रस्य सत्यहरिश्चन्द्रश्च लोकचरितोन्नयने सर्वंकषे स्त. ।

२. कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १ १४
अन्येऽपि तत्रैव ७.३,३३, ६ २६,३०

३. आहितभूमिभारः (दुष्यन्तः) ५.४
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् । ५.६
शमयति परितापं छायया संश्रितानाम् । ५.७
आर्तानां भयमपनेतुमात्तधन्वा ॥ ६ २७

४ ना० शा० १८.११० अधिकृत्य भारती ।

यद्यपि रौद्रस्य स्थायी भावः क्रोधो रिपु-भृत्य गुरु-प्रियादीनवलम्बते, तथापि रिपुं विहायान्यानि आलम्बनानि विरलमेव नाटकेषु गृहीतानि।[1] क्रोधस्यानुभावा बहुविधाः सर्वाङ्गीणाः सन्ति। यथा विकटभ्रुकुटी, दष्टोष्ठं, हस्तकम्पः, स्वभुजप्रेक्षणं, भूरिभर्त्सनमक्षिविस्तारः, विकृतनेत्रं चाभिनयसमृद्ध्यर्थं भृशं प्रभवन्ति रोचनत्वात्। रौद्रस्य त्रयो भेदा —नेपथ्यजः, आंगिकः, स्वभावजश्च नाटकेषु प्रचुरं विलसन्ति। रौद्रानन्तरं करुणो विलसति।

## करुणः

करुणस्तु माधुर्यगुणेन शृङ्गारसम एव। 'एको रसः करुण एव' इति भवभूतेर्वचनं नाटके तस्याङ्गित्वं प्रतिपादयति। संस्कृतनाटकेषु केवलमुत्तमा एव नायकाः करुणस्याश्रयभूताः संलक्ष्यन्ते। तेषां मानसिकः करुणः प्रधानम्[2]। उत्तररामचरिते रामः, स्वप्नवासवदत्ते, तापसवत्सराजे चोदयनः कारुण्यप्रतीकाः रसमेनमुच्चैः प्रतिष्ठापयतः। एतेषु नाटकेषु वास्तविकः करुणो नास्त्येव। तत्र करुणेन सह नायिकानां त्यागादर्शः प्रक्रियते। अन्यच्च संविधानकौशलेन मध्ये मध्ये नायिकानां पार्श्ववर्त्तनमपि प्रकटीकृतं येन कारुण्यं शिखरायते।

रौद्रस्य चैव यत्कर्म स ज्ञेयः करुणः। ना० शा० ६.४५

नैतत्सर्वं सत्यं प्रतिभाति। यथोत्तररामचरिते रौद्रस्य कथापि नास्ति किन्तु करुणो विजृम्भते तत्र।

अभिनवगुप्तानुसारेण करुणस्तु रञ्जनाप्रधानः[3]। उत्सृष्टिकाङ्के करुणस्य बहुलता भवति।

## अद्भुतो रसः

अभिनवगुप्तानुसारेण, रञ्जकोऽयमद्भुतो रसो भाणे प्रधानम्। अद्भुतरसस्य प्रोयमाणता सातिशयेति निश्चप्रचम्। विक्रमोर्वशीयेऽपि अद्भुतोऽङ्गीति पाश्चात्यविदुषा मतम्। अद्भुतार्थं देवार्थानां प्रक्रमः, आशातीतफलप्राप्तिश्चोपक्षेते।[4]

---

१. चण्डकौशिके परीक्षणीयो हरिश्चन्द्र क्रोधस्यालम्बनं।

२. त्रिविधः करुण —मानसिकः, आङ्गिकः, वाचिकश्च। एतेषु चाद्यः उत्तमपुरुषे इति संगीतचन्द्रिकायाम् १८८५—१८९८

३. ना० शा० ६.१०० अधिकृत्य भारती।

४. कामन्दकी—एवमेतत्। अस्ति वा कुतश्चिदेवंभूतमहाद्भुतं विचित्ररमणीयोज्ज्वलं प्रकरणम्। मालतीमाधवे १०.२३/२४

भरतानुसारेण—

निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः। ना० शा० १८·४३

तत्र प्रायोऽन्तिमेऽङ्के विभावस्तु दिव्यजनदर्शनं प्रायो भवति। तथा हि—

नारदस्य—अविमारके, विक्रमोर्वशीये

पृथिव्याः—कुन्दमालायाम्, उत्तररामचरिते च।

गौर्याः—नागानन्दे

गङ्गायाः—उत्तररामचरिते।

धर्मस्य—चण्डकौशिके

चन्द्रचूडस्य कुन्दप्रभस्य च—सत्यहरिश्चन्द्रे

न केवलमन्तिमेऽङ्केऽपितु नाटकादिष्वाद्यन्तं दिव्यप्रकृतीनां चरितेनाद्भुतरसो भूयो भूयो विलसति।[1]

न केवलं देवा अपि तु पशु पक्षिणः विद्याधराः, पिशाचाश्च पात्रीकृता विस्मयमावर्जयन्ति। आश्चर्यचूडामणिनाटके तु प्रधानो रसोऽद्भुत एव विलसति।

अन्यच्च निगूढरहस्योद्घाटनेनाद्भुतरस उन्नीयते कतिपयनाटकेष्वन्तिमेऽङ्के। यथा—

१. वासवदत्ता जीवतीति स्वप्नवासवदत्ते।

२. सीता जीवतीति कुन्दमालायामुत्तररामचरिते च।

३. उर्वश्याः पुत्रोऽस्तीति विक्रमोर्वशीये।

४. चाणक्यो निवेदयति यत् राक्षसश्चन्द्रगुप्तस्य मन्त्री भवेदिति मुद्राराक्षसे।

५. हरिश्चन्द्रस्य परीक्षा देवैः कृतेति चण्डकौशिके।

इन्द्रजालादिभिर्विस्मयो जन्यते बहुषु रूपकेषु। अविमारके नायकोऽग्निं प्रविशति किन्तु न दह्यते। तस्मै विद्याधरोऽङ्गुलीयकं ददाति येन सोऽदृश्यो भवति। रत्नावल्यां मालविकाग्निमित्रे च राजप्रासाद एवाग्निना ग्रस्यते किन्तु न कश्चित्तत्र दह्यते। अनेन प्रकारेणाद्भुतस्य रमणीयता कविहस्ते बहुलीकृता प्रतिभाति।

---

१ बालचरिते प्रायः सर्वेष्वङ्केषु तादृशानि पात्राणि रङ्गे वर्तन्ते। यथा द्वितीयेऽङ्के कात्यायनी सपरिवारा प्रविशति। तत्र कुण्डोदर-शूल-नील-मनोजवादयः कंसं हन्तुं प्रविशन्ति। अभिज्ञानस्य पञ्चमाङ्के शकुन्तला ज्योतिषा नीयते।

महता प्रभावेणापि विस्मयो जन्यते। यथा बालचरिते बालकृष्णस्य प्रभावेण रात्रौ वसुदेवस्य मार्गे दीपप्रभा जन्यते, यमुनाजलं द्विधा छिन्नम्, वन्दस्य पांसून् मार्गयन्ती धरणीं छित्वा युगप्रमाणा सलिलधारोत्थिता। तत्र गरुडो दिव्यानि पञ्चायुधानि च बालकृष्णप्रभावेण प्रविशन्ति। ते वदन्ति मनुष्यवत्।

नाटकेऽस्मिन् विस्मयमावहन्ति पशुरूपधारिणोऽसुरादयः ये संस्कृतं वदन्ति किन्तु पशुवदाचरन्ति। यथा—अरिष्टर्षभस्तु गोवृषाधमोऽस्ति। स कृष्णं प्रतिवदति—

> शृङ्गाग्रकोटिकिरणैः धमिवालिखंश्च।
> शत्रोर्वधार्थमुपगम्य वृषस्य रूपम्।
> वृन्दावने सललितं प्रतिगर्जमान—
> माक्रम्य शत्रुमहमद्य सुखं चरामि॥ ३.६

नाटकेषु छायातत्त्वेनाद्भुतार्थो भृशं वर्धते। तत्र दूताङ्गदे मायासीता रावणं प्रति तस्य प्रेयसीव संवदतीति महदाश्चर्यकरम्।

## बीभत्सः

बीभत्सं शान्तं च समं निदर्शयन्नभिनवगुप्तः स्पष्टयति—

एतेषु प्रयोगेषु शान्तबीभत्सरसौ तु चरमपुमर्थयोगात्तत्र च सर्वस्य नाधिकारोऽपि कस्यचिदर्थाश्रमजन्मनोऽधिकारान्नाटके यद्यपि तत्फलप्रधानतया प्राधान्यमवलम्बेयातां तथापि नासौ प्रचुरप्रयोग इति तयोः पुरुषार्थप्राणितयोरपि वीरादिरसान्तराध्यावापेनावस्थापनम्।

अत एव बीभत्सस्याङ्गी रसो न भवति नाटकादिषु किन्तु तस्याङ्गरसत्वं तु प्रतिष्ठितमेव। मालतीमाधवे—उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसानि इत्यादि तथा अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण—इत्यादि वीरचरिते।

वेणीसंहारस्य तृतीयाङ्कस्य प्रवेशके राक्षसौ महाभारतीययुद्धकर्मणो बीभत्सं स्वरूपं वर्णयतः—

> हतमानुषमांसभारक-कुम्भसहस्रवसाभिः सञ्चिते।
> अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु॥

इत्यनेन नाटके बीभत्सस्यापि समावेशो यथा स्यात्तथा प्रयतनीयमिति भट्टनारायणस्य शास्त्रीयापेक्षा मनसि कृता वर्तते। स तु रौद्ररसात्मके नाटके-

ऽस्मिन् द्वितीयेऽङ्के शृङ्गारमङ्गरसत्वेन पुरस्करोति। एतदपि नियमापेक्षयाऽयुक्तं प्रतिभाति।

चण्डकौशिके तु बीभत्सस्येतिवृत्तात्मकः समावेशो भूयो भूयो नाटकीयं प्रभावं सुरभीकरोति। तस्य महिमा हरिश्चन्द्रमुखेन राजतेऽत्रोविधम्—

सन्ध्यावध्यासशोणं तनुबहलचिताङ्गारमन्दार्कबिम्बम्।
तारानारास्तिकीर्णं विशदनरकरङ्कायमाणोज्ज्वलेन्दु॥
हुत्प्रसक्तं चरोघ घनतिमिरमहाधूमधूम्रानुकारं।
जातं लीलाश्मशानं जगदखिलमहो कालकापालिकस्य॥ ४.१५

## भयानकः

भयानकरसस्य नाट्येऽङ्गित्वं नास्ति। केवलमङ्गरस एव महाकविभिः स समादृतः। अभिज्ञानशाकुन्तले 'ग्रीवाभङ्गाभिरामम्' इत्यादि श्लोके 'धर्मार्थं विलसति गजः स्यन्दनालोकभीतः' इत्यादि श्लोकेषु च भयानको रसो विलसति। मृच्छकटिके खुण्टमोटको नाम वसन्तसेनायाः गज उन्मत्त एव लोकान् भाययति। वनमानुषो रत्नावल्यां सर्वानन्तःपुरजनान् भाययति।

## हास्यः

नाटकेषु हास्यस्य परिधिर्भूयो भूयो विलसति। भरतानुसारेण—

(१) शृङ्गाराद् हि भवेद् हास्य। ६ ३९

(२) शृङ्गारानुकृतिर्या तु स हास्यस्तु प्रकीर्तितः। ६ ४०

अभिनवगुप्तानुसारेण

(१) करुणाद्याभासेष्वपि हास्यत्वं सर्वेषु मन्तव्यम्। अनौचित्यप्रवृत्तिकृतमेव हि हास्यविभावत्वम्।

(२) शान्ताभासो हास्य एव प्रहसनरूपः।

रञ्जकरसेषु हास्योऽनुत्तमः प्रहसने तु अङ्गिरस एव। प्रायः सर्वविधेषु रूपकेषु हास्योऽङ्गरसत्वेन सुप्रतिष्ठितः। विदूषकस्तु हास्यस्य प्रधान उन्नायकः स्वरूपेण, नेपथ्येन, वचसा, कर्मणा च भवति। अन्यानि पात्राण्यपि प्रायशः स्ववचसा कर्मणा च हास्यसर्जने नियोज्यन्ते कविभिरिति पुस्तकेऽस्मिन् नाट्ये हास्ययोग इति परिच्छेदे सविस्तरं निर्दिष्टम्।[1] सूत्रधारोऽपि नाट्यारम्भे

१ शकारः, विट, भट, द्यूतकारः, बाल, सूत्रधारश्च स्वस्वकर्म कुर्वन्तोऽपि हास्यसर्जनायामभिनवकार्यवृत्तिषु व्यापृता सन्ति।

एव हास्यनिष्पादनेन प्रेक्षकान् प्रमोदयति मृच्छकटिकादिषु । हास्यस्यालम्बनानि आश्रयाश्चोत्तमकोटिकानि भवन्ति ।

भगवदज्जुकीय आचार्यो हास्यस्यालम्बनं भवति । पञ्चरात्रेऽर्जुनादयो हास्यस्याश्रयाश्चालम्बनाश्च सन्ति । घटोत्कचो मध्यमव्यायोगे हास्यस्य [illegible]लम्बन एव ।

संस्कृतरूपकेषु परस्थो हास्यो भूयायते[1] । अतएव प्रहसनादिषु रङ्गपीठे पात्राणि न हसन्ति । तेषां विकृतवेशालङ्कारधाष्टर्यलौल्यकुहकासत्प्रलापव्यङ्गदर्शनदोषोदाहरणादिभि प्रेक्षका हसन्ति । भरतानुसारेण—

विकृताचारैर्वाक्यैरङ्गविकारैश्च विकृतवेशैश्च ।
हासयति जनं यस्मात्तस्माज्ज्ञेयो रसो हास्य ॥ ६५०

अत परमपि हास्यस्य क्षेत्रं नाटकेषु विभाति ।

## शान्तो रसः

शान्तरसस्याङ्गित्वं यद्यपि अभिनवगुप्तेनापि निषेधितं तथापि बहुषु नाटकेषु शान्तोऽङ्गित्वेन चमत्करोति ।[2] प्रबोधचन्द्रोदये मोहराजपराजये, धर्माभ्युदये, सङ्कल्पसूर्योदये, धामामृते च शान्तरसप्रधाना॰ प्रधाननायकाः सन्ति ।

शान्तरसस्य प्रतिष्ठा रूपकेषु सुदूरप्राचीनयुगेऽपि अभवत् । अश्वघोषस्य सारिपुत्रप्रकरणे शान्तो रसो विलसति ।

## आश्रयः

रसप्रकरणे नास्ति तत्राश्रयस्य सविशेषं विवेचनम्, यतो हि शृङ्गारवीररौद्रेषु रसेषु आलम्बन-विभावा एवाश्रया अपि भवन्ति । ते तु महत्त्वपूर्णा रसाः । किन्तु शेषेषु रसेषु आश्रयास्तु भिन्ना एव आलम्बनविभावेभ्यो भवन्ति । आश्रयेण तन्मयीभूताः प्रेक्षका रसास्वादं कुर्वन्ति । अतएव तेषां महिमा विचारणीय ।

नाट्ये तु महतामेव भावानुभावा रससर्जनाय प्रायशो वर्ण्यन्ते । अत एव

१. द्विविधश्चायं हास्य.—आत्मस्थः, परस्थश्च । यदा स्वयं हसति तदात्मस्थ. । यदा तु परं हासयति तदा परस्थ । ना० शा० ६.४८/४९

२. अभिनवगुप्तः स्पष्टयति यद् भरतो नव रसान् मनुते । ना० शा० १२.७६ अधिकृत्य भारती ।

कवि प्रेक्षकान् प्रभविष्णुतमांश्च रसान् तेषामाश्रयांश्च काव्यार्थं गुम्फयितुं विचिनोति।

आश्रयेण सहृदयप्रेक्षकाणां तन्मयीभावो भवति। अतएव तस्य नाटकेषु महिम काव्योद्देश्यमुत्कर्षयति।

## अनुभावाः

अनुभावास्तु आश्रयेषु समुत्थिताः सन्तः तान् प्रेक्षकाणां विषयीकुर्वन्ति। संस्कृतनाट्येऽनुभावानां सम्पत्तिः साधु समृद्धा विलसति।

## संचारिभावाः

रत्यादेरङ्गिनो भावा अङ्गाः स्युर्व्यभिचारिणः।

व्याप्नुवन्ति स्थायिनमिति व्यभिचारिणः, स्थायिभावा रसा भवन्ति। सञ्चारिणस्तानुपकुर्वन्ति। यथा महार्णवे लघुकल्लोला महाकल्लोलानुपगच्छन्ति।

रतेः शोकस्य च वैविध्यात्तयोर्व्यभिचारिणो बहुसंख्यका वर्ण्यन्ते।[1]

स्वल्पा एव व्यभिचारिणः स्वत एव रञ्जका भवन्ति।[2] किन्तु अरञ्जका अपि सञ्चारिणो रञ्जकस्थायिभिः संयुक्ता रसनिष्पत्तौ सहाया भवन्ति।

इमे सञ्चारिणो वृत्त्यनुसारेण सन्ध्यङ्गानि सन्ध्यन्तराणि च विचित्रयन्ति।

---

१. रतेः सञ्चारिणः आलस्यौग्र्यजुगुप्सावर्ज्यां शेषा ऊनत्रिंशत्संख्यकाः सन्ति।

२. हर्षः, धृतिः, मतिरेव केवलं रञ्जकाः सन्ति।